**D.** *Authorship of Dramas.* The question whether the author of dramas and epics is the same Kalidasa or different persons is obsolutely baseless, for (i) the instances of identical words, ideas, images and expressions running through all the seven works of Kalidasa are numerous (ii) the distinctness of Kalidasa's vision is his own and it is reflecting in his all the six, if not seven, masterpieces, in which I have repeatedly mentioned and pinpointed such similarities in the footnotes.[1] (iii) Kalidasa's central theme in all the works is one and the same i.e. 'To creat a noble and flawless National Leader' by a conscious and delibrerate effort in the image prescribed by Indian Dharma-Śastras and Rāja-Śastras. This theme gets a well planned handling in the three major works of the author : K. Ś. and R. The characters of divine heads like Saptarṣi [in K.], Viśvāmitra, Kaṇva and Mārīca [in Ś.]· Bharatamuni and Nārada [in Vi.] and Vasiṣṭha [in R.] in Kalidasa are turned and twisted by a conscious choice or the final aims—'the birth (i) of Kumāra in K. (ii) of Sarvadamana Bharata in Ś., (iii) of Āyuṣa in Vi. and (iv) of Raghu in R. Thus almost all the works of Kalidasa are the stories of 'Kumāra-Sambhavam' (my note-3 p. 254) under the different headings and shapes.

The Epic named Kumārasaṁbhavam is the story of the marriage of Śiva and Pārvatī and both are divine in nature. Characters of Vi. are semi-divine and so are of Ś. In R. the divinity is kept aside from the characters and the poet's concern is only with the human element of their nature. With divine grace won by his own Tapas = तपस् King Dilīpa attains a heroice son like Raghu = रघु whose march cannot be checked even by Oceans, Mountains and Sky, who challenges the Lord of Heaven: Indra or Mahendra and overcomes him by his own valour alone. An aweful weapon like thunder or Vajra fails on him. On the other hand as soon as he decides to invade Kuvera, another Lokapāla, gold showers in Raghu's palace.

1. Specially in my book 'कालिदासः : मानवशिल्पी महाकविः' = 'Kalidāsa is a great poet because he is a builder of Man'.

Similerly Kumāra-Kārtikeya will come forward when all the gods exaust themselves. He carries the divine troops like a Bridegroom carrying his bride. Raghu though a human being, is enriched with the same divine valour and we can assign him the same title Kumāra = कुमार in the words of Kālidāsa himself

i. हरेः कुमारोऽपि कुमारविक्रमः [R. III-55] and
ii. उमावृषाङ्कौ शरजन्मना यथा [R. III-23].

In Vi. Purūravas, who had killed the demon Keśin and protected Urvaśī from his clutches, fails to hunt even a vulture which is shot down by his son Āyuṣa of about 12 years. One may remember here the इन्द्रविजय—episode of R., where the father : Dilīpa is trying to become Indra and the son : Raghu defeats the same Indra. What a deep irony is implied here? Father, by foresight and wisdom of his son will be directed from heaven to the solvation. Dilīpa after this renounces the idea of winning the Kingdom of Heaven by being Indra.

Hence if K. is Kārtikeyasambhavam than R. is Raghu-sambhavam, Vi. is Āyussambhavam and Ś. is obviously 'Sarva-damanan-Bharata-sambhavam. This way in all the works irrespective of their genre (drama or epic) poet's mind is warking upon the same theme and the same lines.

**E.** *Order of works.*

In Ṛ., Me. and Mā. Kālidāsa depicts nature in both its forms overt and covert i.e. the nature of outer world and the collective unconsciousness of mankind. Kālidāsa starts with outer nature in Ṛ. and proceeds gradually towards the inner nature which will reach its peack in R. This is why the works are here arranged in the order Ṛ., Me., K., R., and Mā., Vi. Ś. In Poetry Kālidāsa commences, here, with Ṛ. and ends with R. In drama he starts with Mā. and stops with Ś. Here I think Kālidāsa on his path towards the National theme of Kumāra-sambhavam = कुमारसंभवम् starts with overt nature and selects the covert nature as his future field. Here we remember the first verse of Ṛ. 'प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः' etc. R. is an epic

of solar-race and all the other works belong to the lunarrace. The hero of Mā., though being Brāhmaṇa by birth, is no more in character than those of other heros of other dramas. In this first drama Mā. only the levity of human nature is depicted. But here the planned theme of Kumāra-sambhavam is not forfeited. Agnimitra, the hero of the drama is already having a son of heroic valour : Vasumitra. Hence no child born of Mālavikā and Agnimitra in shown in the drama.

## V

A. I am glad to have Kālidāsa's works printed in the present form and deem myself fortunate for the fulfilment of my personal need regarding the dependable text of K. L. in one handy volume.

B. (i) It beffals on me as a sacred duty to remember Pt. Madanamohana Ji Mālavīya whose soul : Banaras Hindu University is fortunate enough to publish the complete works of one of the Greatest Poets world ever produced : Kālidāsa. Our gratefulness is due to Pt. Sītarāma Caturvedī too who served us with his Kālidāsa-granthāvalī for past three decades.

(ii) My thanks are due, here, to the present Vice Chancellor Dr. K. L. Srīmālī and his learned advisor Śri L. O. Joshi whose Co-operation has been highly encouraging and stimulating. The Ratna Printers, Pt. Kapiladeva Giri and my students deserve my hearty thanks who have finished the printing work in record time, helped me in finalising the Prakṛta words with proofreading, and preparing the appendices respectively.

C. I regrete for the printing mistaks and request the readers to correct the text with help of the errata, appendix and variants.

D. Currections, suggestions, additions and ovservations are invited from expert readers. Actually a team of scholers is needed for the edition-work of such a great, vast and old literature.

## Vi

## WHAT KALIDASA IS

I will sum up with my observations on Kalidāsa—

Kalidāsa is one of the greatest humanists, world ever produced. He is a staunch devotee of Humanity and Mankind. Though flourished in the days of monarchy, Kalidāsa beleives in MONESTARY and not in Monarchy as such. Kalidāsa's Monarch is a benevolant servant of his subjects, Kalidāsa's harem is meant for the battle-fields, his minute observations on human personality (female and male) are the exposition of 'National Health' and 'National Beauty', to bring Man ultimate and universal VICTORY. Kalidasa's Man is proud of his devotion to his duty whatever may be its nature. Lastly Kalidasa has a responsible and balanced but realistic sympathy for all the classes of society. Following is the message of Kalidasa to the modern world of powerful weapons :

- बलमार्त्तभयोपशान्तये [R. VIII. 31]
- आर्त्तत्राणाय वः शस्त्रम्, न प्रहर्त्तुमनागसि ॥[1] [Ś. I. 11.]

'Your mights and weapons are meant to protect and serve the needy world, and not to strike at the innocent, harmless and at the clean hands'.

And following is the song of social welfare of Kalidasa :

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु ॥ [Vi. V.25]

May *all* overcome their difficulties.
May *all* experience bliss.
May *all* fulfill their desires.
May *all* enjoy everywhere.

Banaras Hindu University — R. P. Dwivedi
5. 2. 76

1. आर्त्तानां भयमपनेतुमात्तधन्वा दुष्यन्तः Ś. VI.

# संपादकीयम्

'कालिदासग्रन्थावली' नाम कालिदासस्य निरनुवादानि सटिप्पनकानि च सप्त काव्यानि । विशेषश्चात्र चत्वारि श्रव्याणि त्रीणि च दृश्यानीत्याहृत्य सप्तानां संपरिष्कृतमूलपाठानां काव्यानामवंहीयान् पुस्तबन्धः । परिष्कारश्चात्र कालिदासोचितस्य वाग्योगस्य संप्रत्यभिज्ञानमुपश्लेपणम् । उचितत्वं चात्राभ्यस्ततत्वम् । तदपि च कविगतम्, अस्मदादिगतं च । तत्र पूर्वस्य पद-वाक्य-वाक्यार्थ-वाक्यार्थविच्छित्ति-प्रबन्धाङ्गसंघटन-संवाद इति संज्ञानान्तरम्, अपरस्य चैतेषां संप्रतिपत्तिः, एतत्संवादस्यानुसन्धानं चेति । ततश्च कालिदासस्य प्रबन्धादिसंवादमनुसन्धाय तदङ्गभूतानां वाक्यार्थाङ्गानां संप्रत्ययेन कालिदासवाग्देवतापरामर्श एवात्र परिष्कारो निरुपाधिकसाक्षात्कारापरपर्यायः । अनया संवाद-संप्रतिपत्ति-चालन्या नीरक्षीरीं न्यायीकृत्य निष्पन्नेयं सयुक्तिक-पाठ-तद्भेद-प्रवृत्ति-निष्पादित-सौभगविशेषा प्रतिप्रसूतिः कालिदासकवितायाः । एवं चाऽगतार्थेयमितः पूर्वं प्रवर्त्तितैः पं. सीतारामचतुर्वेदी, साहित्याकादमी, प्रा०ए-शार्पमहोदयश्चेत्येवंप्रभृतीनां कालिदासकाव्यप्रकाशनैः ।

१

१. आधाराः । भाषा हि स्वतः पङ्गुं प्रति काष्ठपादिकेव मन्दसामर्थ्यैव याथार्थ्यसंपरिज्ञानेऽनर्थज्ञं प्रति । अर्थज्ञाय पुनः सैवेयं संवृताननापि सुभ्रूः स्वाकूतमिव प्रकाशयत्येव कृत्स्नमपि रहस्यजातम् । एवं च मूल-तदन्तर-विवेकः पूर्वं कविमर्मप्रत्यभिज्ञानमप्यपेक्षते । प्रमाणान्तराणि हि तदनन्तरप्रत्यासत्तिकानि । तेषु (i) कविकालिक-लिपि-ज्ञानं प्रथमं, (ii) हस्तलेखा द्वितीयं (iii) उल्लेखाश्च तृतीयम् । साम्प्रतं हि सुमेधसो द्वितीयमेव प्रमाणं प्रथमयन्ति तत्रापि च बाहुल्यम् । तत्र

क. ब्राह्मीलिपौ हि  इति कौतुकं

 इति च केतकं

लिख्यते स्म । भट्टिप्रोलु-[1] लेखादारभ्य समुद्रगुप्तस्य [ई. ४००] प्रयागाभिलेखं[2] यावद् ब्राह्मीलिपेरियमेव स्थितिः । पश्चात् पुनः शीघ्रलेखे तुकारः  एवमपि निर्मीयमाणो लभ्यते । अधुना कालिदासस्य काव्यनाटकानि लिप्यन्तरेष्वेव लभ्यन्ते

१. प्राचीनलिपिमाला: हीराचन्दगौरीचन्द ओझा ।

नतु ब्राह्मीलिपौ । तान्यपि लिप्यन्तराणि नातिचिरकाललेखानि । एवं चाधुनिकै-र्बहुतिथमन्तरमभ्यन्तरीकृत्य लिखितैर्हस्तलेखैरतितरां प्राचीन एव समये कालेन कवलितानां ग्रन्थानां याथार्थ्यपरिज्ञानं दुश्शकमेव। कालिदासो हि विक्रमसम्वत्सरा-दव्यवहितपूर्व-शुङ्गराज्यान्तिमचरणकालिक इत्यास्माकीना प्रतिपत्तिः। ततश्च ५००-वर्षानधिकप्राचीनैर्हस्तलिखितैः कालिदासकाव्यैः १६०० वर्षाणामन्तरालं कथं वा मूलमनुसन्धातुमेकपद एकोदस्येत । अत एव कौतुकस्य स्थाने केतकमिति वहुषु हस्तलेखेषु लभ्यमानमपि काव्यवाक्यार्थानौपयिकमिति चरित्रवर्धनः, मल्लिनाथः, दक्षिणावर्त्तनाथश्चेति त्रिभ्यो न रोचते, तदितरेभ्यः सर्वेभ्य एव रोचमानमपि । प्राचीनतमो दक्षिणावर्त्तः पुनः 'इदमतिश्लाघ्यविशेषणं न स्यादि'ति 'केतक'-पाठं भर्त्सयत्यपि । अथापि डेमहोदयः साहित्याकादमीमेघदूते शार्पेमहोदयश्च कालिदासलेक्सिकनमूले केतकमेव मूलतया पठतः, तमिलसिंहललिपिषु जैनहस्त-लेखेषु केतकस्यैव लाभात् । मेघे कौतुकाधानमेव कविपरिचितं 'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः' इति । केतकाः पुनरदृष्टमेघा अपि श्रावणभाद्रयोः केतकानि दर्शयन्त्येवेति नास्ति ग्रीष्मकालिकेनापाढेन, तत्रापि मेघेन, तत्र चापि कविसमयेन केतकस्य समर्थनम् । केतकं हि वर्षापुष्पमिति प्रसिद्धिः, अत एव च सुकविरेष 'पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै'–[मे. १. २३] रिति 'हसितमिव विधत्ते सूचिभिः केतकानामि' [ऋ. २.२४,]-ति च मेघासक्ति केत-कोल्लासे समर्थयति। ऋतुसंहारस्य १७, २१ इति पद्यद्वयेऽपि कविर्वर्षास्वेव केतकीं स्मरति, न चोल्लिखति ग्रीष्मादिष्वेकदापि। अतोऽस्माभिरत्र केतकमिदं मूलतया नाभिमतम् । 'मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्' इति पद्ये युष्मत्पदं सर्वत्र द्वितीयान्तमेव लभ्यते । अत्र पुनः प्रथमान्ततया पठ्यते रेखामात्र-परित्यागेन । अत्रार्थः परिवर्त्तितः । प्रस्पन्दमानचारुतातिशयश्च सः, प्रकृतद्वयौपम्य-संघटनया । यथापदमत्रानुकूल्यपरतया निनीष्यते, तद् व्यर्थमेव, अनुकूलशब्दस्य कविनैव प्रयुक्तत्वात् । हेतुवाचकत्वे पुनरुत्तरार्धे तथार्थकेन केनापि पदेन भवितव्य-मेव। नास्ति च तत् । ततो द्वितीयान्तपाठे वाक्यार्थ एव दरिद्रदम्पत्योः शिशिर-कालावगुण्ठनपट इवैकेनाकृष्टोऽपरं परिहरति ।

हस्तलेखाः पुनर्भ्रष्टा अपि भवन्ति खेदयन्ति च टीकितॄन् । अलङ्कारसर्वस्वे विमर्शिनीमारचितवान् राजानकश्रेष्ठस्तत्रभवाञ्जयरथोऽत्र प्रमाणम् । अतिशयोक्त्य-लंकारादिविमर्शिन्यामसौ मूलपाठस्य विपर्यासं स्पष्टमेवोद्गिरति। मल्लिनाथो रघुवंशस्य यं हस्तलेखमवाप तत्र नासीदेव महिमभट्टोद्धृतं हेमाद्रिदर्पणागतं 'सुरभिसंगमज'-मिति नवमसर्गीयं पद्यम् । रघुवंशस्यैव १७।७९ पद्ये मल्लिनाथः कालिदाससाहित्य-

प्रसिद्धां शेषां न जानाति, तत्र 'देवा' इति पठति । 'ससत्त्वमादाये'-ति १३-सर्गीये पद्ये स 'विवृताननत्वादि'-ति पठति, त्यजति चाम्भसः कर्मत्वम्, आक्षिपति च चञ्चुपुटं कर्मतया । 'उत्थापित' इति सप्तमसर्गीये पद्ये 'नेत्रक्रमेणे'-ति मल्लिनाथपाठः, क्रमशब्दश्च तन्मत औपम्यार्थकः । न च कालिदासेऽन्यत्रासावेवंविधेऽर्थे प्रतिपन्नः । नास्ति च तत्र नेत्रौपम्यमावश्यकम्, 'स्थिताः क्षणं पक्ष्मस्वि'-त्यादिपद्य इव क्रममात्रस्यैवात्र सुभगत्वात् । '०रेत्रं क्रमणे'-ति वस्तुतोऽत्र मूलम् । 'रेत्रं'-शब्दस्य 'नेत्र'-इति वाचनं ब्राह्मीलिपौ न न संभवि ।

मेघदूत एव मल्लिनाथवत् सुशीलकुमारडे, शार्पे, आधुनिकाश्च सर्वे 'कामार्त्ता हि प्रकृतिकृपणा' इति पाठं मूलतया नयन्ति । दक्षिणावर्त्तनाथादयोऽत्र 'प्रणयकृपणा' इति पठन्ति । उचितं च तत्, कालिदासस्य, विक्रमोर्वशीये कामार्त्तस्य पुरूरवसः चेतनवदचेतनेष्वपि प्रियाप्रवृत्तिप्रणयस्य तेनैवोपनिबद्धत्वात्, उपनिबद्धत्वाच्च तत्र 'प्रणय'-शब्दस्यैवानेकशः पुरूरवःप्रयुक्तेषु तेषु तेषु वाक्येषु 'कालिदास-साहित्ये प्रणयशब्दार्थ' इति प्रकाशितचरेऽस्मदीये लेखे, अत्र च २०३ पृष्ठपादटिप्पणे संदृब्धेषु । तृतीयचरणपर्यन्तव्यापिनो याचनारूपस्य समर्थ्यस्य वाक्यार्थस्य प्रकृति-पदेनासमर्थनं, समर्थनं च प्रणयपदेनैवेत्यत्रापरो लाभः । प्रकृतिकार्पण्यं हि चेतनाचेतन-भेदाग्रहमेव समर्थयेत्, तच्च याचना-ङ्गभूतम् न तु प्रधानम्, प्रधानं च याचनम् । अत्रास्माभिः प्रणय एव कृतः प्रणयः ।

मेघदूत एव मल्लिनाथो 'ज्योतिर्लेखावलयी'-ति पद्ये कुवलयपदाव्यवहितोत्तरीयं 'पदप्रापि' 'दलक्षेपि' इति पदद्वयं संमिश्रय पदक्षेपीति पठन् क्लिष्टव्युत्पत्त्या कर्णपदार्थे-नास्वाभाविकतया योजयतीति दक्षिणावर्त्तादिभिरभ्युपेतं दलक्षेपीत्येव पाठमत्रा-द्रियामहे ।

रघुवंशस्य ५।४ पद्ये हेमाद्रिदर्शितेषु चतुर्षु पाठेषु मल्लिनाथो 'लोकेन चैतन्यमिवे' त्यादिकं पाठमेव वेत्ति । तच्च तस्यैव सर्गस्य ३५-तम-पद्यार्थेन पुनरुक्त-भूयिष्ठम् । तत्र यदुचितं तदस्माभिरत्र गृहीतम्, हेतवश्च हेमाद्रेर्दर्पणस्य भूमिकायां वितत्य दत्ताः । अस्ति कालिदासो यजमानस्याष्टमूर्त्तिशिवान्यतमोग्रनामकमूर्त्ति-रूपतां तत्र तत्रोपनिबध्नन्ननुभूतः । ततश्चास्माभिः स्वीकृतः पाठ एव कालिदासो-चितः ।

र. ४.६७ पद्ये हस्तलेखानां बाहुल्यं 'वंक्षु-वक्षु वंक्षु'-ष्वन्यतमं बिभर्ति । मल्लिनाथस्तत्संगोत्राश्चान्ये केचित् 'सिन्धुतीरे'-त्यादिकं पठन्ति । साम्प्रतिक आक्ससनामा नदविशेष एव वक्षुः । स एव च वंक्षुः । त्रिविष्टपमार्गेण कैलासादा-वर्त्तमानस्य रघोः पारसीकाञ्जेतुं स्थलवर्त्मना जाता या यात्रा सा पञ्चापदेशीयं

सिन्धुनामकं नदं यावदेव नः संभवति । हूणादयस्तत्र न लभ्येरन्, न च लभेरन् रघोरश्वाः कुङ्कुमकेसरपटवाससौभाग्यम् आक्ससतीरमगत्वा । अत्रास्माभिर्वङ्क्षुतीरे-त्यादिकः पाठ एवोरीकृतः । हूणेषु मृतभर्तृकाणां कपोलपाटनं प्रसिद्धम् । ततो रघोः ४।६८ पद्ये पाटलं विहाय पाटनमेव हस्तलेखबाहुल्यप्रमाणितमत्र प्रमाणीकुर्महे । एवमेव 'भागीरथीं शोण इवोत्तरङ्ग' इत्यत्र 'ज्योतीरथामि'-ति हस्तलेखबाहुल्य-प्रमाणितं वाक्यार्थसङ्गतिशुभं च पाठमत्राद्रियामहे । हेमाद्रिप्रभृतिभिरपि स एव पाठ आदृतः । मल्लिनाथ एव तत्र भागीरथीप्रियः । ज्योतिरथा च शोणगामिनी सरित् । सा साम्प्रतमपि जोहिलेति नाम्ना प्रसिद्धा । अस्याः सङ्गमे स्नानं महाभारते नितरां प्रशस्यते ।

(ख) साम्प्रतं काव्यशास्त्रोद्धृतां सामग्रीमुपाददमहे । तत्र महिमभट्टः कुमारसंभवस्य ३।५५ पद्ये द्वितीयमौर्वीमिति समासे द्वितीयत्वस्य विधेयत्वं समासेन कवलितं मा भूदिति 'मौर्वीं द्वितीयामि-ति यद् विश्लिष्य पठति मम्मटोऽपि तदनुवदति मल्लिनाथे च तथैव परिवर्त्तनं लभ्यते । कालिदासः पुनः एकवेणीम् [मे. २.१] इति अनिमित्तोत्कण्ठामिति [मा. ३.१] च प्रियविशेषणसमास इति, महिमभट्टदृष्टचरो हस्तलेख एव प्राचीनतम इति चात्र समास एवादृतः । कु. ५.७१ पद्ये कथमपि 'पिनाकिन' इत्येव मुद्रितम् । तत्र कुन्तकश्लाघितो महिमभट्टविचारितश्च 'कपालिन' इति पाठ एवोचितः । यद्यपि पिनाकः कपालं चेति द्वितयेऽपि सक्थिनिर्मितत्वात् जुगुप्साजनकत्वम्, तथापि कु. ५।७८,७।३२ पद्ये कपालिपाठमेव समर्थयितुमुत्प्रेरयतः । एवं च मल्लिनाथस्य 'पिनाकिन' इति पाठः परिशेषात् शुद्धिपत्राच्च शोधनीयः ।

(ग) कुमारसम्भवे १-८ इत्यादिकानष्टावेव सर्गान् मूलतया मन्यामहे । तत्र यानि कारणानि तानि कु. ८ सर्गान्ते दत्तानि । अष्टमः सर्गो ग्रिफिथ-सहगल-प्रभृतिभिस्त्यक्तः । वामनः, धनञ्जयः, महिमाचार्यश्च तमुद्धरन्ति, मध्यवर्त्ती आनन्द-वर्धनश्च तत्र देवीसंभोगवर्णनं भर्त्सयति, मम्मटोऽपि तदनुवादे बद्धादर इति तस्य मूलत्वे नास्त्येव सन्देहः । अत्र यद् वस्तु यच्च तस्य शिष्टं समुदारकविकर्मकं च चित्रणं तत्र परिस्फुरन् प्रतिभाविशेषो यन्महाकवित्वं व्यनक्ति तदपि कालिदास-मात्रोचितमेव । नास्ति च काव्यमिदं 'तारकवधम्' ।

(घ) ऋतुसंहारं कालिदासस्यैव कृतिरिति तत्रोपनिबद्धेन वस्तुना सह कुमारसंभवाद्युपनिबद्धानां वस्तूनां संवादेन स्पष्टभूयिष्ठम् । यद्यपि 'सोत्सुकम्, मनोरथानि' इत्यादीनि व्याकृति-कोपासमर्थितानि पदानि काव्यस्यास्य कालिदास-कविकर्मण आरम्भकालिकत्वं साधयन्ति, साधयन्ति वा हानान्तरयोजितत्वं तेषां, तथापि शरद्वर्णनादिषु कालिदासोऽत्राप्यन्यत्रेव महानेव ।

(ङ) काव्यानि शोधयितुं यानि संस्करणानि दृष्टानि तेषां सूची अत्र पूर्वं दत्तैव। पुष्पिकासु लभ्यानि सर्गनामानि पुनर्बहुशः कथावस्तुनोऽन्तरङ्गमुपवीक्ष्य परिशील्य च तत्र स्थितानि रहस्यानि परिवर्त्तितानि। तानि तत एव द्रष्टव्यानि।

२

नाटकेषु संपादनं कृच्छ्रसाध्यमिति सर्वेषामनुभूतिः। अत्रापि सैव स्थितिः। अत्र ये विशेषास्तान्नामत एव सारत एवोद्धरामः—

१. सूच्यं दृश्यं चेति द्वयोरपि वस्तुनोः प्रतिनाटकं शीर्षकादिभिरनितरसुलभः शास्त्रसंमतश्च विभागः।

२. 'मा. ५; वि २ ३; शा. ४,६-' अङ्कारम्भकाः अर्थोपक्षेपका मुख्यपात्र-प्रवेशावधिकव्याप्तिकतयाऽनुभूता मुद्रिताश्च तदवधिकतयैव, प्रथमं मा. ५ विहाय। तत्त्यागे कारणं डॉ.राघव-डा रामजयुपाध्यायप्रतिषेधदाक्षिण्यम्। कलेवरवृद्ध्याऽऽवश्यकानि नामान्यपि परिवर्त्तितान्येव किन्तु दशरूपकादीन्यनुसृत्य, न तु भरत-नाट्यशास्त्रम्, तत्र प्रवेशकमात्रस्यैव लाभात्, विष्कम्भकस्य च कथञ्चिदिव प्रकरणप्रस्तावे पश्चाद् योजितत्वेन लाभात्। अर्थोपक्षेपकाङ्कयोः सम्बन्धाय श्लोकसंख्या तु न खण्डिता।

३. रङ्गनिर्देशाः संस्कृतच्छायास्वपि योजिताः।

४. (क) संवादाकारा अपि क्वचनान्यथिताः। तथाहि (१) शाकुन्तलस्य प्रथमेऽङ्के 'न खलु-न खलु' इति पद्यं स्पष्टमेव प्रक्षेपमात्रम्, अथापि प्रियतमत्वान्मूल एव ग्रहणम्, किन्तु पात्रान्तरमुखनिक्षिप्तया, (२) शाकुन्तलस्य चतुर्थेऽङ्के शिष्यानुसूदयोः प्रवेशस्य पृथक्कृतिः, परिष्कृतिश्चानुसूयोक्तीनामसम्बद्धत्वेन मुद्रितचराणां निर्णयसागरसंस्करणे, लतामण्डपे प्रविष्टमात्र एव दुष्यन्तः प्रियंवदात्वेन ख्यातया सख्याऽप्रियेण क्रमेण पुस्तकान्तरेषु यदुच्यते तत्र प्रियत्व-स्वाभाविकता, (३) शाकुन्तल एव (४८० पृ०) 'प्रभासप्रवास'—शब्दयोः संयोजनम्, (४) वि० ४—अङ्कान्तेऽशोकस्योपक्षेपायावतरणिकावाक्यम्, (५) ४९१, ५२७- तमयोः पृष्ठयोः 'निर्वर्ण्य' इति, ५२६ पृष्ठे च 'सस्मितेन' सह 'प्रकाशम्' इत्यस्यापि योजनम्, (५) 'स्वगतम्'—इत्यस्य स्थाने कालिदासाभ्यस्त 'आत्मगतम्' इति पाठः, (७) अपवार्यात्मगतप्रकाश'—शब्दानां यथायोगं योजनम्, (८) 'इति निष्क्रान्तः' इत्यादिरङ्गनिर्देशेभ्यः 'इति'— शब्दस्यापवादलेशकलुषितस्त्यागः, (९) नाटकप्रयोगारम्भे पूर्वरङ्गानां द्वाविंशत्याः त्रयोविंशत्या वा एव योजनायै प्रयोक्तॄणामवधानाय नान्दीपद्यानामारम्भे 'पूर्वरङ्गादि'—शब्दयोजनम्, (१०) नान्द्या

अपि मृदङ्गादिपुष्करवाद्यपरत्वेन, चित्रशुद्धत्वेन च द्वैविध्याय टिप्पण्या विनियोगः, (११) भाषासौष्ठवाय सर्वदमन—धीवरयोः संवादवाक्येषु 'नागरं पाठं विहाय वङ्गीयस्य पाठस्योपादानम्, ५३० पृष्ठे 'वनवासस्ये'त्यादेर्वाक्यस्य निपुणं संशोधनम्, परिहासाय विदूषकस्य वैशाखनन्दनत्वं रक्षितुं माधव्य इति वङ्गपाठादृतं नाम ।

(ख) 'क्वाकार्यं शश०' इति भावशबलतायै ख्यातं विक्रमोर्वशीयपद्यत्वेन चाङ्गीकृतं पद्यमत्रास्माभिर्न गृहीतम्, तस्योन्मत्तस्य पुरूरवस उन्मादोक्तिषु गभीरता-सापेक्षस्यास्याशक्यपरिग्रहत्वात् । 'रक्तस्त्वं नवपल्लवैरि'—ति चानन्दवर्धनोद्धृत-मपि पद्यं पुरूरवउक्तितया प्रतिभाति, किन्तु नास्ति तत्र विनिगमकमिति न तदपि गृहीतम्, मम्मटोद्धृतं 'रक्तशोके'ति पद्यमपि हस्तलेखेषु काठिन्येन लभ्यतेऽथापि प्रतीकविद्यामनुपालयद्भिः सीतारामचतुर्वेदिभिरिवास्माभिरपि गृहीतम् । अशोकः शोकविमोकाय शाकुन्तलेऽपि मातलिना निर्दिष्टः 'अस्मिन् अशोकवृक्षमूले ताव-दास्तामायुष्मानि'—ति ( पृ० ५४५ ) इति ब्रुवता मारीचाश्रमं च प्रविशता ।

( ग ) शाकुन्तले यस्तावद् वङ्गीये पाठे शकुन्तलादुष्यन्तयोः प्रथमसमागम-प्रस्तावे तृतीयाङ्कागतो विस्तरः सोऽपि तादृशांशान्तरवदस्माभिरत्र रूपान्तरत्वेन तथा योजितो यथा तत्रैव बद्धश्रद्धः पुस्तकान्तरं न स्पृहेत् ।

( घ ) विक्रमोर्वशीयस्य काटयवेमत्यक्ताः प्रकृतापभ्रंशगाथाः पुनः प्रक्षिप्तत्वेनैव मुद्रिताः, पण्डितसंस्करणस्य मूलेऽपि तासामलाभात्, शार्पेसंस्करणे च तासां कोष्ठका-न्तर्गतत्वात् । कारणान्तराणि च तत्र पादटिप्पणीषु दत्तान्येव ३८६ पृष्ठे ३९० पृष्ठे च ।

( घ ) संवादभाञ्जि वाक्यानि भावजातानि, पदानि वा तत्र तत्र टिप्पणेषु सन्दर्भैः सूचितानि यथा—

४६०, ३६२ पृष्ठगतः 'साधारणोऽयं प्रणय' इति प्रयोगः, स्वहस्तशब्दः ( ३६० पृ० ) सौभाग्यशब्दः ( ३६६ पृ० ) प्रथमशब्दः ( १८१, ४०९ पृ० ) प्रणयशब्दश्च ( २३० पृ० ) ।

( ङ ) प्रतीकविद्यामुपलालयद्भिरस्माभिरत्र कामधेनुः प्रकृतित्वेन, नन्दिनी च तत्तद्व्यक्तिषु लभ्येन विकृतित्वेन, गुरुबुद्धिरूपेण शिष्यबुद्धिरूपेण वा दर्शिते [ पृ० १०९ ] सोमतीर्थं स्वयं दुष्यन्त एव, कृष्णसारश्च स्वयं कण्व इति कण्वेनैव दुष्यन्तो बलादिवाश्रममानीत इति नः प्रतिपत्तिः ( ४३२ पृ० ) । नीललोहिततत्त्वं च कामतत्त्वमपि । ततः काममार्गेणापि शिवसायुज्यसंभव इत्यपि चात्रास्माकं संकेतः [ ५६० पृ० ] । एतेषु पादटिप्पणेषु रघोरेव रघुवंश-नायकत्वमपि समर्थितम् । शाकुन्तले 'चित्ते निवेश्य' इति वा पठनीयं 'चित्रे

निवेश्य' इति वेत्यपि ४५२ पृष्ठे याँ श्लोकमयी टिप्पणी तत्रापि सुमनसोऽवदधीरन् । यत्र तत्र टिप्पणैः काश्चन शास्त्रपरिभाषा अप्यत्र लक्षणैः स्फुटीकृताः ।

( च ) 'व'-शब्दो 'वीं'-शब्दो वा कालिदासेनैवार्थे वारत्रयं प्रयुक्तः । मा. ५।१२ पद्ये सोऽपरिवर्त्तनीयः । मे. २।२०, र ४।४२ पद्ययोर्मध्ये रघुवंशपद्ये तत्स्थाने 'च' इति पठ्यते, मेघपद्ये च महिमभट्टो यक्षीविशेषणेषु प्रथमान्तत्वं वीक्ष्य 'पद्मिनीवान्यरूपा' इति पिपठिषति ( द्र० व्यक्तिविवेकस्य ४८५ पृ० ) । रघुवंशे वयमपि विप्रलब्धाः । परिशेषे दत्तेषु पाठभेदेषु पुनः 'व'-'वा'- शब्दयोः संकेतोऽस्माभिः कृत एव । र. ४।६१ पद्यस्यापि चतुर्थचरणं 'चन्द्रं प्रवृद्धो जलधिर्निशीथे'—ति महिमभट्टः परिवर्त्तयति ( व्य० वि० पृ० ४५८ ) ।

( छ ) अत्र 'वसिष्ठ—रसना—सीकर-कैलास—कौसल्या' —शब्दाः शकार-घटितत्वेन न पठिताः, कृष्णसारशब्दश्च सकारघटितत्वेन । कुवेरशब्देऽपवर्गीय-मध्यत्वस्य केचनापवादाः पुनरभ्यासवशादत्र सुलभाः । वसिष्ठशब्दे प्रकाशार्थो वैदिको वसधातुः, रसनाशब्दे रशधातोरभावः, कृष्णशारशब्दे पुनर्हेमाद्रिदर्पणे सकारविरोधः कारणानि ।

३

१. कालिदासस्य समयः (१) ६३४ ईशाब्दे रविकीर्त्तिना नाम्ना निर्दिष्ट (२) एष कालिदासः शुङ्गनृपं महापराक्रमं पुष्यमित्रं विहाय तस्य विलासिनं पुत्रमग्निमित्रं नाटके नायकीकरोति, (३) नीचगिरौ शिलावेश्ममात्राणि स्मरति, न तु तेषु तृतीयचन्द्रगुप्तस्य सेनापतिना निर्मापितास्तत्तद्देवप्रतिमाः, (४) प्रतिमास्वासु गणेशप्रतिमाप्यस्ति, कालिदासश्च गणेशं न जानाति, (५) कालिदासो विदिशां दशार्णानां प्रथितलक्षणां राजधानीं कथयति, न चासीदेषा कदापि तथा विहाय शुङ्गराज्यम्, (६) कालिदासः पुष्यमित्रमश्वमेधदीक्षितं तत्पौत्रमाग्निमित्रिं वसुमित्रं चाश्वरक्षणे दर्शितपराक्रमं निर्दिशति (७) न च तथा स्पष्टं निर्दिशति विक्रमादित्यं यस्य सभारत्नतयाऽस्य कीर्त्तिः (८) तृतीयचन्द्रगुप्तस्य ५०० ई० शतकीयेन कविनाऽप्रसिद्धस्य ६०० वर्षपूर्ववर्त्तिन इतिहाससिद्धस्याप्यकिञ्चित्करस्य राज्ञो-ऽग्निमित्रस्य नायकत्वे किमिव प्रसज्येतेति कविरेष विक्रमसम्वत्सरप्रवर्त्तक-विक्रमा-दित्यतः पूर्वं शुङ्गानां राज्यस्योत्तरार्धे च कदाचिदपि यौवनं भेजे । स च समयः इतः पूर्वं २१३९ वर्षाणि भवेत् । विरुद्धास्तर्काः पुनर्हेत्वाभासाश्रिताः ।

२. नाटकेऽस्य कर्तृत्वे सन्दिहानाः कितर्का एव । शब्दाः, वाक्यानि, अभिप्रायाः, कविकर्म, प्रतिभा, वक्तव्यवस्तु चेति सर्वमपि यदा रघुवंशादि-वच्छाकुन्तलादारभ्य मालविकाग्निमित्रं यावदप्यभिन्नं तदा को नु सचेतास्तेषां कर्तृत्वे भेदमभिवीक्षेत ।

३. कालिदासो जन्मनाऽवश्यमेव ब्राह्मण एवासीत्, कर्मकाण्डस्य, ज्योतिषस्य, विवाहादिकर्मणां विज्ञानस्य क्षत्रियादिष्वप्रयोजनकत्वात् । भगवतोऽष्टमूर्तेः परमेश्वरस्यो भक्त एष भुक्त्या मुक्तिं लिप्सत इति वैदिके सनातने धर्मेऽस्य विश्वासः । संस्कृतस्यासौ महान् समर्थकः, किन्तु न संस्कृतसामान्यस्य, अपितु श्रुतिमहतः । राष्ट्रस्यासौ स्वस्तिवाचकः, किन्तु विश्वस्यापि कृते नास्त्यकुशलचेताः ।

४. कालिदासस्य जन्म भारते वर्षे कुत्र वा बभूवेति निश्चेतुं न शक्यते । स संपूर्णमपि भारतं सम्यग् विजानाति, विजानाति चास्योपद्वीपानि, किन्तु हिमाचले बद्धादर एषोऽवन्तिक्षेत्रे निबद्धरतिरिति केवलं वक्तुं शक्यते ।

५. कालिदासस्य वक्तव्यं त्वस्माभिरस्मदीने 'कालिदासः : मानवशिल्पी महाकविः' इति ग्रन्थे प्रतिपादितचरमेव भूम्ना । सारतः पुनरसौ 'राष्ट्रस्य महासत्त्वं रक्षकं' कुमाराणां संभवनाम्ना सुनियोजितेन विधिना लाभायैव कुमार-संभवे कार्त्तिकेय-संभवं, विक्रमोर्वशीये आयुस्संभवम्, शाकुन्तले च सर्वदमनभरत-संभवं न्यभान्त्सीत् । रघुवंशे प्रचण्डसूर्यः काव्यान्तरेषु च स्पृहणीयचन्द्रमाः कालिदासः ऋतुसंहारमेव प्रथमसोपानयति । मालविकाग्निमित्रस्य नायको ब्राह्मणोऽपि भूत्वा व्यवहारेण राजन्यप्राय एव लालित्यवशंवदः ।

कुमारेष्वपि कार्त्तिकेयः केवलो दिव्यः, आयुः दिव्यादिव्यः, सर्वदमनोऽपि दिव्यादिव्यप्राय एव, रघुस्तु केवलः पुरुषः । स हि महेन्द्रस्य पर्वतेष्वविसह्यं वज्रं स्वे वक्षसि विफलीकृत्य महेन्द्रपदाभिलाषिणं स्वपितरं स्वर्गान्मोक्षाय प्रवर्त्तयति । ततश्च स एव वस्तुतो रघुवंशस्य नायकः ।

६. इत्थं ग्रन्थावल्या अस्यास्त्रयोंऽशाः (i) मूलम् (ii) मूलस्य रूपान्तरम् (iii) पाठान्तरं चेति । तत्र सर्वत्र जनेनानेन प्रामाणिकत्वमग्निनीषितम् ।

४

साम्प्रतं काशीहिन्दूविश्वविद्यालयस्य कुलपतिभ्यो डॉ० कालूलालश्रीमालि-महोदयेभ्यस्तेषामसदृशप्रज्ञेभ्यः परामर्शदातृभ्यः श्रीलक्ष्मीनारायणजोषिमहोदयेभ्यश्च धन्यतां प्रकाशयामि यैः चिरप्रतीक्षं कार्यमिदं संपूरयितुं जन एषोऽवसरं लम्भितः । अत्र ये मुद्रणदोषास्तेषां कृते दौर्भाग्यमेव मूलम् । तद् विज्ञैः पाठकैः संशोध्य पठितव्यम् । वस्तुतः कार्यमिदं विदुषां समवायमेव सुपरिगतयेऽपेक्षते ।

अन्ते विद्वांसोऽत्र हंसतामादधीरन्निति उपकुर्वीरंश्च संशोधनजातमभिसूच्येति प्रार्थयते—

काशीहिन्दूविश्वविद्यालयः ...ाप्रसादो द्विवेदः
वसन्तपञ्चमी २०३२

# कालिदासग्रन्थावली

काव्यानि

- ऋतुसंहारम् [१-६] सर्गाः
- मेघदूतम् [१-२]
- कुमारसंभवम् [१-८] सर्गाः
- रघुवंशम् [१-१९] सर्गाः

नाटकानि

- मालविकाग्निमित्रम् [१-५] अङ्काः
- विक्रमोर्वशीयम् [१-५] अङ्काः
- अभिज्ञानशाकुन्तलम् [१-७] अङ्काः

परिशेषः

- प्रक्षेपाः
- पाठभेदाः
- श्लोकसूची

## शुद्धिपत्रम्

१. आरम्भे पृष्ठेषु सर्गादिसंख्याङ्का: स्वयमेव योग्या:।

२. शाकुन्तलतृतीयाङ्कपद्यसंख्या शोध्या। ३. शा. ५।१ —छाया 'अभिनवमधुलोलुपो भवाँस्तथा परिचुम्ब्य चूतमञ्जरीम्। कमलवसतिमात्र-निर्वृतो मधुकर विस्मृतोऽसि कथमेनाम्।।'

४. संकेता:—नी = नीचैस्त:, टि = टिप्पण्या:, प्रघ. = प्रघट्टक:

५. २९१ पृष्ठे 'निर्वर्ण्य निरूप्ये'ति २९६ पृष्ठे च 'ईदृश दश'-मिति शुद्धमेव।

| पृष्ठे | पद्ये | अशुद्धम् | शुद्धम् | पृष्ठे | पद्ये | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २७ | १ | ०विर[1] | ०कार[1] | २९१ | ११ | विवर्त्त | निर्वर्त्त |
| २७ | ६ | नानां | नां | २९२ | ७नी. | वर्त्तिनो | वर्त्तिनी |
| ३१ | ३५ | रशना | रसना | २९३ | ११ | परि | परी |
| ३८ | २१ | ननं | नूनं | २९४ | १४,१६ | नुपुर | नूपुर |
| ३९ | २३ | मूर्छनां | मूर्च्छनां | २९५ | १ | मेतावता | मेतावत् |
| ५५ | ४१ | ०वध० | ०वधू० | २९७ | १६ | ०थिनं | ०र्थनं |
| ५९ | १८ | तद्गच्छ | तद् गच्छ | २९९ | ५ | यां | मां |
| ६३ | ६९ | दष्टि | दृष्टि | ३०९ | १२ | ०स्न्य० | ०स्न्यै० |
| ७४ | ७१ | पिनाकि | कपालि | ३२८ | १५ | ०त्यजा | ०भृता |
| ७८ | ३३ | तत्प्र० | तत् प्र० | ३७१ | १ | [४] | [३] |
| १३७ | ४५ | सहार | संहार | ४०५ | ५ | तव् वि | स्वव् वि |
| १४२ | ३७ | ०मनप० | ०मनूप० | ४६१ | ८ | अङ्ग | अङ्गं |
| १५२ | टि-१ | र्क्त० | ०त्ति० | ४६४ | ७ | वर्त्तेथां | वर्त्तेयाथां |
| १५२ | टि-२ | समरो | समयो | ४६७ | ५ | मदनो | मअणो |
| १६१ | ५८ | विभ्रसा | विभ्रमसा | ४७७ | १५ | आत्मगतम् | (अ००म्) |
| १६७ | १२ | सशर | स शर | ४७९ | ७ | सपत्थि | सप्पत्थि |
| १९२ | १० | २० | १० | ४८१ | २ | (प्र००ण) | (प्रविश्य) |
| २०२ | १० | ०ननत्वम् | ०ननं स्वम् | ४८१ | २४ | पङ्क्तेः परं | (प्रवि०पटी०) |
| २१६ | टि-१ | ११ | १२ | ४८२ | २ | प्रविश्य | . × |
| २३० | टि-१ | मे११५ | मे १.५ | ५१६ | ७,२० | प्रतीष्य | प्रतीच्छ्य |
| २५६ | पं०१० | सेव | सेन | ५२६ | १४ | ०गुय० | ०गुलीय० |
| २५७ | टि-३ | ०द्यानि | द्यानि-९ | ५४४ | ९ | ०भुवान् म० | ०भुवान्म० |
| २५८ | टि-१ | पृ० २२२ | प्रघ. २२२ | ५५३ | ९नी. | दृष्टसं० | दृष्टमसं० |
| २७३ | टि-३ | शा. | सा. | ५५९ | ४नी. | यौ: | यौ |
| २७७ | टि-२ | मानो | मात्रो | सर्वत्र अन्यत् सुधीभि स्वमेव शोध्यम्। | | | |

# ऋतुसंहारम्

## प्रथमः सर्गः

### ग्रीष्मवर्णनम्

प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाहक्षतवारिसञ्चयः ।
दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालोऽयमुपागतः प्रिये ॥१॥

निशाः शशाङ्कक्षतनीलराजयः क्वचिद् विचित्रं जलयन्त्रमन्दिरम् ।
मणिप्रकाराः सरसं च चन्दनं शुचौ प्रिये यान्ति जनस्य सेव्यताम् ॥२॥

सुवासितं हर्म्यतलं मनोहरं प्रियामुखोच्छ्वासविकम्पितं मधु ।
सुतन्त्रिगीतं मदनस्य दीपनं शुचौ निशीथेऽनुभवन्ति कामिनः ॥३॥

नितम्वविम्वैः सदुकूलमेखलैः स्तनैः सहाराभरणैः सचन्दनैः ।
शिरोरुहैः स्नानकषायवासितैः स्त्रियो निदाघं शमयन्ति कामिनाम् ॥४॥

नितान्तलाक्षारसरागरञ्जितैर्नितम्विनीनां चरणैः सनूपुरैः ।
पदे पदे हंसरुतानुकारिभिर्जनस्य चित्तं क्रियते समन्मथम् ॥५॥

पयोधराश्चन्दनपङ्कचर्चितास्तुषारगौरार्पितहारशेखराः ।
नितम्वदेशाश्च सहेममेखलाः प्रकुर्वते कस्य मनो न सोत्सुकम् ॥६॥

समुद्गतस्वेदचिताङ्गसंधयो विमुच्य वासांसि गुरूणि साम्प्रतम् ।
स्तनेषु तन्वंशुकमुन्नतस्तना निवेशयन्ति प्रमदाः सयौवनाः ॥७॥

सचन्दनाम्वुव्यजनोद्भवानिलैः सहारयष्टिस्तनमण्डलार्पणैः ।
सवल्लकीकाकलिगीतनिस्वनैर्विवोध्यते सुप्त इवाद्य मन्मथः ॥८॥

सितेषु हर्म्येषु निशासु योषितां सुखप्रसुप्तानि मुखानि चन्द्रमाः ।
विलोक्य नूनं भृशमुत्सुकश्चिरं निशाक्षये याति ह्रियेव पाण्डुताम् ॥९॥

असह्यवातोद्धतरेणुमण्डला प्रचण्डसूर्यातपतापिता मही ।
न शक्यते द्रष्टुमपि प्रवासिभिः प्रियावियोगानलदग्धमानसैः ॥१०॥

मृगाः प्रचण्डातपतापिता भृशं तृषा महत्या परिशुष्कतालवः ।
वनान्तरे तोयमिति प्रधाविता निरीक्ष्य भिन्नाञ्जनसन्निभं नभः ॥११॥

सविभ्रमैः सस्मितजिह्मवीक्षितैर्विलासवत्यो मनसि प्रवासिनाम् ।
अनङ्गसंदीपनमाशु कुर्वते यथा प्रदोषाः शशिचारुभूषणाः ।।१२।।

रवेर्मयूखैरभितापितो भृशं विदह्यमानः पथि तप्तपांसुभिः ।
अवाङ्मुखो जिह्मगतिः श्वसन् मुहुः फणी मयूरस्य तले निषीदति ।।१३।।

तृषा महत्या हतविक्रमोद्यमः श्वसन् मुहुर्दूरविदारिताननः ।
न हन्त्यदूरेऽपि गजान् मृगेश्वरो विलोलजिह्वश्चलिताग्रकेसरः ।।१४।।

विशुष्ककण्ठोद्गतसीकराम्भसो गभस्तिभिर्भानुमतोऽनुतापिताः ।
प्रवृद्धतृष्णोपहता जलार्थिनो न दन्तिनः केसरिणोऽपि बिभ्यति ।।१५।।

हुताग्निकल्पैः सवितुर्गभस्तिभिः कलापिनः क्लान्तशरीरचेतसः ।
न भोगिनं घ्नन्ति समीपवर्तिनं कलापचक्रेषु निवेशिताननम् ।।१६।।

सभद्रमुस्तं परिशुष्ककर्दमं सरः खनन्नायतपोत्रमण्डलैः ।
रवेर्मयूखैरभितापितो भृशं वराहयूथो विशतीव भूतलम् ।।१७।।

विवस्वता तीक्ष्णतरांशुमालिना सपङ्कतोयात् सरसोऽभितापितः ।
उत्प्लुत्य भेकस्तृषितस्य भोगिनः फणातपत्रस्य तले निषीदति ।।१८।।

समुद्धृताशेषमृणालजालकं विपन्नमीनं द्रुतभीतसारसम् ।
परस्परोत्पीडनसंहतैर्गजैः कृतं सरः सान्द्रविमर्दकर्दमम् ।।१९।।

रविप्रभोद्भिन्नशिरोमणिप्रभो विलोलजिह्वाद्वयलीढमारुतः ।
विषाग्निसूर्यातपतापितः फणी न हन्ति मण्डूककुलं तृषाकुलः ।।२०।।

सफेनलालावृतवक्त्रसंपुटं विनिःसृतालोहितजिह्वमुन्मुखम् ।
तृषाकुलं निःसृतमद्रिगह्वरादवेक्षमाणं महिषीकुलं जलम् ।।२१।।

पटुतरदवदाहोच्छुष्कसस्यप्ररोहाः,
परुषपवनवेगोत्क्षिप्तसंशुष्कपर्णाः ।
दिनकरपरितापक्षीणतोयाः समन्ताद्
विदधति भयमुच्चैर्वीक्ष्यमाणा वनान्ताः ।।२२।।

श्वसिति विहगवर्गः शीर्णपर्णद्रुमस्थः
कपिकुलमुपयाति क्लान्तमद्रेर्निकुञ्जम् ।
भ्रमति गवययूथः सर्वतस्तोयमिच्छञ्
शरभकुलमजिह्मं प्रोद्धरत्यम्बु कूपात् ।।२३।।

विकचनवकुसुम्भस्वच्छसिन्दूरभासा
प्रबलपवनवेगोद्भूतवेगेन तूर्णम् ।
तटविटपलताग्रालिङ्गनव्याकुलेन
दिशि दिशि परिदग्धा भूमयः पावकेन ॥२४॥

ज्वलति पवनवृद्धः पर्वतानां दरीषु
स्फुटति पटुनिनादः शुष्कवंशस्थलीषु ।
प्रसरति तृणमध्ये लब्धवृद्धिः क्षणेन
ग्लपयति मृगवर्गं प्रान्तलग्नो दवाग्निः ॥२५॥

बहुतर इव जातः शाल्मलीनां वनेषु
स्फुरति कनकगौरः कोटरेषु द्रुमाणाम् ।
परिणतदलशाखानुत्पतन् प्रांशुवृक्षान्
भ्रमति पवनधूतः सर्वतोऽग्निर्वनान्ते ॥२६॥

गजगवयमृगेन्द्रा वह्निसंतप्तदेहा
सुहृद इव समेता द्वन्द्वभावं विहाय ।
हुतवहपरिखेदादाशु निर्गत्य कक्षाद्
विपुलपुलिनदेशां निम्नगां संविशन्ति ॥२७॥

कमलवनचिताम्बुः पाटलामोदरम्यः
सुखसलिलनिषेकः सेव्यचन्द्रांशुहारः ।
व्रजतु तव निदाघः कामिनीभिः समेतो
निशि सुललितगीते हर्म्यपृष्ठे सुखेन ॥२८॥

॥ इति श्रीकालिदासकविकृतौ ऋतुसंहारे ग्रीष्मवर्णनो नाम प्रथमः सर्गः ॥

## द्वितीयः सर्गः

### प्रावृड्वर्णनम्

ससीकराम्भोधरमत्तकुञ्जरस्तडित्पताकोऽशनिशब्दमर्दलः ।
समागतो राजवदुद्धतद्युतिर्घनागमः कामिजनप्रियः प्रिये ॥१॥

नितान्तनीलोत्पलपत्रकान्तिभिः क्वचित्प्रभिन्नाञ्जनराशिसंनिभैः ।
क्वचित् सगर्भप्रमदास्तनप्रभैः समाचितं व्योम घनैः समन्ततः ॥२॥

तृषाकुलैश्चातकपक्षिणां कुलैः प्रयाचितास्तोयभरावलम्बिनः ।
प्रयान्ति मन्दं वहुधारवर्षिणो वलाहकाः श्रोत्रमनोहरस्वनाः ॥३॥

वलाहकाश्चाशनिशब्दमर्दलाः सुरेन्द्रचापं दधतस्तडिद्गुणम् ।
सुतीक्ष्णधारापतनाग्रसायकैस्तुदन्ति चेतः प्रसभं प्रवासिनाम् ॥४॥

प्रभिन्नवैदूर्यनिभैस्तृणाङ्कुरैः समाचिता प्रोत्थितकन्दलीदलैः ।
विभाति शुक्लेतररत्नभूषिता वराङ्गनेन क्षितिरिन्द्रगोपकैः ॥५॥

सदा मनोज्ञं स्वनदुत्सवोत्सुकं विकीर्णविस्तीर्णकलापिशोभितम् ।
ससंभ्रमालिङ्गनचुम्वनाकुलं प्रवृत्तनृत्यं कुलमद्य वर्हिणाम् ॥६॥

निपातयन्त्यः परितस्तटद्रुमान् प्रवृद्धवेगैः सलिलैरनिर्मलैः ।
स्त्रियः सुदुष्टा इव जातविभ्रमाः प्रयान्ति नद्यस्त्वरितं पयोनिधिम् ॥७॥

तृणोत्करैरुद्गतकोमलाङ्कुरैश्चितानि नीलैर्हरिणीमुखक्षतैः ।
वनानि वैन्ध्यानि हरन्ति मानसं विभूषितान्युद्गतपल्लवैर्द्रुमैः ॥८॥

विलोलनेत्रोत्पलशोभिताननैर्मृगैः समन्तादुपजातसाध्वसैः ।
समाचिता सैकतिनी वनस्थली समुत्सुकत्वं प्रकरोति चेतसः ॥९॥

अभीक्ष्णमुच्चैर्ध्वनता पयोमुचा घनान्धकारीकृतशर्वरीष्वपि ।
तडित्प्रभादर्शितमार्गभूमयः प्रयान्ति रागादभिसारिकाः स्त्रियः ॥१०॥

पयोधरैर्भीमगभीरनिस्वनैस्तडिद्भिरुद्वेजितचेतसो भृशम् ।
कृतापराधानपि योषितः प्रियान् परिष्वजन्ते शयने निरन्तरम् ॥११॥

विलोचनेन्दीवरवारिविन्दुभिर्निषिक्तविम्वाधरचारुपल्लवाः ।
निरस्तमाल्याभरणानुलेपनाः स्थिता निराशाः प्रमदाः प्रवासिनाम् ॥१२॥

विपाण्डुरं कीटरजंस्तृणान्वितं भुजङ्गवद् वक्रगतिप्रसर्पितम् ।
ससाध्वसैर्भेककुलैर्निरीक्षितं प्रयाति निम्नाभिमुखं नवोदकम् ॥१३॥

षिपत्रपुष्पां नलिनीं समुत्सुका विहाय भृङ्गाः श्रुतिहारिनिस्वनाः ।
पतन्ति मूढाः शिखिनां प्रनृत्यतां कलापचक्रेषु नवोत्पलाशया ॥१४॥

वनद्विपानां नववारिदस्वनैर्मदान्वितानां ध्वनतां मुहुर्मुहुः ।
कपोलदेशा विमलोत्पलप्रभाः सभृङ्गयूथैर्मदवारिभिश्चिताः ॥१५॥

सितोत्पलाभाम्वुदचुम्बितोपलाः समाचिताः प्रस्रवणैः समन्ततः ।
प्रवृत्तनृत्यैः शिखिभिः समाकुलाः समुत्सुकत्वं जनयन्ति भूधराः ॥१६॥

कदम्बसर्जार्जुनकेतकीवनं विकम्पयंस्तत्कुसुमाधिवासितः ।
ससीकराम्भोधरसङ्गशीतलः समीरणः कं न करोति सोत्सुकम् ॥१७॥

शिरोरुहैः श्रोणितटावलम्बिभिः कृतावतंसैः कुसुमैः सुगन्धिभिः ।
स्तनैः सहारैर्वदनैः ससीधुभिः स्त्रियो रतिं संजनयन्ति कामिनाम् ॥१८॥

वहन्ति वर्षन्ति नदन्ति भान्ति रुदन्ति नृत्यन्ति समाश्रयन्ति ।
नद्यो घना मत्तगजा वनान्ताः प्रियाविहीना शिखिनः प्लवङ्गाः ॥१९॥

तडिल्लताशक्रधनुर्विभूषिताः पयोधरास्तोयभरावलम्बिनः ।
स्त्रियश्च काञ्चीमणिकुण्डलोज्ज्वला हरन्ति चेतो युगपत्प्रवासिनाम् ॥

माला: कदम्बनवकेसरकेतकीभि-
रायोजिताः शिरसि बिभ्रति योषितोऽद्य ।
कर्णान्तरेषु ककुभद्रुममञ्जरीभि-
रिच्छानुकूलरचितानवतंसकांश्च ॥२१॥

कालागुरुप्रचुरचन्दनचर्चिताङ्ग्यः
पुष्पावतंससुरभीकृतकेशपाशाः ।
श्रुत्वा ध्वनिं जलमुचां त्वरितं प्रदोषे
शय्यागृहं गुरुगृहात् प्रविशन्ति नार्यः ॥२२॥

कुवलयदलनीलैरुन्नतैस्तोयनम्रै-
र्मृदुपवनविधूतैर्मन्दमन्दं चलद्भिः ।
अपहृतमिव चेतस्तोयदैः सेन्द्रचापैः
पथिकजनवधूनां तद्वियोगाकुलानाम् ॥२३॥

मुदित इव कदम्बैर्जातपुष्पैः समन्तात्
पवनचलितशाखैः शाखिभिर्नृत्यतीव ।
हसितमिव विधत्ते सूचिभिः केतकीनां
नवसलिलनिषेकच्छिन्नतापो वनान्तः ।।२४।।

शिरसि वकुलमालां मालतीभिः समेतां
विकसितनवपुष्पैर्यूथिकाकुड्मलैश्च ।
विकचनवकदम्बैः कर्णपूरं वधूनां
रचयति जलदौघः कान्तवत् काल एषः ।।२५।।

दधति वरकुचाग्रैरुन्नतैर्हारयष्टिं
प्रतनुसितदुकूलान्यायतैः श्रोणिविम्बैः ।
नवजलकणसेकादुद्गतां रोमराजीं
ललितवलिविभङ्गैर्मध्यदेशैश्च नार्यः ।।२६।।

नवजलकणसङ्गाच्छीततामादधानः
कुसुमभरनतानां लासकः पादपानाम् ।
जनितरुचिरगन्धः केतकीनां रजोभिः
परिहरति नभस्वान् प्रोषितानां मनांसि ।।२७।।

जलभरनमितानामाश्रयोऽस्माकमुच्चै-
रयमिति जलसेकैस्तोयदास्तोयनम्राः ।
अतिशयपरुषाभिर्ग्रीष्मवह्नेः शिखाभिः
समुपजनिततापं ह्लादयन्तीव विन्ध्यम् ।।२८।।

वहुगुणरमणीयः कामिनीचित्तहारी
तरुविटपलतानां वान्धवो निर्विकारः ।
जलदसमय एष प्राणिनां प्राणभूतो
दिशतु तव हितानि प्रायशो वाञ्छितानि ।।२९।।

।। इति श्रीकालिदासकविकृतौ ऋतुसंहारे प्रावृड्वर्णनो नाम द्वितीयः सर्गः ।।

# तृतीयः सर्गः

## शरद्वर्णनम्

काशांशुका विकचपद्ममनोज्ञवक्त्रा
सोन्मादहंस-रव-नूपुरनादरम्या ।
आपक्वशालिरुचिरानतगात्रयष्टिः
प्राप्ता शरन्नवधूरिव रूपरम्या ॥१॥

काशैर्मही शिशिरदीधितिना रजन्यो
हंसैर्जलानि सरितां कुमुदैः सरांसि ।
सप्तच्छदैः कुसुमभारनतैर्वनान्ताः
शुक्लीकृतान्युपवनानि च मालतीभिः ॥२॥

चञ्चन्मनोज्ञशफरीरसनाकलापाः
पर्यन्तसंस्थितसिताण्डजपङ्क्तिहाराः ।
नद्यो विशालपुलिनान्तनितम्वविम्वा
मन्दं प्रयान्ति समदाः प्रमदा इवाद्य ॥३॥

व्योम क्वचिद् रजतशङ्खमृणालगौरै-
स्त्यक्ताम्बुभिर्लघुतया शतशः प्रयातैः ।
संलक्ष्यते पवनवेगचलैः पयोदै
राजेव चामरशतैरुपवीज्यमानः ॥४॥

भिन्नाञ्जनप्रचयकान्ति नभो मनोज्ञं
वन्धूकपुष्परजसाऽरुणिता च भूमिः ।
वप्राश्च पक्वकलमावृतभूमिभागाः
प्रोत्कण्ठयन्ति न मनो भुवि कस्य यनः ॥५॥

मन्दानिलाकुलितचारुतराग्रशाखः
पुष्पोद्गमप्रचयकोमलपल्लवाग्रः ।
मत्तद्विरेफपरिपीतमधुप्रसेक-
श्चित्तंविदारयति कस्य न कोविदारः ॥६॥

तारागणप्रवरभूषणमुद्वहन्ती
मेघावरोधपरिमुक्तशशाङ्कवक्त्रा ।

ज्योत्स्नादुकूलममलं रजनी दधाना
　　वृद्धिं प्रयात्यनुदिनं प्रमदेव बाला ।।७।।

कारण्डवाननविघट्टितवीचिमालाः
　　कादम्बसारसकुलाकुलतीरदेशाः ।
कुर्वन्ति हंसविरुतैः परितो जनस्य
　　प्रीतिं सरोरुहरजोरुणितास्तटिन्यः ।।८।।

नेत्रोत्सवो हृदयहारिमरीचिमालः
　　प्रह्लादकः शिशिरसीकरवारिवर्षी ।
पत्युर्वियोगविषदग्धशरक्षतानां
　　चन्द्रो दहत्यतितरां तनुमङ्गनानाम् ।।९।।

आकम्पयन् फलभरानतशालिजाला-
　　न्यानर्तयँस्तरुवरान् कुसुमावनम्रान् ।
उत्फुल्लपङ्कजवनां नलिनीं विधुन्वन्
　　यूनां मनश्चलयति प्रसभं नभस्वान् ।।१०।।

सोन्मादहंसमिथुनैरुपशोभितानि
　　स्वच्छप्रफुल्लकमलोत्पलभूषितानि ।
मन्दप्रभातपवनोद्गतवीचिमाला-
　　न्युत्कण्ठयन्ति सहसा हृदयं सरांसि ।।११।।

नष्टं धनुर्बलभिदो जलदोदरेषु
　　सौदामनी स्फुरति नाद्य वियत्पताका ।
धुन्वन्ति पक्षपवनैर्न नभो बलाकाः
　　पश्यन्ति नोन्नतमुखा गगनं मयूराः ।।१२।।

नृत्यप्रयोगरहिताञ्छिखिनो विहाय
　　हंसानुपैति मदनो मधुरप्रगीतान् ।
मुक्त्वा कदम्बकुटजार्जुनसर्जनीपान्
　　सप्तच्छदानुपगता कुसुमोद्गमश्रीः ।।१३।।

शेफालिकाकुसुमगन्धमनोहराणि
　　स्वस्थस्थिताण्डजकुलप्रतिनादितानि ।
पर्यन्तसंस्थितमृगीनयनोत्पलानि
　　प्रोत्कण्ठयन्त्युपवनानि मनांसि पुंसाम् ।।१४।।

कह्लारपद्मकुमुदानि मुहुर्विधुन्वं-
स्तत्संगमादधिकशीतलतामुपेतः ।
उत्कण्ठयत्यतितरां पवनः प्रभाते
पत्रान्तलग्नतुहिनाम्बुविधूयमानः ॥१५॥

संपन्नशालिनिचयावृतभूतलानि
स्वस्थस्थितप्रचुरगोकुलशोभितानि ।
हंसैः ससारसकुलैः प्रतिनादितानि
सीमान्तराणि जनयन्ति नृणां प्रमोदम् ॥१६॥

हंसैर्जिता सुललिता गतिरङ्गनाना-
मम्भोरुहैर्विकसितैर्मुखचन्द्रकान्तिः ।
नीलोत्पलैर्मदकलानि विलोचनानि
भ्रूविभ्रमाश्च रुचिरास्तनुभिस्तरङ्गैः ॥१७॥

श्यामा लताः कुसुमभारनतप्रवालाः
स्त्रीणां हरन्ति धृतभूषणबाहुकान्तिम् ।
दन्तावभासविशदस्मितचन्द्रकान्तिं
कङ्केलिपुष्परुचिरा नवमालती च ॥१८॥

केशान्नितान्तघननीलविकुञ्चताग्रा-
नापूरयन्ति वनिता नवमालतीभिः ।
कर्णेषु च प्रवरकाञ्चनकुण्डलेषु
नीलोत्पलानि विविधानि निवेशयन्ति ॥१९॥

हारैः सचन्दनरसैः स्तनमण्डलानि
श्रोणीतटं सुविपुलं रसनाकलापैः ।
पादाम्बुजानि कलनूपुरशेखरैश्च
नार्यः प्रहृष्टमनसोऽद्य विभूषयन्ति ॥२०॥

स्फुटकुमुदचितानां राजहंसाश्रितानां
मरकतमणिभासा वारिणा भूषितानाम् ।
श्रियमतिशयरूपां व्योम तोयाशयानां
वहति विगतमेघं चन्द्रतारावकीर्णम् ॥२१॥

शरदि कुमुदसङ्गाद् वायवो वान्ति शीता
विगतजलदवृन्दा दिग्विभागा मनोज्ञाः ।

विगतकलुषमम्भः श्यानपङ्का धरित्री
विमलकिरणचन्द्रं व्योम ताराविचित्रम् ॥२२॥

करकमलमनोज्ञाः कान्तसंसक्तहस्ता
वदनविजितचन्द्राः काश्चिदन्यास्तरुण्यः ।
रचितकुसुमगन्धि प्रायशो यान्ति वेश्म
प्रबलमदनहेतोस्त्यक्तसंगीतरागाः ॥२३॥

सुरत-रसविलासाः सत्सखीभिः समेता
असमशरविनोदं सूचयन्ति प्रकाशम् ।
अनुपममुखरागा रात्रिमध्ये विनोदं
शरदि तरुणकान्ताः सूचयन्ति प्रमोदान् ॥२४॥

दिवसकरमयूखैर्बोध्यमानं प्रभाते
वरयुवतिमुखाभं पङ्कजं जृम्भतेऽद्य ।
कुमुदमपि गतेऽस्तं लीयते चन्द्रबिम्बे
हसितमिव वधूनां प्रोषितेषु प्रियेषु ॥२५॥

असितनयनलक्ष्मीं लक्षयित्वोत्पलेषु
क्वणितकनककाञ्चीं मत्तहंसस्वनेषु ।
अधररुचिरशोभां बन्धुजीवे प्रियाणां
पथिकजन इदानीं रोदिति भ्रान्तचित्तः ॥२६॥

स्त्रीणां विहाय वदनेषु शशाङ्कलक्ष्मीं
काम्यं च हंसवचनं मणिनूपुरेषु ।
बन्धूककान्तिमधरेषु मनोहरेषु
क्वापि प्रयाति सुभगा शरदागमश्रीः ॥२७॥

विकचकमलवक्त्रा फुल्लनीलोत्पलाक्षी
विकसितनवकाशश्वेतवासो वसाना ।
कुमुदरुचिरकान्तिः कामिनीवोन्मदेयं
प्रतिदिशतु शरद् वश्चेतसः प्रीतिमग्र्याम् ॥२८॥

॥ इति श्रीकालिदासकविकृतौ ऋतुसंहारे शरद्वर्णनो नाम तृतीयः सर्गः ॥

# चतुर्थः सर्गः

## हेमन्तवर्णनम्

नवप्रवालोद्गमसस्यरम्यः प्रफुल्ललोध्रः परिपक्वशालिः ।
विलीनपद्मः प्रपतत्तुषारो हेमन्तकालः समुपागतोऽयम् ॥१॥

मनोहरैश्चन्दनरागगौरैस्तुषारकुन्देन्दुनिभैश्च हारैः ।
विलासिनीनां स्तनशालिनीनां नालंक्रियन्ते स्तनमण्डलानि ॥२॥

न बाहुयुग्मेषु विलासिनीनां प्रयान्ति सङ्गं वलयाङ्गदानि ।
नितम्बबिम्बेषु नवं दुकूलं तन्वंशुकं पीनपयोधरेषु ॥३॥

काञ्चीगुणैः काञ्चनरत्नचित्रैर्नो भूषयन्ति प्रमदा नितम्बान् ।
न नूपुरैर्हंसरुतं भजद्भिः पादाम्बुजान्यम्बुजकान्तिभाञ्जि ॥४॥

गात्राणि कालीयकचर्चितानि सपत्रलेखानि मुखाम्बुजानि ।
शिरांसि कालागुरुधूपितानि कुर्वन्ति नार्यः सुरतोत्सवाय ॥५॥

रतिश्रमक्षामविपाण्डुवक्त्राः संप्राप्तहर्षाभ्युदयास्तरुण्यः ।
दशन्ति नोच्चैर्दशनाग्रभिन्नान् प्रपीड्यमानानधरानवेक्ष्य ॥६॥

पीनस्तनोरःस्थलभागशोभामासाद्य तत्पीडनजातखेदः ।
तृणाग्रलग्नैस्तुहिनैः पतद्भिराक्रन्दतीवोषसि शीतकालः ॥७॥

प्रभूतशालिप्रसवैश्चितानि मृगाङ्गनायूथविभूषितानि ।
मनोहरक्रौञ्चनिनादितानि सीमान्तराण्युत्सुकयन्ति चेतः ॥८॥

प्रफुल्लनीलोत्पलशोभितानि सोन्मादकादम्बविभूषितानि ।
प्रसन्नतोयानि सुशीतलानि सरांसि चेतांसि हरन्ति पुंसाम् ॥९॥

मार्गं समीक्ष्यातिनिरस्तनीरं प्रवासखिन्नं पतिमुद्वहन्त्यः ।
अवेक्ष्यमाणा हरिणेक्षणाक्ष्यः प्रबोधयन्तीव मनोरथानि ॥१०॥

पाकं व्रजन्ती हिमजालशीतैराधूयमाना सततं मरुद्भिः ।
प्रिये प्रियङ्गुः प्रियविप्रयुक्ता विपाण्डुतां याति विलासिनीव ॥११॥

पुष्पासवामोदसुगन्धिवक्त्रो निःश्वासवातैः सुरभीकृताङ्गः ।
परस्पराङ्गव्यतिषङ्गशायी शेते जनः कामरसानुविद्धः ॥१२॥

दन्तच्छदैः सव्रणदन्तचिह्नैः स्तनैश्च पाण्यग्रकृताभिलेखैः ।
संसूच्यते निर्दयमङ्गनानां रतोपभोगो नवयौवनानाम् ॥१३॥

काचिद् विभूषयति दर्पणसक्तहस्ता
बालातपेषु वनिता वदनारविन्दम् ।
दन्तच्छदं प्रियतमेन निपीतसारं
दन्ताग्रभिन्नमवकृष्य निरीक्षते च ॥१४॥

अन्या प्रकामसुरतश्रमखिन्नदेहा
रात्रिप्रजागरविपाटलनेत्रपद्मा ।
स्रस्तांसदेशलुलिताकुलकेशपाशा
निद्रां प्रयाति मृदुसूर्यकराभितप्ता ॥१५॥

निर्माल्यदाम परिभुक्तमनोज्ञगन्धं
मूर्ध्नोऽपनीय घननीलशिरोरुहान्ताः ।
पीनोन्नतस्तनभरानतगात्रयष्टयः
कुर्वन्ति केशरचनामपरास्तरुण्यः ॥१६॥

अन्या प्रियेण परिभुक्तमवेक्ष्य गात्रं
हर्षान्विता विरचिताधरचारुशोभा ।
कूर्पासकं परिदधाति नखक्षताङ्गी
व्यालम्बिनीलललितालककुञ्चिताक्षी ॥१७॥

अन्याश्चिरं सुरतकेलिपरिश्रमेण
खेदं गताः प्रशिथिलीकृतगात्रयष्टयः ।
संहृष्यमाणपुलकोरुपयोधरान्ता
अभ्यञ्जनं विदधति प्रमदाः सुशोभाः ॥१८॥

बहुगुणरमणीयो योषितां चित्तहारी
परिणतबहुशालिव्याकुलग्रामसीमा ।
विनिपतिततुषारः क्रौञ्चनादोपगीतः
प्रदिशतु हिमयुक्तो वः सुखं काल एषः ॥१९॥

॥ इति श्रीकालिदासकविकृतौ ऋतुसंहारे हेमन्तवर्णनो नाम चतुर्थः सर्गः ॥

## पञ्चमः सर्गः

### शिशिरवर्णनम्

प्ररूढशालीक्षुचयावृतक्षितिं
क्वचित् स्थितक्रौञ्चनिनादराजितम् ।
प्रकामकामं प्रमदाजनप्रियं
वरोरु कालं शिशिराह्वयं शृणु ॥१॥

निरुद्धवातायनमन्दिरोदरं
हुताशनो भानुमतो गभस्तयः ।
गुरूणि वासांस्यवलाः सयौवनाः
प्रयान्ति कालेऽत्र जनस्य सेव्यताम् ॥२॥

न चन्दनं चन्द्रमरीचिशीतलं
न हर्म्यपृष्ठं शरदिन्दुनिर्मलम् ।
न वायवः सान्द्रतुषारशीतला
जनस्य चित्तं रमयन्ति साम्प्रतम् ॥३॥

तुषारसंघातनिपातशीतलाः
शशाङ्कभाभिः शिशिरीकृताः पुनः ।
विपाण्डुतारागणचारुभूषणा
जनस्य सेव्या न भवन्ति रात्रयः ॥४॥

गृहीतताम्बूलविलेपनस्रजः
पुष्पासवामोदितवक्त्रपङ्कजाः ।
प्रकामकालागुरुधूपवासितं
दिशन्ति शय्यागृहमुत्सुकाः स्त्रियः ॥५॥

कृतापराधान् वहुशोऽभितर्जितान्
सवेपथून् साध्वसलुप्तचेतसः ।
निरीक्ष्य भर्तृन् सुरताभिलाषिणः
स्त्रियोऽपराधान् समदा विसस्मरुः ॥६॥

प्रकामकामैर्युवभिः सुनिर्दयं
निशासु दीर्घास्वभिरामिताश्चिरम् ।
भ्रमन्ति मन्दं श्रमखेदितोरवः
क्षयावसाने नवयौवनाः स्त्रियः ॥७॥

मनोज्ञकूर्पासकपीडितस्तनाः
सरागकौषेयकभूषितोरवः ।
निवेशितान्तःकुसुमैः शिरोरुहै-
र्विभूषयन्तीव हिमागमं स्त्रियः ॥८॥

पयोधरैः कुङ्कुमरागपिञ्जरैः
सुखोपसेव्यैर्नवयौवनोष्मभिः ।
विलासिनीभिः परिपीडितोरसः
स्वपन्ति शीतं परिभूय कामिनः ॥९॥

सुगन्धिनिःश्वासविकम्पितोत्पलं
मनोहरं कामरतिप्रबोधकम् ।
निशासु हृष्टाः सह कामिभिः स्त्रियः
पिबन्ति मद्यं मदनीयमुत्तमम् ॥१०॥

अपगतमदरागा योषिदेका प्रभाते
कृतनिनिडकुचाग्रा पत्युरालिङ्गनेन ।
प्रियतमपरिभुक्तं वीक्षमाणा स्वदेहं
व्रजति शयनवासाद् वासमन्यं हसन्ती ॥११॥

अगुरुसुरभिधूपामोदितं केशपाशं
गलितकुसुममालं कुञ्चिताग्रं वहन्ती ।
त्यजति गुरुनितम्बा निम्ननाभिः सुमध्या
उषसि शयनमन्या कामिनी चारुशोभा ॥१२॥

कनककमलकान्तैश्चारुताम्राधरोष्ठैः
श्रवणतटनिषक्तैः पाटलोपान्तनेत्रैः ।
उषसि वदनबिम्बैरंससंसक्तकेशैः
श्रिय इव गृहमध्ये संस्थिता योषितोऽद्य ॥१३॥

पृथुजघनभरार्त्ता किञ्चिदानम्रमध्याः
स्तनभरपरिखेदान्मन्दमन्दं वदन्त्यः ।
सुरतसमयवेशं नैशमाशु प्रहाय
दधति दिवसयोग्यं वेशमन्यास्तरुण्यः ॥१४॥

नखपदचित्रभागान् वीक्षमाणाः स्तनान्ता-
नधरकिसलयाग्रं दन्तभिन्नं स्पृशन्त्यः ।
अभिमतरतवेशं नन्दयन्त्यस्तरुण्यः
सवितुरुदयकाले भूषयन्त्याननानि ॥१५॥

प्रचुरगुडविकारः स्वादुशालीक्षुरम्यः
प्रबलसुरतकेलिर्जातकन्दर्पदर्पः ।
प्रियजनरहितानां चित्तसन्तापहेतुः
शिशिरसमय एष श्रेयसे वोऽस्तु नित्यम् ॥१६॥

॥इति श्रीकालिदासकविविरचिते ऋतुसंहारकाव्ये शिशिरवर्णनो नाम पञ्चमः सर्गः ॥५॥

## षष्ठः सर्गः

### वसन्तवर्णनम्

प्रफुल्लचूताङ्कुरतीक्ष्णसायको
द्विरेफमालाविसद्धनुर्गुणः ।
मनांसि भेत्तुं सुरतप्रसङ्गिनां
वसन्तयोद्धा समुपागतः प्रिये ॥१॥

द्रुमाः सपुष्पाः सलिलं सपद्मं
स्त्रियः सकामाः पवनः सुगन्धिः ।
सुखाः प्रदोषा दिवसाश्च रम्याः
सर्वं प्रिये चारुतरं वसन्ते ॥२॥

ईषत्तुषारैः कृतशीतहर्म्यः
सुवासितं चारु शिरश्च चम्पकैः ।
कुर्वन्ति नार्योऽपि वसन्तकाले
स्तनं सहासं कुसुमैर्मनोहरैः ॥३॥

वापीजलानां मणिमेखलानां
शशाङ्कभासां प्रमदाजनानाम् ।
चूतद्रुमाणां कुसुमान्वितानां
ददाति सौभाग्यमयं वसन्तः ॥४॥

कुसुम्भरागारुणितैर्दुकूलै-
र्नितम्बविम्बानि विलासिनीनाम् ।
तन्वंशुकैः कुङ्कुमरागगौरै-
रलं क्रियन्ते स्तनमण्डलानि ॥५॥

कर्णे सुयोग्यं नवकर्णिकारं
चलेषु नीलेष्वलकेष्वशोकम् ।
पुष्पं च फुल्लं नवमल्लिकायाः
प्रयान्ति कान्तिं प्रमदाजनानाम् ॥६॥

स्तनेषु हाराः सितचन्दनार्द्रा
भुजेषु सङ्गं वलयाङ्गदानि ।
प्रयान्त्यनङ्गातुरमानसीनां
नितम्बिनीनां जघनेषु काञ्च्यः ॥७॥

सपत्रलेखेषु विलासिनानां
वक्त्रेषु हेमाम्बुरुहोपमेषु ।
रत्नान्तरे मौक्तिकसङ्गरम्यः
स्वेदागमो विस्तरतामुपैति ॥८॥

उच्छ्वासयन्त्यः श्लथबन्धनानि
गात्राणि कन्दर्पसमाकुलानि ।
समीपवर्त्तिष्वधुना प्रियेषु
समुत्सुका एव भवन्ति नार्यः ॥९॥

तनूनि पाण्डूनि मदालसानि
मुहुर्मुहुर्जृम्भणतत्पराणि ।
अङ्गान्यनङ्गः प्रमदाजनस्य
करोति लावण्यससम्भ्रमाणि ॥१०॥

छायां जनः समभिवाञ्छति पादपानां
नक्तं तथेच्छति पुनः किरणं सुधांशोः ।
हर्म्यं प्रयाति शयितुं सुखशीतलं च
कान्तां च गाढमुपगूहति शीतलत्वम् ॥११॥

नेत्रेषु लोलो मदिराललेषु
गण्डेषु पाण्डुः कठिनस्तनेषु ।
मध्येषु निम्नो जघनेषु पीनः
स्त्रीणामनङ्गो बहुधा स्थितोऽद्या ॥१२॥

अङ्गानि निद्रालसविभ्रमाणि
वाक्यानि किञ्चिन्मदिरालसानि ।
भ्रूक्षेपजिह्मानि च वीक्षितानि
चकार कामः प्रमदाजनानाम् ॥१३॥

प्रियङ्गु-कालीयक-कुङ्कुमाक्तं
स्तनेषु गौरेषु विलासिनीभिः ।

आलिप्यते चन्दनमङ्गनाभि-
मंदालसाभिर्मृगनाभियुक्तम् ॥१४॥

गुरूणि वासांसि विहाय तूर्णं
तनूनि लाक्षारसरञ्जितानि ।
सुगन्धिकालागुरुधूपितानि
धत्ते जनः काममदालसाङ्गः ॥१५॥

पुंस्कोकिलश्चूतरसासवेन
मत्तः प्रियां चुम्वति रागहृष्टः ।
कुजन् द्विरेफोऽप्ययमम्वुजस्थः
प्रियं प्रियायाः प्रकरोति चाटु ॥१६॥

ताम्रप्रवालस्तवकावनम्रा-
श्चूतद्रुमाः पुष्पितचारुशाखाः ।
कुर्वन्ति कामं पवनावधूताः
पर्युत्सुकं मानसमङ्गनानाम् ॥१७॥

आमूलतो विद्रुमरागताम्रं
सपल्लवाः पुष्पचयं दधानाः ।
कुर्वन्त्यशोकाः हृदयं सशोकं
निरीक्ष्यमाणा नवयौवनानाम् ॥१८॥

मत्तद्विरेफपरिचुम्वितचारुपुष्पा
मन्दानिलाकुलितनम्रमृदुप्रवालाः ।
कुर्वन्ति कामिमनसां सहसोत्सुकत्वं
वालातिमुक्तलतिकाः समवेक्ष्यमाणाः ॥१९॥

कान्तामुखद्युतिजुषामचिरोद्गतानां
शोभां परां कुरवकद्रुममञ्जरीणाम् ।
दृष्ट्वा प्रिये सहृदयस्य भवेन्न कस्य
कन्दर्पवाणपतनं व्यथितं हि चेतः ॥२०॥

आदीप्तवह्निसदृशैर्मरुताऽवधूतैः
सर्वत्र किंशुकवनैः कुसुमावनम्रैः ।
सद्योवसन्तसमयेन समाचितेयं
रक्तांशुका नववधूरिव भाति भूमिः ॥२१॥

किं किंशुकैः शुकमुखच्छविभिर्न भिन्नं
किं कर्णिकारकुसुमैर्न कृतं न दग्धम् ।
यत् कोकिलः पुनरयं मधुरैर्वचोभि-
र्यूनां मनः सुवदनानिहितं निहन्ति ॥२२॥

पुंस्कोकिलैः कलवचोभिरुपात्तहर्षैः
कूजद्भिरुन्मदकलानि वचांसि भृङ्गैः ।
लज्जान्वितं सविनयं हृदयं क्षणेन
पर्याकुलं कुलगृहेऽपि कृतं वधूनाम् ॥२३॥

आकम्पयन् कुसुमिताः सहकारशाखा
विस्तारयन् परभृतस्य वचांसि दिक्षु ।
वायुर्विवाति हृदयानि हरन्नराणां
नीहारपातविगमात् सुभगे वसन्ते ॥२४॥

कुन्दैः सविभ्रमवधूहसितावदातै-
रुद्योतितान्युपवनानि मनोहराणि ।
चित्तं मुनेरपि हरन्ति निवृत्तरागं
प्रागेव रागमलिनानि मनांसि यूनाम् ॥२५॥

आलम्बिहेमरसनाः स्तनसक्तहाराः
कन्दर्पदर्पशिथिलीकृतगात्रयष्टयः ।
मासे मधौ मधुरकोकिलभृङ्गनादै-
र्नार्यो हरन्ति हृदयं प्रसभं नराणाम् ॥२६॥

नानामनोज्ञकुसुमद्रुमभूषितान्तान्
हृष्टान्यपुष्ट-निनदाकुलसानुदेशान् ।
शैलेयजालपरिणद्धशिलातलान्तान्
दृष्ट्वा नतः क्षितिभृतो मुदमेति सर्वः ॥२७॥

नेत्रे निमीलयति रोदिति याति शोकं
घ्राणं करेण विरुणद्धि विरौति चोच्चैः ।
कान्तावियोगपरिखेदितचित्तवृत्ति-
र्दृष्ट्वाध्वगः कुसुमितान् सहकारवृक्षान् ॥२८॥

समदमधुकराणां कोकिलानां च नादै-
र्कुसुमितसहकारैः कर्णिकारैश्च रम्यः ।

इषुभिरिव सुतीक्ष्णैर्मानसं मानिनीनां
तुदति कुसुममासो मन्मथोद्दीपनाय ॥२९॥

रुचिरकनककान्ति मुञ्चतः पुष्पराशीन्
मृदुपवनविधूतान् पुष्पितांश्चूतवृक्षान् ।
अभिमुखमभिवीक्ष्य क्षामदेहोऽपि मार्गे
मदनशरनिघातैर्मोहमेति प्रवासी ॥३०॥

परभृतकलगीतैर्ह्लादिभिः सद्वचांसि
स्मितदशनमयूखान् कुन्दपुष्पप्रभाभिः ।
कलकिसलयकान्ति पल्लवैर्विद्रुमाभं-
रुपहसति वसन्तः कामिनीनामिदानीम् ॥३१॥

कनककमलकान्तैराननैः पाण्डुगण्डै-
रुपरिनिहितहारैश्चन्दनार्द्रैः स्तनान्तैः ।
मदजनितविलासैर्दृष्टिपातैर्मुनीन्द्रान्
स्तनभरनतनार्यः कामयन्ति प्रशान्तान् ॥३२॥

मधुसुरभिमुखाब्जं लोचने लोध्रताम्रे
नवकुरवकपूर्णः केशपाशो मनोज्ञः ।
गुरुतरकुचयुग्मं श्रोणिबिम्बं तथैव
न भवति किमिदानीं योषितां मन्मथाय ॥३३॥

आकम्पितानि हृदयानि मनस्विनीनां
वातैः प्रफुल्लसहकारकृताधिवासैः ।
उत्कूजितैः परभृतस्य मदाकुलस्य
श्रोत्रप्रियैर्मधुकरस्य च गीतनादैः ॥३४॥

रम्यः प्रदोषसमयः स्फुटचन्द्रभासः
पुंस्कोकिलस्य विरुतं पवनः सुगन्धिः ।
मत्तालियूथविरुतं निशि शीधुपानं
सर्वं रसायनमिदं कुसुमायुधस्य ॥३५॥

रक्ताशोकविकल्पिताधरमधुर्मत्तद्विरेफस्वनः
कुन्दापीडविशुद्धदन्तनिकरः प्रोत्फुल्लपद्मराननः ।
चूतामोदसुगन्धिमन्दपवनः शृङ्गारदीक्षागुरुः
कल्पान्तं मदनप्रियो दिशतु वः पुष्पागमो मङ्गलम् ॥३६॥

मलयपवनविद्धः कोकिलालापरम्यः
सुरभिमधुनिषेकाल्लब्धगन्धप्रबन्धः ।
विविधमधुपयूथैर्वेष्टचमानाः समन्ताद्
भवतु तव वसन्त-श्रेष्ठकालः सुखाय ॥३७॥

आम्रीमञ्जुलमञ्जरीवरशरः सत् किंशुकं यद्धनु-
र्ज्या यस्यालिकुलं कलङ्करहितं छत्रं सितांशुः सितम् ।
मत्तेभो मलयानिलः परभृता यद्वन्दिनो लोकजित्
सोऽयं वो वितरीतरीतु वितनुर्भद्रं वसन्तान्वितः ॥३८॥

॥ इति श्रीकालिदासकविविरचिते ऋतुसंहारकाव्ये वसन्तवर्णनो नाम षष्ठः सर्गः ॥६॥

# मेघदूतम्

## पूर्वमेघः

कश्चित् कान्ताविर[1]हगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥१॥

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः ।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ २ ॥

तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो-
रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥३॥

प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिम् ।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥४॥

धूमज्योतिः-सलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि [2]प्रणयकृपणाश्चेतनाचेतनेषु ॥५॥

जातं वंशे भुवनविदिते पुष्करावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद् दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥६॥

---

१. रात् प्र-पा० ।  २. प्रकृति-पा० ।

संतप्तानां त्वमसि शरणं तत्पयोद ! प्रियायाः
सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
वाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥७॥

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्यः ।
कः संनद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥८॥

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वं
वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधानक्षणपरिचयान्नूनमावद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं वलाकाः ॥९॥

तां चावश्यं दिवसगणनातत्परामेकपत्नी-
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।
आशावन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥१०॥

कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां
तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः ।
आ कैलासाद् विसकिसलयच्छेदपाथेयवन्तः
संपत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥११॥

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो वाष्पमुष्णम् ॥१२॥

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद ! श्रोष्यसि श्रोत्रपेयम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्य ॥१३॥

पिता समाराधनतत्परेण पुत्रेण पुत्री स यथैव तेन ।
पुत्रस्तथैवात्मजवत्सलेन स तेन पित्रा पितृमान् वभूव ॥११॥

पूर्वस्तयोरात्मसमे चिरोढामात्मोद्भवे वर्णचतुष्टयस्य ।
धुरं निधायैकनिधिर्गुणानां जगाम यज्वा यजमानलोकम् ॥१२॥

वशी सुतस्तस्य वशंवदत्वात् स्वेपामिवासीद् द्विषतामपीष्टः ।
सकृद् विविग्नानपि हि प्रयुक्तं माधुर्यमीष्टे हरिणान् ग्रहीतुम् ॥१३॥

अहीनगुर्नाम स गां समग्रामहीनवाहुद्रविणः शशास ।
यो हीनसंसर्गपराङ्मुखत्वाद् युवाप्यनर्थैर्व्यसनैर्विहीनः ॥१४॥

गुरोः स चानन्तरमन्तरज्ञः पुंसां पुमानाद्य इवावतीर्णः ।
उपक्रमैरस्खलितैश्चतुर्भिश्चतुर्दिगीशश्चतुरो वभूव ॥१५॥

तस्मिन् प्रयाते परलोकयात्रां जेतर्यरीणां तनयं तदीयम् ।
उच्चैःशिरस्त्वाज्जितपारियात्रं[1] लक्ष्मीःसिषेवे किल पारियात्रम् ॥१६॥

तस्याभवत् सूनुरुदारशीलः शिलः शिलापट्टविशालवक्षाः ।
जितारिपक्षोऽपि शिलीमुखैर्यः शालीनतामव्रजदीड्यमानः ॥१७॥

तमात्मसंपन्नमनिन्दितात्मा कृत्वा युवानं युवराजमेव ।
सुखानि सोऽभुङ्क्त सुखोपरोधि वृत्तं हि राज्ञामुपरुद्धवृत्तम्[2] ॥१८॥

तं रागवन्धिष्ववितृप्तमेव भोगेषु सौभाग्यविशेषभोग्यम् ।
विलासिनीनामरतिक्षमापि जरा वृथा मत्सरिणी जहार ॥१९॥

उन्नाभ इत्युद्गतनामधेयस्तस्यायथार्थोन्नतनाभिरन्ध्रः ।
सुतोऽभवत् पङ्कजनाभकल्पः कृत्स्नस्य नाभिर्नृपमण्डलस्य ॥२०॥

ततः परं वज्रधरप्रभावस्तदात्मजः संयति वज्रघोषः ।
वभूव[3] वज्राकरभूपणायाः पतिः पृथिव्याः किल वज्रणाभः ॥२१॥

तस्मिन् गते द्यां सुकृतोपलब्धां तत्संभवं शङ्खणमर्णवान्ता ।
उत्खातशत्रुं वसुधोपतस्थे रत्नोपहारैरुदितैः खनिभ्यः ॥२२॥

१. पारियात्रः शैलः । २. उपरुद्धो वन्दी । ३. वज्राकरो रत्नाकरः ।

तस्यावसाने हरिदश्वधामा पित्र्यं प्रपेदे पदमश्विरूपः ।
वेलातटेषूषितसैनिकाश्वं पुराविदो यं व्युषिताश्वमाहुः ।।२३।।

आराध्य विश्वेश्वरमीश्वरेण तेन क्षितेर्विश्वसहो विजज्ञे ।
पातुं सहो विश्वसखः समग्रां विश्वम्भरामात्मजमूर्तिरात्मा ।।२४।।

अंशे हिरण्याक्षरिपोः स जाते हिरण्यनाभे तनये नयज्ञः ।
द्विषामसह्यः सुतरां तरूणां हिरण्यरेता इव सानिलोऽभूत् ।।२५।।

पिता पितॄणामनृणस्तमन्ते वयस्यनन्तानि सुखानि लिप्सुः ।
राजानमाजानुविलम्बिबाहुं कृत्वा कृती वल्कलवान् बभूव ।।२६।।

कौसल्य इत्युत्तरकोसलानां पत्युः पतङ्गान्वयभूषणस्य ।
तस्यौरसः सोमसुतः सुतोऽभून्नेत्रोत्सवः सोम इव द्वितीयः ।।२७।।

यशोभिराब्रह्मसभं प्रकाशः स ब्रह्मभूयं गतिमाजगाम ।
ब्रह्मिष्ठमाधाय निजेऽधिकारे ब्रह्मिष्ठमेव स्वतनुप्रसूतम् ।।२८।।

तस्मिन् कुलापीडनिभे विपीडं सम्यङ् महीं शासति शासनाङ्काम् ।
प्रजाश्चिरं सुप्रजसि प्रजेशे ननन्दुरानन्दजलाविलाक्ष्यः ।।२९।।

पात्रीकृतात्मा गुरुसेवनेन स्पष्टाकृतिः पत्त्ररथेन्द्रकेतोः ।
तं पुत्रिणां पुष्करपत्त्रनेत्रः पुत्रः समारोपयदग्रसंख्याम् ।।३०।।

वंशस्थितिं वंशकरेण तेन संभाव्य भावी स सखा मघोनः ।
उपस्पृशन् स्पर्शनिवृत्तलौल्यस्त्रिपुष्करेषु त्रिदशत्वमाप ।।३१।।

तस्य प्रभानिर्जितपुष्परागं पौष्यां तिथौ पुष्यमसूत पत्नी ।
तस्मिन्नपुष्यन्नुदिते समग्रां पुष्टिं जनाः पुष्य इव द्वितीये ।।३२।।

महीं महेच्छः परिकीर्य सूनौ मनीषिणे जैमिनयेऽर्पितात्मा ।
तस्मात् सयोगादधिगम्य योगमजन्मनेऽकल्पत जन्मभीरुः ।।३३।।

ततः परं तत्प्रभवः प्रपेदे ध्रुवोपमेयो ध्रुवसंधिरुर्वीम् ।
यस्मिन्नभूज्ज्यायसि सत्यसन्धे सन्धिर्ध्रुवः संनमतामरीणाम् ।।३४।।

सुते शिशावेव सुदर्शनाख्ये दर्शात्ययेन्दुप्रियदर्शने सः ।
मृगायताक्षो मृगयाविहारी सिंहादवापद् विपदं नृसिंहः ॥३५॥

स्वर्गामिनस्तस्य तमैकमत्यादमात्यवर्गः कुलतन्तुमेकम् ।
अनाथदीनाः प्रकृतीरवेक्ष्य साकेतनाथं विधिवच्चकार ॥३६॥

नवेन्दुना तन्नभसोपमेयं शावैकसिंहेन च काननेन ।
रघोः कुलं कुड्मलपुष्करेण तोयेन चाप्रौढनरेन्द्रमासीत् ॥३७॥

लोकेन भावी पितुरेव तुल्यः संभावितो मौलिपरिग्रहात् सः ।
दृष्टो हि वृण्वन् कलभप्रमाणोऽप्याशाः पुरोवातमवाप्य मेघः ॥३८॥

तं राजवीथ्यामधिहस्ति[1] यान्तमाधोरणालम्बितमग्र्यवेशम् ।
षड्वर्षदेशीयमपि प्रभुत्वात् प्रैक्षन्त पौराः पितृगौरवेण ॥३९॥

कामं न सोऽकल्पत पैतृकस्य सिंहासनस्य प्रतिपूरणाय ।
तेजोमहिम्ना पुनरावृतात्मा तद् व्याप चामीकरपिञ्जरेण ॥४०॥

तस्मादधः किंचिदिवावतीर्णावसंस्पृशन्तौ तपनीयपीठम् ।
सालक्तकौ भूपतयः [2]प्रसिद्धैर्ववन्दिरे मौलिभिरस्य पादौ ॥४१॥

मणौ महानील इति प्रभावादल्पप्रमाणेऽपि यथा न मिथ्या ।
शब्दो महाराज इति प्रतीतस्तथैव तस्मिन् युयुजेऽर्भकेऽपि ॥४२॥

पर्यन्तसंचारितचामरस्य कपोललोलोभयकाकपक्षात् ।
तस्याननादुच्चरितोऽपि[3] वादश्चस्खाल वेलास्वपि नार्णवानाम् ॥४३॥

निर्वृत्तजाम्बूनदपट्टशोभे न्यस्तं ललाटे तिलकं दधानः ।
तेनैव शून्यान्यरिसुन्दरीणां मुखानि स स्मेरमुखश्चकार ॥४४॥

शिरीषपुष्पाधिकसौकुमार्यः खेदं स यायादपि भूषणेन ।
नितान्तगुर्वीमपि सोऽनुभावाद् धुरं धरित्र्या विभरांबभूव ॥४५॥

---

१. हस्तयन्तं पा० हे० २. कु० ५।९ ३. दुच्चरितो वि० म०

न्यस्ताक्षरामक्षरभूमिकायां कार्त्स्न्येन गृह्णाति लिपिं न यावत् ।
सर्वाणि तावच्छ्रुतवृद्धयोगात् फलान्युपायुङ्क्त स दण्डनीतेः ॥४६॥

उरस्यपर्याप्तनिवेशभोगा[1] प्रौढीभविष्यन्तमुदीक्षमाणा ।
संजातलज्जेव तमातपत्रच्छायाच्छलेनोपजुगूह लक्ष्मीः ॥४७॥

अनश्नुवानेन युगोपमानमबद्धमौर्वीकिणलाञ्छनेन ।
अस्पृष्टखड्ग-त्सरुणापि चासीद् रक्षावती तस्य भुजेन भूमिः ॥४८॥

न केवलं गच्छति तस्य काले ययुः शरीरावयवा विवृद्धिम् ।
वंश्या गुणाः खल्वपि लोककान्ताः प्रारम्भसूक्ष्माः प्रथिमानमापुः ॥४९॥

स पूर्वजन्मान्तरदृष्टपाराः स्मरन्निवाक्लेशकरो गुरूणाम् ।
तिस्रस्त्रिवर्गाधिगमस्य मूलं जग्राह विद्याः प्रकृतीश्च पित्र्याः ॥५०॥

व्यूह्य स्थितः किंचिदिवोत्तरार्धमुन्नद्धचूडोऽञ्चितसव्यजानुः ।
आकर्णमाकृष्ट-सबाणधन्वा व्यरोचतास्त्रेषु विनीयमानः ॥५१॥

अथ मधु वनितानां नेत्रनिर्वेशनीयं[2]
मनसिजतरुपुष्पं रागबन्धप्रवालम् ।
अकृतक-विधिसर्वाङ्गीणमाकल्पजातं
विलसितपदमाद्यं यौवनं स प्रपेदे ॥५२॥

प्रतिकृतिरचनाभ्यो दूतिसंदर्शिताभ्यः
समधिकतररूपाः शुद्धसंतानकामैः ।
अधिविविदुरमात्यैराहृतास्तस्य यूनः
प्रथमपरिगृहीते श्रीभुवौ राजकन्याः ॥५३॥

॥ इति श्रीमहाकविकालिदासकृतौ रघुवंशे महाकाव्ये
वंशानुक्रमो नामाष्टादशः सर्गः ॥

---

१. भागा म० २. ०शपेयं पा०

# एकोनविंशः सर्गः

अग्निवर्णमभिषिच्य राघवः स्वे पदे तनयमग्नितेजसम् ।
शिश्रिये श्रुतवतामपश्चिमः पश्चिमे वयसि नैमिषं वशी ॥१॥

तत्र तीर्थसलिलेन दीर्घिकास्तल्पमन्तरितभूमिभिः कुशैः ।
सौधवासमुटजेन विस्मृतः सञ्चिकाय फलनिःस्पृहस्तपः ॥२॥

लब्धपालनविधौ न तत्सुतः खेदमाप गुरुणा हि मेदिनी ।
भोक्तुमेव भुजनिर्जितद्विषा न प्रसाधयितुमस्य कल्पिता ॥३॥

सोऽधिकारमभिकः कुलोचितं काश्चन स्वयमवर्तयत् समाः ।
संनिवेश्य सचिवेष्वतः परं स्त्रीविधेयनवयौवनोऽभवत् ॥४॥

कामिनीसहचरस्य कामिनस्तस्य वेश्मसु मृदङ्गनादिषु ।
ऋद्धिमन्तमधिकर्द्धिरुत्तरः पूर्वमुत्सवमपोहदुत्सवः ॥५॥

इन्द्रियार्थपरिशून्यमक्षमः सोढुमेकमपि स क्षणान्तरम् ।
अन्तरेव विहरन् दिवानिशं न व्यपैक्षत समुत्सुकाः प्रजाः ॥६॥

गौरवाद् यदपि जातु मन्त्रिणां दर्शनं प्रकृतिकाङ्क्षितं ददौ ।
तद् गवाक्षविवरावलम्बिना केवलेन चरणेन कल्पितम् ॥७॥

तं कृतप्रणतयोऽनुजीविनः कोमलात्मनखरागरूषितम् ।
भेजिरे नवदिवाकरातपस्पृष्टपङ्कजतुलाधिरोहणम् ॥८॥

यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाश्च दीर्घिकाः ।
गूढमोहनगृहास्तदम्बुभिः स व्यगाहत विगाढमन्मथः ॥९॥

तत्र सेकहृतलोचनाञ्जनैर्धौतरागपरिपाटलाधरैः ।
अङ्गनास्तमधिकं व्यलोभयन्नर्पितप्रकृतकान्तिभिर्मुखैः ॥१०॥

घ्राणकान्तमधुगन्धकर्षिणीः पानभूमिरचनाः [1]प्रियासखः ।
अभ्यपद्यत स वासितासखः पुष्पिता कमलिनीरिव द्विपः ॥११॥

सातिरेकमदकारणं रहस्तेन दत्तमभिलेषुरङ्गनाः ।
ताभिरप्युपहृतं मुखासवं सोऽपिबद् वकुलतुल्यदोहदः ॥१२॥

अङ्कमङ्कपरिवर्तनोचिते तस्य निन्यतुरशून्यतामुभे ।
वल्लकी च हृदयङ्गमस्वना वल्गुवागपि च वामलोचना ॥१३॥

स स्वयं प्रहतपुष्करः कृती लोलमाल्यवलयो हरन्मनः ।
नर्तकीरभिनयातिलङ्घिनीः पार्श्ववर्तिषु गुरुष्वलज्जयत् ॥१४॥

चारु नृत्यनिगमे च तन्मुखं स्वेदभिन्नतिलकं परिश्रमात् ।
प्रेमदत्तवदनानिलः पिबन्नत्यजीव-[1]दमरालकेश्वरी ॥१५॥

तस्य सावरणदृष्टसन्धयः काम्यवस्तुषु नवेषु सङ्गिनः ।
वल्लभाभिरुपसृत्य चक्रिरे सामिभुक्तविषयाः समागमाः ॥१६॥

अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितम् ।
मेखलाभिरसकृच्च बन्धनं वञ्चयन् प्रणयिनीरवाप सः ॥१७॥

तेन दूतिविदितं निषेदुषा पृष्ठतः सुरतवाररात्रिषु ।
शुश्रुवे प्रियजनस्य कातरं विप्रलम्भपरिशङ्किनो वचः ॥१८॥

लौल्यमेत्य गृहिणीपरिग्रहान्नर्तकीष्वसुलभासु तद्वपुः ।
वर्तते स्म स कथंचिदालिखन्नङ्गुलीक्षरणसन्नवर्तिकः ॥१९॥

प्रेमगर्वितविपक्षमत्सरादायताच्च मदनान्महीक्षितम् ।
निन्युरुत्सवविधिच्छलेन तं देव्य उज्झितरुषः कृतार्थताम् ॥२०॥

प्रातरेत्य परिभोगशोभिना दर्शनेन कृतखण्डनव्यथाः ।
प्राञ्जलिः प्रणयिनीः प्रसादयन् सोऽधुनोत् प्रणयमन्थरः पुनः ॥२१॥

---

१. अमराया अमरावत्या अलकायाश्चेत्यपिच्छेदः । द्र० हेमाद्रेर्दर्पणः ।

स्वप्नकीर्तितविपक्षमङ्गनाः प्रत्यभैत्सुरवदन्त्य एव तम् ।
प्रच्छदान्तगलिताश्रुबिन्दुभिः क्रोधभिन्नवलयैर्विवर्तनैः ॥२२॥

क्लृप्तपुष्पशयनाँल्लतागृहानेत्य दूतिकृतमार्गदर्शनः ।
अन्वभूत् परिजनाङ्गनारतं सोऽवरोधभयवेपथूत्तरम् ॥२३॥

नाम वल्लभजनस्य ते मया प्राप्य भाग्यमपि तस्य काङ्क्ष्यते ।
लोलुपं ननु मनो ममेति तं गोत्रविस्खलितमूचुरङ्गनाः ॥२४॥

चूर्णबभ्रु लुलितस्रगाकुलं छिन्नमेखलमलक्तकाङ्कितम् ।
उत्थितस्य शयनं विलासिनस्तस्य विभ्रमरतान्यपावृणोत् ॥२५॥

स स्वयं चरणरागमादधे योषितां न च तथा समाहितः ।
लोभ्यमाननयनः श्लथांशुकैर्मेखलागुणपदैर्नितम्बिभिः ॥२६॥

चुम्बने विपरिवर्तिताधरं हस्तरोधि रसनाविघट्टने ।
विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद् वधूरतम् ॥२७॥

दर्पणेषु परिभोगदर्शिनीर्नर्मपूर्वमनुपृष्ठसंस्थितः ।
छायया स्मितमनोज्ञया वधूर्ह्रीनिमीलितमुखीश्चकार सः ॥२८॥

कण्ठसक्तमृदुबाहुबन्धनं न्यस्तपादतलमग्रपादयोः ।
प्रार्थयन्त शयनोत्थितं प्रियास्तं निशात्ययविसर्गचुम्बनम् ॥२९॥

प्रेक्ष्य दर्पणतलस्थमात्मनो राजवेशमतिशक्रशोभिनम् ।
पिप्रिये न स तथा यथा युवा व्यक्तलक्ष्म परिभोगमण्डनम् ॥३०॥

मित्रकृत्यमपदिश्य पार्श्वतः प्रस्थितं तमनवस्थितं प्रियाः ।
विद्महे शठ पलायनच्छलान्यञ्जसेति रुरुधुः कचग्रहैः ॥३१॥

तस्य निर्दयरतिश्रमालसाः [1]कण्ठसूत्रमपदिश्य योषितः ।
अध्यशेरत बृहद् भुजान्तरं पीवरस्तनविलुप्तचन्दनम् ॥३२॥

संगमाय निशि गूढचारिणं चारदूतिकथितं पुरोगताः ।
वञ्चयिष्यसि कुतस्तमोवृतः कामुकेति चकृषुस्तमङ्गनाः ॥३३॥

१. कण्ठसूत्रं सुरतबन्धविशेषः ।

योषितामुडुपतेरिवार्चिषां स्पर्शनिर्वृतिमसाववाप्नुवन्[1] ।
आरुरोह कुमुदाकरोपमां रात्रिजागरपरो दिवाशयः ॥३४॥

वेणुना दशनपीडिताधरा वीणया नखपदाङ्कितोरवः[2] ;
शिल्पकार्यं उभयेन वेजितास्तं विजिह्मनयना व्यलोभयन् ॥३५॥

अङ्गसत्त्ववचनाश्रयं मिथः स्त्रीषु नृत्यमुपधाय दर्शयन् ।
स प्रयोगनिपुणैः प्रयोक्तृभिः संजघर्ष सह मित्रसन्निधौ ॥३६॥

अंसलम्बिकुटजार्जुनस्रजस्तस्य नीपरजसाङ्गरागिणः ।
प्रावृषि प्रमदबर्हिणेष्वभूत् कृत्रिमाद्रिषु विहारविभ्रमः ॥३७॥

विग्रहाच्च शयने पराङ्मुखीर्नानुनेतुमबलाः स तत्वरे ।
आचकाङ्क्ष घनशब्दविक्लवास्ता विवृत्य विशतीर्भुजान्तरम् ॥३८॥

कार्त्तिकीषु सवितानहर्म्यभाग् यामिनीषु ललिताङ्गनासखः ।
अन्वभुङ्क्त सुरतश्रमापहां मेघमुक्तविशदां स चन्द्रिकाम् ॥३९॥

सैकतं च सरयूं विवृण्वतीं श्रोणिबिम्बमिव हंसमेखलाम्[3] ।
स्वप्रियाविलसितानुकारिणीं सौधजालविवरैर्व्यलोकयत् ॥४०॥

मर्मरैरगुरुधूपगन्धिभिर् व्यक्तहेमरसनैस्तमेकतः ।
जह्रु – राग्रथनमोक्षलोलुपं हैमनैर्निवसनैः सुमध्यमाः ॥४१॥

अर्पितस्तिमितदीपदृष्टयो गर्भवेश्मसु निवातकुक्षिषु ।
तस्य सर्वसुरतान्तरक्षमाः साक्षितां शिशिररात्रयो ययुः ॥४२॥

दक्षिणेन पवनेन संभृतं प्रेक्ष्य चूतकुसुमं सपल्लवम् ।
अन्वनैपुरवधूतविग्रहास्तं दुरुत्सहवियोगमङ्गनाः ॥४३॥

ताः स्वमङ्कमधिरोप्य दोलया प्रेङ्खयन् परिजनापविद्धया ।
मुक्तरज्जु निबिडं भयच्छलात् कण्ठबन्धनमवाप बाहुभिः ॥४४॥

---

१. वनाप्नुवन् पा० २. '०रसः पा० ३. ०मेखलम्-म०

तं पयोधरनिषिक्तचन्दनैर् मौक्तिकग्रथितचारुभूषणैः ।
ग्रीष्मवेषविधिभिः सिषेविरे श्रोणिलम्बिमणिमेखलैः प्रियाः ॥४५॥

यत् स लग्नसहकारमासवं रक्तपाटलसमागमं पपौ ।
तेन तस्य मधुनिर्गमात् कृशश्चित्तयोनिरभवत् पुनर्नवः ॥४६॥

एवमिन्द्रियसुखानि निर्विशन्नन्यकार्यविमुखः स पार्थिवः ।
आत्म—लक्षणनिवेदितानृतू—नत्यवाहयदनङ्ग-वाहितः ॥४७॥

तं प्रमत्तमपि न प्रभावतः शेकुराक्रमितुमन्यपार्थिवाः ।
आमयस्तु रतिरागसंभवो दक्षशाप इव चन्द्रमक्षिणोत् ॥४८॥

दृष्टदोषमपि तन्न सोऽत्यगात् सङ्गमं[1] तु भिषजामनाश्रवः ।
स्वादुभिस्तु विषयैर्हृतस्ततो दुःखमिन्द्रियगणो निवार्यते ॥४९॥

तस्य पाण्डुवदनाऽल्पभूषणा सावलम्बगमना मृदुस्वना ।
राजयक्ष्मपरिहाणिराययौ कामयानसमवस्थया तुलाम् ॥५०॥

व्योम पश्चिमकलास्थितेन्दु वा पङ्कशेषमिव घर्मपल्वलम् ।
राज्ञि तत्कुलमभूत् क्षयातुरे वामनार्चिरिव दीपभाजनम् ॥५१॥

वाढमेषु दिवसेषु पार्थिवः कर्म साधयति पुत्रजन्मने ।
इत्यदर्शितरुजोऽस्य मन्त्रिणः शश्वदूचुरघशङ्किनीः प्रजाः ॥५२॥

स त्वनेकवनितासखोऽपि सन् पावनीमनवलोक्य सन्ततिम् ।
वैद्ययत्नपरिभाविनं गदं न प्रदीप इव वायुमत्यगात् ॥५३॥

तं गृहोपवन एव संगताः पश्चिमक्रतुविदा पुरोधसा ।
रोगशान्तिमपदिश्य मन्त्रिणः संभृते शिखिनि गूढमादधुः ॥५४॥

तैः कृतप्रकृतिमुख्यसंग्रहैराशु तस्य सहधर्मचारिणी ।
साधु दृष्टशुभगर्भलक्षणा प्रत्यपद्यत नराधिपश्रियम् ॥५५॥

---

१. सोऽत्यजत् संगवस्तु म० ।

तस्यास्तथाविधनरेन्द्रविपत्तिशोका-
दुष्णैर्विलोचनजलैः प्रथमाभितप्तः ।
निर्वापितः कनककुम्भमुखोज्झितेन
वंशाभिषेकविधिना शिशिरेण गर्भः ॥५६॥

तं [1]भावार्थं प्रसवसमयाकाङ्क्षिणीनां प्रजाना-
मन्तर्गूढं क्षितिरिव नभोवीजमुष्टिं दधाना ।
मौलैः सार्धं स्थविरसचिवैर्हेमसिंहासनस्था
राज्ञी राज्यं विधिवदशिषद् भर्तुरव्याहताज्ञा[2] ॥५७॥

॥ इति श्रीमहाकविकालिदासकृतौ रघुवंशे महाकाव्ये
गर्भाभिषेको नामैकोनविंशः सर्गः ॥

[समाप्तमिदं रघुवंशाख्यं[3] महाकाव्यम्]

---

१. भूत्य० पा०, भावो भूतिः म०

२. श्रीलङ्काप्रस्तरलेखोल्लेखादिकमाश्रित्य पञ्चविंशतिसर्गात्मकमिदं काव्यमिति केचित् । अत्रैवेदं पर्यपूरीति तु वयम् । अत्र रघुर्नायकस्तस्यैवैकस्याजन्मशुद्ध्यादिषोडश-गुणवत्त्वात् । अन्येषां चरितानि पुनस्तत्तद्गुणहानेः कस्कोऽपकर्ष इति व्यतिरेकमुखेन रघोरेव प्रशंसा । रामावतारस्तु पौरुषं दौर्बल्यमित्याद्यावेदितमेव ।

३. क. कुमारसंभववत् कालिदासस्य रघुवंशं, विक्रमोर्वशीयं, शाकुन्तलं चेति त्रितयमपि कुमारसंभवमेव । तत्र कुमारसंभवे कुमारो दिव्यः, विक्रमोर्वशीये दिव्यादिव्यः, शाकुन्तले रघुवंशे च मानुषः । तत्रापि रघुवंशे तन्नायको रघुः परम्परयाप्यदिव्ययोनिरिति रघुवंशमेव सुमानुषं श्रेष्ठं च महाकाव्यम् ।

ख. रघुवंशस्य प्रक्षिप्तानि पद्यानि परिशिष्टे द्रष्टव्यानि ।

# पात्राणि

**पुरुषाः**

सूत्रधारः—नाटकस्य प्रबन्धकः

पारिपार्श्वकः—सूत्रधारस्य सहचरः ।

राजा—अग्निमित्राख्यो विदिशाधीशः ।

वाहतकः—प्राचीन-मन्त्री ।

विदूषकः—राज्ञो मित्रम् ।

कञ्चुकी—अन्तःपुराध्यक्षो वृद्धः ।

गणदासः हरदत्तश्च—नाट्याचार्यौ ।

सारसः—कुब्जः किङ्करः ।

वैतालिकः—स्तुतिपाठकः ।

**स्त्रियः**

मालविका—मालवेशमाधवसेन-भगिनी ।

धारिणी—अग्निमित्रस्य प्रधान-महिषी ।

इरावती—अग्निमित्रस्य द्वितीया पत्नी ।

परिव्राजिका—कौशिकीनाम्नी माधव-सेवसचिवस्य सुमते-र्विधवा भगिनी ।

बकुलावलिका—मालविकायाः सखी ।

मधुकरिका—उद्यानपालिका ।

कौमुदिका—दासी ।

समाहितिका—पारिव्राजिकायाः परिचारिका ।

निपुणिका—इरावतीपरिचारिका ।

जयसेना—प्रतीहारी ।

चेटी—अपरा दासी ।

मदनिका, ज्योत्स्निका—विदर्भदेशीयं शिल्पिकन्याद्वयम् ।

# मालविकाग्निमित्रम्

[ [1]पूर्वरङ्गः : नान्दी ]

एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः,
कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्ताद् यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः,
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥१॥

---

१. इयमस्मत्कृता योजना । अत्र 'प्रथमोऽङ्कः' इति सा. नि. च । तत्र पूर्वरङ्गो द्वाविंशत्यङ्गः । अङ्गानि चास्य भरतदिशा द्विविधानि अन्तर्यमनिकासंस्थानि, बहिर्यमनिकासंस्थानीति कृत्वा । तत्राद्यानि नेपथ्यगतानि, शेषाणि च मञ्चगतानि । अङ्गेष्वेषु नान्दी अन्यतमम् । तच्च मञ्चगतम् । नान्द्यामप्यस्यां द्वैविध्यम् चित्रत्वेन, शुद्धत्वेन च । तत्र चित्रा प्रतिपादं गीत-नृत्य-पुष्करवाद्यमिश्रिता । पुष्करवाद्यमात्रमिश्र-मङ्गलश्लोकपाठरूपा च शुद्धा, केवलस्य श्लोकपाठस्य मुनिनैव "भाण्डेनैव समः कार्यस्तज्ज्ञैर्गीतपरिक्रम" इति निषिद्धत्वात् । गीतं चात्र ध्रुवागीत-रूपम् । भाण्डं च भणतीति व्युत्पत्त्या पुष्कर इत्यभिनवगुप्तः । अस्ति च केवलः पुष्करोऽपि नान्दीपद-वाच्यः । तथा चामरकोषे 'नान्दीवाद'—पदस्य व्याख्यायां 'नाटकादौ मङ्गलार्थं भेर्यादिवादकस्ये'—ति भानुजिदीक्षितः, 'नक्तन्दिवमसंहृत-नान्दीकः पट्टाभिषेकसमय' इत्युत्तररामचरितप्रस्तावनायां भवभूतिः, वासवदत्ताकथान्तागतयुद्धप्रस्तावे 'कौतुकाकृष्ट-जन-कृत-वदन-नान्दीक' इति 'समुत्पतदतिनिनद—नान्दीक' इति च तत्पाठान्तरे रणखल-विशेषणेषु सुबन्धुश्च । अत एव च कालिदासोऽप्यत्रैव प्रथमाङ्कावसाने 'मृदङ्गशब्द एव न उत्थापयिष्यती'—ति, 'नेपथ्ये मृदङ्गध्वनिरिति'—'जीमूतस्तनिते—' त्यादि चोपनिबध्नाति, सूचयति च मृदङ्गवाद्यस्याभ्यर्हितत्वं प्रयोगारम्भे । अस्ति चेयं परम्पराद्यत्वेऽपि जीविता । अत एव 'नौटंकी'—त्यभिधीयमानेषु ग्राम्येषु नाट्यप्रयोगेषु मृदङ्गध्वनेरेव प्राधान्यम्, रामलीलादिषु च । उच्यते च भरतेनापि पुष्कराध्याये 'पूर्वं हि भाण्डवाद्येन सिद्धिरुत्पादनीया, स्त्री-बाल-मूर्खाकीर्णे हि रङ्गे कुतूहल जननसमर्थं वाद्यमुपपन्नं भवती—'

(नान्द्यन्ते)

।। [1]प्रस्तावना ।।

सूत्रधारः—(नेपथ्याभिमुखमवलोक्य) अलमतिविस्तरेण । मारिष ! इतस्तावत् ।

(प्रविश्य)

पारिपार्श्विकः—भाव ! अयमस्मि ।

सूत्र०—अभिहितोऽस्मि विद्वत्परिषदा कालिदासग्रथितवस्तु मालविकाग्निमित्रं नाम नाटकम् अस्मिन् वसन्तोत्सवे प्रयोक्तव्यमिति । तदारभ्यतां संगीतकम् ।

---

(ना० शा० ३४ अ० व.सं,पृ. २२२)–ति । अस्ति चावधानाय सिनेमास्वपि घण्टिकाया नादत्रयमिदानींतनैरपि दृष्टप्रवृत्तिकम् । एष च मृदङ्गध्वनिर्नान्दीश्लोकपाठेऽभ्यर्हित इत्यत्रापि भरत एव प्रमाणम् 'वहिर्यमनिकासंस्थानां' समेषामपि पूर्वरङ्गाङ्गानां सवाद्यत्वमयोगव्यवच्छेदेनोपनिबध्नन् । यथा चैतत् तदपि पुष्कराध्यायेनैव स्पष्टम् । अत एव च मुद्राराक्षसे विशाखदत्तः 'असौ नान्दीनादः पटुपटहशङ्खध्वनिमहान्' (६।१४) इति, 'द्वादशतूर्यनिर्घोषो नान्दी'—त्यन्येऽपि (मा०, काशि० ६।३।६३) । ध्यासूत्र्यते चात एव कुतुपविधानस्य प्राथम्यं भरतेनैव पूर्वरङ्गाङ्गेषु । कुतुपश्च 'कुतुपो मुरजादीनां भाण्डानां निचयः स्मृत' इति भावप्रकाशनलक्षणोक्तः पुष्करादीनां निचयः । एवंगतेऽत्र स्थिरमिदं यन्नान्दीश्लोकः प्रतिचरणं नान्दीवाद्येनानुगन्तव्यध्रुवः । स च श्लोको येन पठ्यते स सूत्रधार एवेति भरतः । कालिदासे पुनः नान्द्यन्ते सूत्रधारस्याविस्तरगिरः पारिपार्श्विकस्य च सत्त्वात् सूत्रधारातिरिक्तपात्रप्रयोक्तव्यत्वं श्लोकनान्द्याः स्थिरम् । तानि च पात्राण्यत्रोत्थापकपदवाच्यानीति शास्त्रविदः । निर्देशाभावान्नान्दीयं प्रयोक्तृभिश्चित्रत्वेन शुद्धत्वेन वा यथाकामं प्रयोक्तव्येति कामचारलाभः । चित्रत्वेन प्रयोक्तव्यत्वे पुनरत्र प्रतिचरणं मृदङ्गवाद्यं, गीतं, नृत्यं, ध्रुवा गीतिः, पारिपार्श्विकयोः 'एवमार्य' इति वचनानि चावश्यकानि । तत्र य एव परेषामुत्थापकः स एव भरतस्य स्थापकः । उदुपसर्गेण स्थापकस्यैवोत्थापकत्वसिद्धेः । अत्राभिनवगुप्तः 'सूत्रधार एव स्थापकः इति सूत्रधारः पूर्वरङ्गं प्रयुज्य स्थापकः सन् प्रविशेत् इति न भिन्नकर्तृता' इति ।

१. पूर्वरङ्ग इति शेषः । इयमस्मत्कृता योजना ।

पारि०—मा तावत् । प्रथितयशसां भास-सौमिल्ल-कविपुत्रादीनां प्रवन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं वहुमानः ।

सूत्र०—अयि । विवेकविश्रान्तमभिहितम् । पश्य

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद् भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥२॥

पारि०—आर्यमिश्राः प्रमाणम् ।

सूत्र०—तेन हि त्वरतां भवान् ।

शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्तुम् ।
देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम् ॥३॥

( निष्क्रान्तौ )

॥ इति प्रस्तावना [1]पूर्वरङ्गश्च ॥

---

१. पूर्वरङ्ग इत्यस्मदयोजना

## ।। [1]अथ मिश्रविष्कम्भकः ।।

(ततः प्रविशति वकुलावलिका ।)

वकु०—आणत्तम्हि देवीए धारणीए । अइरप्पउत्तोवदेसं [2]छलिअं णाम णट्टअं अन्दरेण कीरिसी मालविअ त्ति णट्टाअरिअं अज्जगणदासं पुच्छिदुं । ता दाव संगीदसालं गच्छम्हि । (आज्ञप्तास्मि देव्या धारिण्या 'अचिरप्रवृत्तोपदेशं छलिकं नाम नाट्यमन्तरेण कीदृशी मालविकेति नाट्याचार्यमार्यगणदासं प्रष्टुम् । तत् तावत् संगीतशालां गच्छामि' ।) (परिक्रामति)

(ततः प्रविशत्याभरणहस्ता कौमुदिका)

वकु०—(कौमुदिकां दृष्ट्वा) हला कोमुदीए, कुदो दे दाणिं इअं धीरदा, जं समीवेण वि अदिक्कमन्ती इदो दिट्ठिं ण देसि । (सखि कौमुदिके ! कुतस्त इदानीमियं धीरता, यत् समीपेनाप्यतिक्रामन्ती इतो दृष्टिं न ददासि ।)

कौमु०—अम्हो वउलावलिआ ? सहि ! देवीए इदं सिप्पिसआसादो आणीदं णागमुद्दासणाहं अंगुलीअअं सिणिद्धं णिज्झाअन्ती तुह उवालम्भे पडिदम्हि । (अहो वकुलावलिका । सखि ! देव्या इदं शिल्पि-सकाशादानीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निध्यायन्ती तवोपालम्भे पतितास्मि ।)

वकु०—(विलोक्य) ठाणे सज्जदि दिट्ठी । इमिणा अंगुलीअएण उब्भिण्ण-किरणकेसरेण कुसुमिदो विअ दे अग्गहत्थो पडिभादि । (स्थाने सज्जति दृष्टिः । अनेनाङ्गुलीयकेन उद्भिन्नकिरणकेसरेण कुसुमित इव ते अग्रहस्तः प्रतिभाति ।)

कौमु०—हला ! कहिं पत्थिदासि । (सखि ! कुत्र प्रस्थितासि ।)

वकु०—देवीए एव्व वअणेण णट्टाआरिअं अज्जगणदासं पुच्छिदुं उव-देसग्गहणे कीरिसी मालविए त्ति । (देव्या एव वचनेन नाटयाचार्यम् आर्यगणदासं प्रष्टुम् उपदेशग्रहणे कीदृशी मालविकेति ।)

---

१. इयमस्मत्कृता योजना । २. चलिअं. पा०

कौमु०—सहि ईरिसेण वावारेण असण्णिहिदा वि सा कहं भट्टिणा दिट्ठा। (सखि ! ईदृशेन व्यापारेणासंनिहितापि सा कथं भर्त्रा दृष्टा।)

वकु०—आम्। सो जणो देवीए पास्सगदो चित्ते दिट्ठो। (आम्। स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः।)

कौमु०—कहं विश्र। (कथमिव ?)

वकु०—सुणु। चित्तसालं गदा देवी जदा पच्चग्गवण्णराश्रं चित्तलेहं श्राश्रारिअस्स श्रालोअन्ती चिठ्ठदि भट्टा श्र उवट्ठिदो। (शृणु। चित्रशालां गता देवी यदा प्रत्यग्रवर्णरागां चित्रलेखामाचार्यस्य आलोकयन्ती तिष्ठति भर्ता च उपस्थितः।)

कौमु०—तदो तदो। (ततस्ततः।)

वकु०—उवआराणन्तरं एक्कासणोवविट्ठेण भट्टिणा चित्तगदाए देवीए परिअणमज्झगदं आसण्णदारिश्रं देक्खिअ देवी पुच्छिदा। (उपचारानन्तरमेकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजनमध्य-गताम् आसन्नदारिकां दृष्ट्वा देवी पृष्टा।)

कौमु०—किं ति। (किमिति।)

वकु०—अपुव्वा इश्रं दारिश्रा देवीए आसण्णा आलिहिदा किं णामहेए त्ति। (अपूर्वेयं दारिका देव्या आसन्ना आलिखिता किंनामधेयेति।)

कौमु०—श्राकिदिविसेसेसु आअरो पदं करेति। तदो तदो। (आकृति-विशेषेष्वादरः पदं करोति। ततस्ततः।)

वकु०—तदो अवहीरिअवअणो भट्टा संकिदो देवीं पुणोवि अणुबंधिदुं पउत्तो। तदो कुमारिए वसुलच्छीए आअक्खिदम् अज्ज एसा मालविए'त्ति। (ततोऽवधीरितवचनो भर्ता शङ्कितो देवीं पुनरप्यनुबन्धुं प्रवृत्तः। ततः कुमार्या वसुलक्ष्म्या आख्यातम् आर्य एषा मालविकेति।)

कौमु०—[सस्मितम्] सरिसं क्खु वालभाअस्स। श्रदो अवरं कहेहि। (सदृशं खलु वालभावस्य। अतोऽपरं कथय।)

वकु०—किं अण्णं। संपदं मालविआ सविसेसं भट्टिणो दंसणपहादो रक्खीअदि। (किमन्यत्। साम्प्रतं मालविका सविशेषं भर्तुर्दर्शन-पथाद् रक्ष्यते।)

कौमु०—हला! अणुचिट्ठ अत्तणो णिओअं। अहं वि एवं अङ्गुलीअअं देवीए उवणइस्सं। (सखी! अनुतिष्ठात्मनो नियोगम्। अहमप्येत-दङ्गुलीयकं देव्या उपनेष्यामि।)

(निष्क्रान्ता।)

वकु०—(परिक्रम्यवलोक्य) एसो णट्टाअरिओ संगीदसालादो णिग्गच्छदि। जाव से अत्ताणं दंसेमि। (एष नाट्याचार्यः संगीतशालातो निर्गच्छति। यावदस्मै आत्मानं दर्शयामि।) (इति परिक्रामति।)

(प्रविश्य)

गण०—कामं खलु सर्वस्यापि कुलविद्या वहुमता। न पुनरस्माकं नाटचं प्रति मिथ्या गौरवम्। तथाहि—

देवानामिदमामनन्ति मुनयः [1]शान्तं क्रतुं चाक्षुषं
रुद्रेणदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य वहुधाप्येकं समाराधन[2]म्॥४॥

वकु०—(उपेत्य) अज्ज वन्दामि। (आर्यं वन्दे।)

गण०—भद्रे चिरञ्जीव।

वकु०—अज्जा देवी पुच्छदि अवि उवदेसग्गहणे णादिकीलिस्सदि वो सिस्सा मालविएत्ति। (आर्य! देवी पृच्छति अप्युपदेशग्रहणे नाति-क्लिश्नाति वः शिष्या मालविकेति।)

गण०—भद्रे! विज्ञाप्यतां देवी परमनिपुणा मेधाविनी चेति। किं वहुना—

---

१. कान्तम्—पा०, शान्तं पशुवधादिनिष्ठुरव्यापारानञ्चितम्। २. ०कम् का.

यद् यत् प्रयोगविषये भाविकमुपदिश्यते मया तस्यै ।
तत् तद् विशेषकरणात् प्रत्युपदिशतीव मे बाला ॥५॥

वकु०—(आत्मगतम्) अदिक्कमती विअ इरावदिं पेक्खामि । (प्रकाशम्) किदत्था दाणिं वो सिस्सा जाए गुरुअणो एवं तुस्सदि । (अतिक्रामन्तीमिव इरावतीं पश्यामि । (प्रकाशम्) कृतार्थेदानीं वः शिष्या यस्या गुरुजन एवं तुष्यति ।)

गण०—भद्रे ! तद्विधानामसुलभत्वात् पृच्छामि—कुतो देव्या तत् पात्रमानीतम् ।

वकु०—अत्थि देवीए वण्णावरो भादा वीरसेणो णाम । सो भट्टिणा णम्मदातीरे अन्तवालदुग्गे ठाविदो । तेण सिप्पाहिआरे जोग्गा इअं दारिएत्ति भणिअ भइणीए देवीए उवाअणं पेसिदा । (अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम । स भर्त्रा नर्मदातीरे अन्तपालदुर्गे स्थापितः । तेन शिल्पाधिकारे योग्येयं दारिकेति भणित्वा भगिन्या देव्या उपायनं प्रेपिता ।)

गण०—(आत्मगतम्) आकृतिविशेषप्रत्ययादेनामनूनवस्तुकां संभावयामि । (प्रकाशम्) भद्रे ! मयापि यशस्विना भवितव्यम् । यतः—

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥६॥

वकु०—अज्ज ! कहिं दाणिं वो सिस्सा । (आर्य ! कुत्रेदानीं वः शिष्या ।)

गण०—इदानीमेव [1]पञ्चाङ्गाभिनयमुपदिश्य मया विश्रम्यतामित्यभिहिता दीर्घिकावलोकनगवाक्षगता प्रवातमासेवमाना तिष्ठति ।

वकु०—तेण हि पुणो अणुजाणादु मं अज्जो । जाव से अज्जस्स परितोसणिवेदणेण उस्साहं वड्ढेमि । (तेन हि पुनरनुजानातु मामार्यः । यावदस्या आर्यस्य परितोषनिवेदनेनोत्साहं वर्धयामि ।)

गण०—दृश्यतां सखी । अहमपि लब्धक्षणः स्वगृहं गच्छामि ।

(निष्क्रान्तौ)

॥ इति मिश्रविष्कम्भकः ॥

---

१. नृत्त-कैवारी-मर्मर-जागर-गीतानि. का., चित्ताक्षिभ्रूहस्तपादचेष्टासाम्यम्. प.

## [1]अथ प्रथमोऽङ्कः

(ततः प्रविशत्येकान्तस्थितपरिजनो मन्त्रिणा लेखहस्तेनान्वास्यमानो राजा।)

राजा—(अनुवाचितलेखममात्यं विलोक्य) वाहतक! किं प्रतिपद्यते वैदर्भः ?

अमा०—देव आत्मविनाशम्।

राजा—संदेशमिदानीं श्रोतुमिच्छामि।

अमा०—इदमिदानीमनेन प्रतिलिखितम्—पूज्येनाहमादिष्टः—'भवतः पितृव्यपुत्रः कुमारो माधवसेनः प्रतिश्रुतसंबन्धो ममोपान्तिकमुपसर्पन्नन्तरा त्वदीयेनान्तपालेनावस्कन्द्य गृहीतः। स त्वया मदपेक्षया सकलत्रसोदर्यो मोक्तव्य' इति॥ एतन्ननु वो विदितं यत् तुल्याभिजनेषु राज्ञां वृत्तिः। अतोऽत्र मध्यस्थः पूज्यो भवितुमर्हति। सोदरा पुनरस्य ग्रहणविप्लवे विनष्टा। तदन्वेषणाय प्रयतिष्ये। अथवा अवश्यमेव माधवसेनो मया पूज्येन मोचयितव्यः। श्रूयतामभिसंधिः—

मौर्यसचिवं विमुञ्चति यदि पूज्यः संयतं मम श्यालम्।
मोक्ता माधवसेनस्ततो मया बन्धनात् सद्यः॥७॥

इति।

राजा—(सरोषम्) कथं कार्यविनिमयेन मयि व्यवहरत्यनात्मज्ञः। वाहतक! प्रकृत्यमित्रः प्रतिकूलकारी च मे वैदर्भः। तद् यातव्यपक्षे स्थितस्य पूर्वसंकल्पितसमुन्मूलनाय वीरसेनमुखं दण्डचक्रमाज्ञापय।

अमा०—यदाज्ञापयति देवः।

राजा—अथवा किं भवान् मन्यते।

---

१. इयमस्मत्कृता योजना। नान्दी, प्रस्तावना, विष्कम्भश्चेति त्रितयस्यापि अङ्कानन्तर्गतत्वमेव।

अमा०—शास्त्रदृष्टमाह देवः ।

अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ।
नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥८॥

राजा—तेन ह्यवितथं तन्त्रकारवचनम् । इदमेव वचनं निमित्तमुपादाय समुद्योज्यतां सेनाधिपतिः ।

अमा०—तथा । (निष्क्रान्तः)

(परिजनो यथाव्यापारं राजानमभितः स्थितः ।)

(प्रविश्य विदूषकः)

विदू०—आणत्तोम्हि तत्तभवदा रण्णा- गोदम ! चिन्तेहि दाव उवाअं । जह मे जदिच्छादिट्ठप्पदिकिदी मालविआ पच्चक्खदंसणा होदित्ति' । मए अ तं तहा किदं । दाव से णिवेदेमि । (आज्ञप्तोऽस्मि तत्रभवता राज्ञा । गौतम ! चिन्तय तावदुपायम् । यथा मे यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवतीति । मया च तत् तथा कृतम् । तावदस्मै निवेदयामि ।) (परिक्रामति ।)

राजा—(विदूषकं दृष्ट्वा) अयमपरः कार्यान्तरसचिवोऽस्माकमुपस्थितः ।

विदू०—(उपगम्य) वड्ढदु भवं । (वर्धतां भवान् ।)

राजा—(सशिरःकम्पम्) इत आस्यताम् । (विदूषकः उपविष्टः ।)

राजा—अपि कच्चिदुपेयोपायदर्शने व्यापृतं ते प्रज्ञाचक्षुः ।

विदू०—पओअसिद्धिं पुच्छ । (प्रयोगसिद्धिं पृच्छ ।)

राजा—कथमिव ।

विदू०—(कर्णे) एव्वमिव । (एवमिव)

राजा—साधु वयस्य निपुणमुपक्रान्तम् । इदानीं दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयमाशंसामहे । कुतः—

अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥९॥

(नेपथ्ये)

अलं बहु विकत्थ्य। राज्ञः समक्षमेवावयोरधरोत्तरयोर्व्यक्ति-र्भविष्यति।

राजा—(आकर्ण्य) सखे ! त्वत्सुनीतिपादपस्य पुष्पमुद्भिन्नम् ।

विदू०—फलं वि अइरेण देक्खिस्ससि । (फलमप्यचिरेण द्रक्ष्यसि ।)

(ततः प्रविशति कञ्चुकी)

कञ्चु०—देव देव ! अमात्यो विज्ञापयति । अनुष्ठिता प्रभोराज्ञा । एतौ पुनर्हरदत्तगणदासौ—

उभावभिनयाचार्यौ परस्परजयैषिणौ ।
त्वां द्रष्टुमुद्यतौ साक्षाद् भावाविव शरीरिणौ ॥१०॥

राजा—प्रवेशय तौ ।

कञ्चु०—यदाज्ञापयति देवः । (निष्क्रम्य ताभ्यां सह प्रविश्य ।) इत इतो भवन्तौ ।

गण०—(राजानं विलोक्य) अहो दुरासदो राजमहिमा ।

न च न परिचितो न चाप्यरम्य-
श्चकितमुपैमि तथापि पार्श्वमस्य ।
सलिलनिधिरिव प्रतिक्षणं मे
भवति स एव नवो नवोऽयमक्ष्णोः ॥११॥

हर०—महत् खलु पुरुषाकारमिदं ज्योतिः । तथाहि—

द्वारे नियुक्तपुरुषाभिमतप्रवेशः
सिंहासनान्तिकचरेण सहोपसर्पन् ।
तेजोभिरस्य विनिवर्तितदृष्टिपातै-
र्वाक्यादृते पुनरिव प्रतिवारितोऽस्मि ॥१२॥

कञ्चु०—एष देवः । उपसर्पतां भवन्तौ ।

उभौ—(उपेत्य) विजयतां देवः ।

राजा—स्वागतं भवद्भ्याम् । (परिजनं विलोक्य ।) आसने तावदत्रभवतोः ।

(उभौ परिजनोपनीतयोरासनयोरुपविष्टौ ।)

राजा—किमिदं शिष्योपदेशकाले युगपदाचार्याभ्यामत्रोपस्थानम् ?

गण०—देव ! श्रूयताम् । मया सुतीर्थादभिनयविद्या सुशिक्षिता । दत्तप्रयोगश्चास्मि । देवेन देव्या च परिगृहीतः ।

राजा—बाढं जाने । ततः किम् ?

गण०—सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षम् अयं मे न पादरजसापि तुल्य इत्यधिक्षिप्तः ।

हर०—देव ! अयमेव प्रथमं परिवादकरः—'अत्रभवतः किल, मम च, समुद्रपल्वलयोरिवान्तरम्' इति । तत् अत्रभवानिमं, मां च, शास्त्रे, प्रयोगे च विमृशतु । देव एव नौ विशेषज्ञः प्राश्निकः ।

विदू०—समत्थं पइण्णादं । (समर्थं प्रतिज्ञातम् ।)

गण०—प्रथमः कल्पः । अवहितो देवः श्रोतुमर्हति ।

राजा—तिष्ठ तावत् । पक्षपातमत्र देवी मन्यते । तदस्याः पण्डितकौशिकीसहितायाः समक्षमेव न्याय्यो व्यवहारः ।

विदू०—सुट्ठु भवं भणादि । (सुष्ठु भवान् भणति ।)

आचार्यौ—यद् देवाय रोचते ।

राजा—मौद्गल्य ! अमुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्धमाहूयतां देवी ।

कञ्चुकी—यदाज्ञापति देवः । (इति निष्क्रम्य सपरिव्राजिकया देव्या सह प्रविष्टः ।) इत इतो भवती ।

धारि०—(परिव्राजिकां विलोक्य) भअवदि ! हरदत्तस्स गणदासस्स अ संरम्भं कहं पेक्खसि । (भगवति ! हरदत्तस्य गणदासस्य च संरम्भं कथं पश्यसि ।)

परि०—अलं स्वपक्षावसादशङ्कया । न परिहीयते प्रतिवादिनो गणदासः ।

धारि०—जइ वि एवं तह वि राअपरिग्गहो पहाणत्तणं उवहरदि । (यद्यप्येवं तथापि राजपरिग्रहः प्रधानत्वमुपहरति ।)

परि०—अयि ! राज्ञीशब्दभाजनमात्मानमपि चिन्तयतु भवती । पश्य—

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः ।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥१३॥

विदू०—अइ उअट्ठिदा देवी पीठमद्दिअं पण्डिअकोसिइं पुरोकरिअ तत्तभोदी धारिणी । (अयि ! उपस्थिता देवी पीठमर्दिकां पण्डित-कौशिकीं पुरस्कृत्य तत्रभवती धारिणी । )

राजा—पश्याम्येनाम् । यैषा—

मङ्गलालंकृता भाति कौशिक्या यतिवेषया ।
त्रयी विग्रहवत्येव सममध्यात्मविद्यया ॥१४॥

परि०—(उपेत्य) विजयतां देवः ।

राजा—भगवति अभिवादये ।

परि०— महासारप्रसवयोः सदृशक्षमयोर्द्वयोः ।
धारिणीभूतधारिण्योर्भव भर्ता शरच्छतम् ॥१५॥

धारि०—जेदु जेदु अज्जउत्तो । (जयतु जयत्वार्यपुत्रः । )

राजा—स्वागतं देव्यै । (परिव्राजिकां विलोक्य) भगवति ! क्रियतामासनपरिग्रहः ।

(सर्वं उपविशन्ति । )

राजा—भगवति! अत्रभवतोर्हरदत्तगणदासयोः परस्परं विज्ञानसंघर्षिणोर्भगवत्या प्राश्निकपदमध्यासितव्यम् ।

परि०—(सस्मितम्) अलमुपालम्भेन । पत्तने सति ग्रामे रत्नपरीक्षा ।

राजा—नैतदेवम् । पण्डितकौशिकी खलु भगवती । पक्षपातिनौ पुनः, अहम्, देवी च ।

आचा०—सम्यगाह देवः । मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति ।

राजा—तेन हि प्रस्तूयतां विवादः ।

परि०—देव प्रयोगप्रधानं हि नाट्यशास्त्रम्। किमत्र वाग्व्यवहारेण। कथं वा देवी मन्यते।

देवी—जइ मं पुच्छसि तदा एदाणं विवादो एव्व ण मे रोअदि। (यदि मां पृच्छसि तदैतयोर्विवाद एव न मे रोचते।)

गण०—देवि! न मां समानविद्यतः परिभवनीयमवगन्तुमर्हसि।

विदू०—भोदि पेक्खामो उरब्भसंवादं। किं मुहा वेअणदाणेण एदेणं। (भवति पश्याम [1]उरभ्रसंपातम्। किं मुधा वेतनदानेनैतेषाम्।)

देवी—णं कलहप्पिओसि। (ननु कलहप्रियोऽसि।)

विदू०—मा एव्वं। चण्डि! अण्णोण्णकलहप्पिआणं मत्तहत्थीणं एक्क-दरस्सिं अणिज्जिदे कुदो उवसमो। (मैवम्। चण्डि! अन्योन्य-कलहप्रिययोर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः।)

राजा—ननु स्वाङ्गसौष्ठवातिशयमुभयोर्दृष्टवती भगवती।

परि०—अथ किम्।

राजा—तदिदानीमतः परं किमाभ्यां प्रत्याययितव्यम्।

परि०—तदेव वक्तुकामास्मि।

> श्लिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता।
> यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव ॥१६॥

विदू०—सुदं अज्जेहिं भअवदीए वअणं। एसो पिण्डितत्थो उवदेस-दंसणादो णिण्णओ त्ति। (श्रुतमार्याभ्यां भगवत्या वचनम्। एष पिण्डितार्थ उपदेशदर्शनान्निर्णय इति।)

हर०—परमभिमतं नः।

गण०—देवि! एवं स्थितम्।

देवी—जदा उण मंदमेधा सिस्सा उवदेसं मलिणेन्ति तदा आअरिअस्स ण दोसो। (यदा पुनर्मन्दमेधा शिष्या उपदेशं मलिनयन्ति तदा आचार्यस्य न दोषः।)

---

१. उरब्भो मेषः, उअरंभरि० च.

राजा—देवि। एवमापठ्यते 'विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयती'-ति।

देवी०—(आत्मगतम्) कहं दाणिं। (गणदासं विलोक्य जनान्तिकम्) अलं अज्जउत्तस्स ऊसाहकारणं मणोरहं पूरिअ। (प्रकाशम्, गणदासं प्रति) विरम णिरत्थआदो आरंभादो (कथमिदानीम्। (गणदासं विलोक्य जनान्तिकम्) अलमार्यपुत्रस्य उत्साहकारणं मनोरथं पूरयित्वा। (प्रकाशम्, गणदासं प्रति) विरम निरर्थकादारम्भात्।)

विदू०—सुट्ठु भोदी भणादि। भो गणदास! संगीदपदं लम्भिअ सरस्सईए उवाअणमोदआणं खादमाणस्स किं दे मुहणिग्गहेण विवादेण। (सुष्ठु भवती भणति। भो गणदास! संगीतपदं लब्ध्वा सरस्वत्या उपायनमोदकान् खादतः किं ते मुखनिग्रहेण विवादेन।)

गण०—सत्यम्, अयमेवार्थो देवीवाक्यस्य। श्रूयतामवसरप्राप्तमिदानीम्-
लब्धास्पदोऽस्मीति विवादभीरोस्तितिक्षमाणस्य परेण निन्दाम्।
यस्यागमः केवलजीविकायै तं ज्ञानपण्यं वणिजं वदन्ति ॥१७॥

देवी— अइरोवणीदा दे सिस्सा। अपरिणिट्ठिदस्स उवदेसस्स उण अण्णाय्यं पआसणं। (अचिरोपनीता ते शिष्या। अपरिनिष्ठितस्योदेशस्य पुनरन्याय्यं प्रकाशनम्।)

गण०—अत एव मे निर्बन्धः।

देवी०—तेण हि दुवेवि भअवदीए उवदेसं दंसेध। (तेन हि द्वावपि भगवत्यै उपदेशं दर्शयतम्।)

परि०—देवि! नैतन्न्याय्यम्। सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय।

देवी— (स्वगतम्[१]) मूढे परिव्वाजिए! मं जाग्गंतिं वि सुत्तं विअ करेसि। (मूढे परिव्राजिके! मां जाग्रतीमपि सुप्तामिव करोषि।) (सासूयं परावर्तते।) (राजा देवीं परिव्राजिकायै दर्शयति।)

१. जनान्तिकम्. नि. च.

परि०—अनिमित्तमिन्दुवदने किमत्रभवतः पराङ्मुखी भवसि ।
प्रभवन्त्योऽपि हि भर्तृषु कारणकोपाः कुटुम्बिन्यः ॥१८॥

विदू०—णं सकारणं एव्व । अत्तणो पक्खो रक्खिदव्वो । (गणदासं विलोक्य ।) दिट्ठिआ कोवव्वाजेण देवीए परित्तादो भवं । सुसिक्खिदो वि सव्वो उवदेसदंसणेण णिण्हादो होदि । (ननु सकारणमेव । आत्मनः पक्षो रक्षितव्यः । (गणदासं विलोक्य) दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान् । सुशिक्षितोऽपि सर्व उपदेशदर्शनेन निष्णातो भवति ।)

गण०—देवि ! श्रूयताम् । एवं जनो गृह्णाति । तदिदानीम्—

विवादे दर्शयिष्यामि क्रियासंक्रान्तिमात्मनः ।
यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया ॥१९॥

(इत्यासनादुत्थातुमिच्छति ।)

देवी—(स्वगतम्) का गई । (प्रकाशम् ।) पहुवदि आआरिओ सिस्सजणस्स । (का गतिः । (प्रकाशम्) प्रभवत्याचार्यः शिष्यजनस्य ।)

गण०—चिरमपदेशशङ्कितोऽस्मि । (राजानमवलोक्य) अनुज्ञातं देव्या । तदाज्ञापयतु देवः कस्मिन्नभिनयवस्तुनि प्रयोगं दर्शयिष्यामि ।

राजा—यदादिशति भगवती ।

परि०—किमपि देव्या मनसि वर्तते । ततः शङ्कितास्मि ।

देवी—भण वीसद्धं । पहुवदि प्पहू अत्तणो परिअणस्स । (भण विस्रब्धम् । प्रभवति प्रभुरात्मनः परिजनस्य ।)

राजा—मम चेति ब्रूहि ।

देवी—भअवदि । भणेदाणीम् । (भगवति ! भणेदानीम् ।)

परि०—देव ! शर्मिष्ठायाः कृतिं चतुष्पदोत्थं [१]छलिकं दुष्प्रयोज्यमुदाहरन्ति । तत्रैकार्थसंश्रयमुभयोः प्रयोगं पश्यामः । तावता ज्ञायत एव अत्रभवतोरुपदेशान्तरम् ।

आचा०—यदाज्ञापयति भगवती ।

---

१. चलितम् पा०

विदू०—तेण हि दुवे वि वग्गा पेक्खाघरे संगीदरअणं करिअ तत्तभवदो दूदं पेसअह। अहवा मुदङ्गसद्दो एव्व णो उत्थावइस्सदि। (तेन हि द्वावपि वर्गौ प्रेक्षागृहे संगीतरचनां कृत्वा तत्रभवतो दूतं प्रेषयतम्। अथवा मृदङ्गशब्द एव न उत्थापयिष्यति।)

हर०—तथा। (इत्युत्तिष्ठति।)

गण०—(धारिणीमवलोकयति।)

देवी—(गणदासं विलोक्य) विअई भोदु। णं विजअब्भत्थिणी अहं आअरिअस्स (विजयी भवतु। ननु विजयाभ्यर्थिनी अहमाचार्यस्य।)

(आचार्यौ प्रस्थितौ।)

परि०—इतस्तावदाचार्यौ।

आचार्यौ—(परिवृत्य) इमौ स्वः।

परि०—निर्णयाधिकारे ब्रवीमि। सर्वाङ्गसौष्ठवाभिव्यक्तये विगतनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु।

आचार्यौ—नेदमावयोरुपदेश्यम्।

(निष्क्रान्तौ।)

देवी—(राजानमवलोक्य) जइ राअकज्जेसु ईरिसी उवाअणिउणदा तदो सोहणं भवे। (यदि राजकार्येषु ईदृशी उपायनिपुणता आर्यपुत्रस्य ततः शोभनं भवेत्।)

राजा—

अलमन्यथा गृहीत्वा न खलु मनस्विनि मया प्रयुक्तमिदम्।
प्रायः समानविद्याः परस्परयशःपुरोभागाः॥२०॥

(नेपथ्ये मृदङ्गध्वनिः)

(सर्वे कर्णं ददति)

परि०—हन्त। प्रवृत्तं संगीतम्। तथा ह्येषा—

जीमूतस्तनितविशङ्किभिर्मयूरै-
रुद्ग्रीवैरनुरसितस्य पुष्करस्य[1] ।
निर्ह्रादिन्युपहितमध्यमस्वरोत्था
मायूरी मदयति [2]मार्जना मनांसि॥२१॥

राजा—देवी ! तस्याः सामाजिका भवामः ।

देवी—(स्वगतम्) अहो अविणओ अज्जउत्तस्स । (अहो अविनय आर्यपुत्रस्य । )

(सर्वं उत्तिष्ठन्ति)

विदू०—(अपवार्य) भो धीरं गच्छ । तत्तभोदी धारिणी विसंवादइस्सदि । (भोः धीरं गच्छ । तत्रभवती धारिणी विसंवादयिष्यति । )

वैर्यावलम्बिनमपि त्वरयति मां मुरजवाद्यरागो[3]ऽयम् ।
अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव ॥२२॥

(निष्क्रान्ताः सर्वे)

॥ इति प्रथमोऽङ्कः ॥

---

१. पुष्करो मृदङ्गभेदः २. मार्जना पुष्करस्वरगतो विशेषः । तत्र मध्यमः स्वरो नामोर्ध्वगः पुष्करस्वरारोहः, अत एव निर्ह्रादिनीति विशेषणम् । का.

३. नादो—शा.

## द्वितीयोऽङ्कः

(ततः प्रविशति संगीतरचनायां कृतायामासनस्थो राजा सवयस्यः धारिणी, परिव्राजिका, विभवतश्च परिवारः)

राजा—भगवति अत्रभवतोराचार्ययोः प्रथमं कतरस्योपदेशं द्रक्ष्यामः।

परि०—ननु समानेऽपि ज्ञानवृद्धभावे वयोवृद्धत्वाद् गणदासः पुरस्कार-महंति।

राज—तेन हि मौद्गल्य एवमत्रभवतोरावेद्य स्वनियोग्यमशून्यं कुरु।

कञ्चु०—यदाज्ञापयति देवः। (निष्क्रान्तः)

(प्रविश्य)

गण०—देव! शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदास्ति। तस्यास्तु [1]छलिकप्रयोगमेकमनाः श्रोतुमर्हति देवः।

राजा—आचार्य बहुमानादवहितोऽस्मि। (निष्क्रान्तो गणदासः)

राजा—(जनान्तिकम्) वयस्य।

नेपथ्यपरिगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम्[2] ॥१॥

विदू०—(अपवार्य) उवट्ठिदं णअणमहु संणिहिदमक्खिअं अ। ता अप्पमत्तो दाणिं पेक्ख। (उपस्थितं नयनमधु सन्निहितमक्षिकं च। तद् अप्रमत्त इदानीं पश्य।)

(ततः प्रविशत्याचार्यप्रत्यवेक्ष्यमाणाङ्गसौष्ठवा मालविका)

---

१. चलित—पा., चतुर्थवस्तुनः. का.

२. तिरस्करिणी यमनिका, यवनिका, जवनिका, जमनिका, पर्दा इति यावत्। एतेन स्थितमिदं 'कालिदाससमये मञ्चमुखे तिरस्करिणी भवति स्मेति। यवनिकेत्यपशब्दे यवनपदमुत्प्रेक्ष्य यवनानप्रभावमस्मासु वीक्ष्यमाणा धन्याः। तिरस्करण्यभावे कथं स्यादासनस्थादीनां प्रवेशः। द्र. २।११ अपि।

विदू०—(जनान्तिकम्) पेक्खदु भवं। ण क्खु से पडिच्छन्दादो परिहीअदि महुरदा। (पश्यतु भवान्। न खल्वस्याः प्रतिच्छन्दात् परिहीयते मधुरता।)

राजा—(अपवार्य) वयस्य!

चित्रगतायामस्यां कान्तिविसम्वादशङ्कि मे हृदयम्।
सम्प्रति शिथिलसमाधिं मन्ये येनेयमालिखिता ॥२॥

गण०—वत्से! मुक्तसाध्वसा सत्त्वस्था भव।

राजा—(आत्मगतम्) अहो सर्वस्थानानवद्यता रूपविशेषस्य। तथाहि—

दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निविडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव।
मध्यः पाणिमितो नितम्बि जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्या वपुः ॥३॥

माल०—(उपगानं कृत्वा चतुष्पदवस्तु गायति)

दुल्लहो पिओ मे तस्सिं भव हिअअ णिरासं
अम्हो अपङ्गओ मे परिप्फुरइ किं वि वामओ।
एसो सो चरदिट्ठो कहँ उण उवणइदव्वो
णाह मं पराहीणं तुइ परिगणअ सतिण्हम् ॥४॥

(दुर्लभः प्रियो मे तस्मिन् भव हृदय निराश-
महो अपाङ्गो मे परिस्फुरति किमपि वामः।
एष स चिरदृष्टः कथं पुनरुपनेतव्यो
नाथ मां पराधीनां त्वयि परिगणय सतृष्णाम् ॥)

(ततो यथारसमभिनयति)

विदू०—(जनान्तिकम्) भो वअस्स। चउप्पदवत्थुअं दुवारीकरिअ तुइ उवट्ठाविदो अप्पा तत्तहोदीए। (भो वयस्य! चतुष्पदवस्तुकं द्वारीकृत्य त्वय्युपस्थापित आत्मा तत्रभवत्या।)

राजा—सखे! एवमेव ममापि हृदयम्। अनया खलु—

जनमिममनुरक्तं विद्धि नाथेति गेये
वचनमभिनयन्त्या स्वाङ्गनिर्देशपूर्वम् ।
[1]प्रणयगतिमदृष्ट्वा धारिणीसंनिकर्षा-
दहमिव सुकुमारप्रार्थनाव्याजमुक्तः ॥५॥

(मालविका गीतान्ते निष्क्रमितुमारब्धा)

विदू०—भोदि चिट्ठ । किंवि वो विसुमरिदो कम्मभेदो । तं दाव पुच्छिस्सम् । (भवति तिष्ठ । किमपि वो विस्मृतः कर्मभेदः । तं तावत् प्रक्ष्यामि ।)

गण०—वत्से । क्षणमात्रं स्थित्वोपदेशविशुद्धा यास्यसि ।

(मालविका निवृत्य स्थिता)

राजा—(आत्मगतम्) अहो ! सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति । तथा हि—

वामं संधिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्यादस्याः स्थितमतितरां कान्तमृज्वायतार्धम् ॥६॥

देवी—णं गोदमवअणं वि अज्जो हिअए करेदि । (ननु गौतमवचनमप्यार्यो हृदये करोति ।)

गण०—देवी! मा मैवम् । देवप्रत्ययात् संभाव्यते सूक्ष्मदर्शिता गौतमस्य । पश्य—

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥७॥

(विदूषकं विलोक्य) तच्छृणुमो वयं विवक्षितमार्यस्य ।

विदू०—(गणदासं विलोक्य) कोसिइँ दाव पुच्छ । पच्छा जो मए कम्मभेदो दिट्ठो तं भणिस्सं । (कौशिकीं तावत् पृच्छ । पश्चाद् यो मया कर्मभेदो दृष्टस्तं भणिष्यामि ।)

---

१. प्रणयः प्रीतिपूर्विका याच्ञा । अत्र प्रेयासं प्रत्यात्मनिवेदनम् ।

गण०—भगवति ! यथादृष्टमभिधीयतां गुणो वा दोषो वेति ।

परि०—यथा दृष्टं सर्वमनवद्यम् । कुतः—

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो [1]लयमनुगतस्तन्मयत्वं रसेषु ।
[2]शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद् [3]रागवन्धः स एव ॥८॥

गण०—देवः कथं वा मन्यते ।

राजा—वयं स्वपक्षशिथिलाभिमानाः संवृत्ताः ।

गण०—अद्य नर्तयितास्मि । कुतः—

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।
श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु ॥९॥

देवी—दिट्ठिया [4]परिक्खआराहणेण अज्जो वड्ढइ । (दिष्ट्या परीक्षकाराधनेनार्यो वर्धते ।

गण०—देवीपरिग्रह एव मे वृद्धिहेतुः । (विदूषकं विलोक्य ।) गौतम वदेदानीं यत् ते मनसि वर्तते ।

विदू०—पढमोवदेसदंसणे पढमं वम्हणस्स पूजा कादव्वा । सा णं वो विसुमरिदा । (प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजा कर्तव्या । सा ननु वो विस्मृता ।)

परि०—अहो ! प्रयोगाभ्यन्तरः प्रश्नः ।

(सर्वे प्रहसिताः मालविका स्मितं करोति)

राजा—(आत्मगतम्) उपात्तसारश्चक्षुषा मे स्वविषयः । यदनेन—

स्मयमानमायताक्ष्याः किञ्चिदभिव्यक्तदशनशोभि मुखम् ।
असमग्रलक्ष्यकेसरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥१०॥

---

१. 'लयस्तालवर्त्ती कालः'—का.

२. 'शाखा तु नृत्तहस्तानां या मानोचितनर्त्तनी'—का.

३. रागवन्धो रञ्जनत्वयोगः—का. ४. अपरिक्खदा० का. नि. च.

गण०—महाब्राह्मण न खलु प्रथमं नेपथ्यदर्शनमिदम् । अन्यथा कथं त्वां दक्षिणीयं नार्चयिष्यामः ।

विदू०—मए णाम सुक्खघणगज्जिदे अन्तरिक्खे जलपाणं इच्छिदा चादश्राइदम् । अहवा पण्डितसंतोसपच्चआ णं मूढा जादी । जदि अत्तहोदीए सोहणं भणिदं तदो इमं से पारितोसिअं पअच्छामि । (मया नाम शुष्कघनगर्जिते अन्तरिक्षे जलपानमिच्छता चातकायितम् । अथवा पण्डितसन्तोषप्रत्यया ननु मूढजातिः । यतः अत्रभवत्या शोभनं भणितं तत इदं ते परितोषिकं प्रयच्छामि ।)

(राज्ञो हस्तात् कटकमाकर्षति ।)

देवी—चिट्ठ दाव । गुणन्तरं अजाणन्तो किंणिमित्तं तुम आहरणं देसि । (तिष्ठ तावत् । गुणान्तरमजानन् किंनिमित्तं त्वमाभरणं ददासि ।)

विदू०—परकेरअंति करिअ । (परकीयमिति कृत्वा ।)

देवी—(आचार्यं विलोक्य) अज्जगणदास ! णं दंसिदोवदेसा दे सिस्सा । आर्य गणदास ! ननु दर्शितोपदेशा ते शिष्या ।)

गण०—वत्से ! एहि गच्छाव इदानीम् ।

(सहाचार्येण निष्क्रान्ता मालविका ।)

विदू०—(जनान्तिकम्) एत्तिओ मे मदिविहवो भवन्तं सेविदुं । (एतावान् मे मतिविभवो भवन्तं सेवितुम् ।)

राजा—(जनान्तिकम्) अलमलं परिच्छेदेन । अहं हि—

भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव ।
द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करिणीम् ॥११॥

विदू०—(जनान्तिकम्) दलिद्दो विअ आदुरो वेज्जेण ओसदं दीअमाणं इच्छसि (दरिद्र इवातुरो वैद्येनौषधं दीयमानमिच्छसि ।)

(प्रविश्य)

हर०—देव ! मदीयमिदानीं प्रयोगमवलोकयितुं क्रियतां प्रसादः ।

राजा—(आत्मगतम्) अवसितो दर्शनार्थः। (दाक्षिण्यमवलम्ब्य प्रकाशम्) ननु पर्युत्सुका एव वयम्।

हर०—अनुगृहीतोऽस्मि।

वैता०—जयतु जयतु देवः। उपारूढो मध्याह्नः। तथाहि—

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद् वलभिपरिचय-द्वेषिपारावतानि।
बिन्दुक्षेपान् पिपासुः परिसरति शिखी भ्रान्तिमद् वारियन्त्रं
सर्वैरुस्रैः[1] समग्रैस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः॥१२॥

विदू०—अविहा अविहा। अम्हाणं उण भोअणवेला उवट्ठिदा। अत्त-भवदो उइदवेलादिक्कमे चिइच्छआ दोसं उदाहरन्ति। (हरदत्तं विलोक्य) हरदत्त! किं दाणिं भणसि। (अविधा अविधा। अस्माकं पुनर्भोजनवेलोपस्थिता। अत्रभवत उचितवेलातिक्रमे चिकित्सका दोषमुदा-हरन्ति। (हरदत्तं विलोक्य) हरदत्त! किमिदानीं भणसि।)

हर०—अस्ति वचनस्यान्यस्यावकाशोऽत्र?

राजा—तेन हि त्वदीयमुपदेशं श्वो वयं द्रक्ष्यामः। विरमतु भवान्।

हर०—यदाज्ञापयति देवः। (निष्क्रान्तः)

देवी—णिव्वट्ठेदु अज्जउत्तो मज्जणविहिम् (निर्वर्तयतु आर्यपुत्रो मज्जन-विधिम्।)

विदू०—भोदि विसेसेण पाणभोअणं तुवरावेहि। (भवति विशेषेण पान-भोजनं त्वरय।)

परि०—(उत्थाय) स्वस्ति भवते। (सपरिजनया देव्या सह निष्क्रान्ता)

विदू०—भो वअस्स! ण केवलं रुवे सिप्पे वि अदुदीआ मालविआ। (भो वयस्य! न केवलं रूपे शिल्पेऽप्यद्वितीया मालविका।)

---

१. उस्रैः किरणैः।

राजा—वयस्य !

> अव्याजसुन्दरीं तां [1]ललितविधानेन योजयता ।
> परिकल्पितो विधात्रा बाणः कामस्य विषदिग्धः ॥१३॥

किं बहुना । सखे ! चिन्तयितव्योऽस्मि ।

विदू०—भवदा वि ग्रहं । दिढं विपणिकन्दू विअ मे उग्ररब्भन्तरं दज्झइ । (भवताप्यहम् । दृढं विपणिकन्दुरिव[2] मे उदराभ्यन्तरं दह्यते ।)

राजा०—एवमेव भवान् सुहृदर्थेऽपि त्वरताम् ।

विदू०—गहीददक्खिणोम्हि । किं तु मेहावलीणिरुद्धा जोण्हा विअ पराहीणदंसणा तत्तहोदी मालविग्रा । भवं वि सूणापरिसरचरो विग्र गिद्धो अमिसलोलुओ भीरुग्रो ग्र । ता अणादुरो हविअ कज्जसिद्धिं पत्थन्तो मे रोग्रसि । (गृहीतदक्षिणोऽस्मि । किं तु मेघावलीनिरुद्धा ज्योत्स्नेव पराधीनदर्शना तत्रभवती मालविका । भवानपि सूनापरिसरचर इव गृध्र आमिषलोलुपो भीरुकश्च । तत् अनातुरो भूत्वा कार्यसिद्धिं प्रार्थयमानो मे रोचसे ।)

राजा—कथमनातुरो भविष्यामि—

> सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य ।
> सा वामलोचना मे स्नेहस्यैकायनीभूता ॥१४॥

(निष्क्रान्ताः सर्वे)

॥ इति द्वितीयोऽङ्कः ॥

---

१. 'विधानेन ल०' च. 'विज्ञानेन ल०' का. क. २. कन्दुः कटाही भा.
३. अब्वंतादुरो विअ. च.

।। [1]अथ प्रवेशकः ।।

(ततः प्रविशति परिव्राजिकायाः परिचारिका समाहितिका ।)

समा०—आणत्तम्हि [2]भअवदीए—'समाहिदिए ! देवस्स उवावणत्थं वीअऊरअं गेण्हिअ आअच्छ'त्ति । ता जाव पमदवणपालिअं महुअरिअं अण्णेसामि । (परिक्रम्यावलोक्य) एसा तवणीआसोअं ओलोअन्ती महुअरिआ चिट्ठदि । ता जाव णं उपसप्पामि । (आज्ञप्तास्मि [2]भगवत्या—'समाहितिके ! देवस्योपवनस्थं बीजपूरकं गृहीत्वागच्छेति । तद् यावत् प्रमदवनपालिकां मधुरिकामन्विष्यामि । एपा तपनीयाशोकमवलोकयन्ती मधुकरिका तिष्ठति । तद् यावदेनामुपसर्पामि ।)

(ततः प्रविशति यथोक्तव्यापारा उद्यानपालिका ।)

समा०—(उपसृत्य) महुअरिए । अवि सुहो दे उज्जाणव्वावारो ! (मधुकरिके ! अपि सुखस्त उद्यानव्यापारः ।)

मधु०—अम्हो समाहिदिआ । सहि साअदं दे । (अहो समाहितिका । सखि, स्वागतं ते ।)

समा०—हला भगवदी आणवेदि 'अरित्तपाणिणा अम्हारिसजणेण तत्तहोदी देवी देक्खिदव्वा । ता वीअपूरएण सुस्सूसिदुं इच्छामि' त्ति । (सखि ! भगवत्याज्ञापयति—'अरिक्तपाणिना अस्मादृशजनेन तत्रभवती देवी द्रष्टव्या तद् बीजपूरकेण शुश्रूपितुमिच्छामि'- इति ।

मधु०—णं संणिहिदं वीजपूरअं । कहेहि दाव अण्णोण्णसंघरिसिदाणं णट्टाअरिआणं उवदेसं देक्खिअ कदरो भअवदीए पसंसिदो । (ननु संनिहितं वीजपूरकम् । कथय तावदन्योन्यसंघर्षितयोर्नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः ।)

समा०—दुवे वि किल आगमिणा पओअणिउणा अ । किंतु सिस्साए[3] मालविआए गुणविसेसेण गणदासस्स[4] उवदेशो पसंसिदो ।

---

१. अस्मत्कृतेयं योजना । 'तृतीयोऽङ्कः' इति तु सा.नि.क.च.
२. परिव्राजिकया । ३. सिस्सागुण० का.क. ४. मालविआए. का.

(द्वावपि किलागमिनौ प्रयोगनिपुणौ च। किंतु शिष्याया मालविकाया गुणविशेषेण गणदासस्योपदेशः प्रशंसितः।)

मधु०—अह मालविआगदं कोलीणं कीरिसं सुणीअदि ? (अथ मालविकागतं कौलीनं कीदृशं श्रूयते ?)

समा०—वाढं किल तस्सिं साहिलासो भट्टा। किंतु केवलं देवीए धारिणीए चित्तं रक्खन्तो अत्तणो पहुत्तणं दंसेदि। मालविआ वि इमेसु दिअसेसु अणुहूदमुत्ता विअ मालदीमाला मिलाणा लक्खीअदि। अदो अवरं ण जाणे। विसज्जेहि मं। (वाढं किल तस्यां साभिलाषो भर्ता। किन्तु केवलं देव्या धारिण्याश्चित्तं रक्षन्नात्मनः प्रभुत्वं दर्शयति, मालविकाप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला म्लाना लक्ष्यते। अतः परं न जाने। विसृज माम्।)

मधु०—एदं साहावलम्विदं वीअपूरअं गेण्ह। (एतच्छाखावलम्वितं वीजपूरकं गृहाण।)

समा०—तह। (नाट्येन वीजपूरकं गृहीत्वा) हला तुमं वि अदो पेसलदरं साहुजणसुस्सूसाए फलं पावेहि। (तथा। (नाट्येन वीजवीजपूरकं गृहीत्वा) सखि ! त्वमप्यतः पेशलतरं साधुजनशुश्रूषायाः फलं प्राप्नुहि।) (प्रस्थिता)

मधु०—हला समं जेव्व गच्छम्ह। अहं वि इमस्स चिराअमाणकुसुमोग्गमस्स तवणीआसोअस्स दोहलणिमित्तं देवीए णिवेदेमि। (सखि ! सममेव गच्छावः। अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै निवेदयामि।)

समा०—जुज्जइ। अहिआरो क्खु तुइ। (युज्यते। अधिकारः खलु तव।)

(निष्क्रान्ते)

॥ इति प्रवेशकः ॥

## [1]अथ तृतीयोऽङ्कः

(ततः प्रविशति [2]कामयानावस्थो राजा विदूषकश्च ।)

राजा—(आत्मनं विलोक्य)

शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे
भवेत् सास्रं चक्षुः क्षणमपि न सा दृश्यत इति ।
तया सारङ्गाक्ष्या त्वमसि न कदाचिद् विरहितं
प्रसक्ते निर्वाणे हृदय परितापं व्रजसि किम् ।।१।।

विदू०—अलं भवदो धीरं उज्झिअ परिदेविदेण । दिट्ठा मए तत्तहोदीए मालविआए पिअसही वउलावलिआ । सुणाविदा अ अत्थं जो भवदा संदिट्ठो । (अलं भवतो धीरतामुज्झित्वा परिदेवितेन । दृष्टा मया तत्रभवत्या मालविकायाः प्रियसखी बकुलावलिका, श्राविता चार्थं यो भवता संदिष्टः ।)

राजा—ततः किमुक्तवती ।

विदू०—विण्णावेहि भट्टारअम्—'अणुगहीदम्हि इमिणा णिओएण । किदु सा तवस्सिणी देवीए अहिअं रक्खन्तीए णाअरक्खिदो विअ णिही ण सुहं समासादइदव्वा । तहवि जइस्सं ।' (विज्ञापय भट्टारकम्—'अनुगृहीतास्म्यनेन नियोगेन । किन्तु सा तपस्विनी देव्या अधिकं रक्षन्त्या नागरक्षित इव निधिर्न सुखं समासादयितव्या । तथापि, यतिष्ये' ।)

राजा—भगवन् संकल्पयोने । प्रतिवन्धवत्स्वपि विषयेषु अभिनिवेश्य किं तथा प्रहरसि यथा जनोऽयं न कालान्तरक्षमो भवति । (सविस्मयम्)

क्व रुजा हृदयप्रमाथिनी क्व च ते विश्वसनीयमायुधम् ।
मृदु तीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ।।२।।

---

१. अस्माभिरिदं योजितम् । २. र. ९।५०, वाम. ५।२।८२, कामयमा० पा०

विदू०—णं भणामि तस्सि साहणिज्जे कज्जे किदो मए उवाओवक्खेओ। ता पज्जवत्थावेदु भवं अप्पाणं। (ननु भणामि तस्मिन् साधनीये कार्ये कृतो मया उपायोपक्षेपः। तत् पर्यवस्थापयतु भवानात्मानम्।

राजा—अथेमं दिवसशेषम् उचितव्यापारविमुखेन चेतसा क्व नु खलु यापयामि।

विदू०—अज्ज एव्व पढमावदारसुहआणि रत्तकुरवआणि उवाअणं पेसिअ णववसन्तावदारव्वदेसेण इरावदीए णिउणिआमुहेण पत्थिदो भवं—'इच्छामि अज्जउत्तेण सह दोलाहिरोहणं अणुहविदुं'त्ति। भवदा वि से पडिण्णादं। ता पमदवणं एव्व गच्छम्ह। (अद्यैव प्रथमावतारसुभगानि रक्तकुरवकाणि उपायनं प्रेष्य नववसन्तावतार-व्यपदेशेन इरावत्या निपुणिकामुखेन प्रार्थितो भवान्—'इच्छामि आर्यपुत्रेण सह दोलाधिरोहणमनुभवितुमि'-ति। भवताप्यस्यै प्रतिज्ञातम्। तत् प्रमदवनमेव गच्छावः।)

राजा—न क्षममिदम्।

विदू०—कहं विअ। (कथमिव)

राजा—वयस्य निसर्गनिपुणाः स्त्रियः। कथमन्यसंक्रान्तहृदयमुपलालयन्तमपि ते सखी न मां लक्षयिष्यति। अतः पश्यामि—

> उचितः प्रणयो वरं विहन्तुं
> बहवः खण्डनहेतवो हि दृष्टाः।
> उपचारविधिर्मनस्विनीनां
> न तु पूर्वाभ्यधिकोऽपि भावशून्यः ॥३॥-इति।

विदू०—णारिहदि भवं अन्तेउरट्ठिदं दक्खिण्णं एक्कपदे पिट्ठदो कादुम्। (नार्हति भवानन्तःपुरस्थितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम्।)

राजा—(विचिन्त्य) तेन हि प्रमदवनमार्गमादेशय।

विदू०—इदो इदो भवं। (इत इतो भवान्।) (उभौ परिक्रामतः।)

विदू०—णं एवं पमदवणं पवणवलचलाहिं पल्लवङ्गुलीहिं तुवरेदि विअ भवन्तं पवेसिदुं। (नन्वेतत् प्रमदवनं पवनबलचलाभिः पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तं प्रवेष्टुम्।)

राजा—(स्पर्शं रूपयित्वा) अभिजातः खलु वसन्तः। सखे पश्य—

> उन्मत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
> सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव।
> अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे
> सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥४॥

विदू०—पविस णिव्वुदिलाहाअ। (प्रविश निर्वृतिलाभाय।)

(उभौ प्रविशतः)

विदू०—अवहाणेण दिट्ठिं देहि। एदं क्खु भवन्तं विअ विलोहइदुकामाए पमदवणलच्छीए जुवदोवेसलज्जावइत्तिअं वसन्तकुसुमणेवत्थं गहीदं। (अवधानेन दृष्टिं देहि। एतत् खलु भवन्तमिव विलोभयितु-कामया प्रमदवनलक्ष्म्या युवतिवेषलज्जापयितृकं वसन्तकुसुमनेपथ्यं गृहीतम्।)

राजा—ननु विस्मयादवलोकयामि—

> रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः
> प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम्।
> आक्रान्ता तिलकक्रिया च तिलकैर्लग्नद्विरेफाञ्जनैः
> सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम् ॥५॥

(उभौ नाट्येनोद्यानशोभां निर्वर्णयतः।)

(ततः प्रविशति पर्युत्सुका मालविका।)

माल०—अविण्णादहिअअं भट्टारअं अहिलसन्दी अप्पणो वि दाव लज्जेमि। कुदो विहवो सिणिद्धस्स सहीजणस्स इमं वुत्तन्तं आचक्खिदुं। ण जाणे अप्पडिआरगरुअं वेदणं केत्तिअं कालं मअणो मं णइस्सदि त्ति। आ, कहिं खु पत्थिदम्हि ? (इति स्मृतिमभिनीय) आदिट्ठम्हि देवीए—मालविए गोदमचापलादो दोलापरिब्भट्ठाए सरुजो मह चलणो। तुमं दाव गदुअ तवणी-आसोअस्स दोहलं णिवट्टेहि त्ति। जइ सो पञ्चरत्तब्भन्तरे कुसुमं दंसेदि तदो अहं अहिलासपूरइत्तअं पसादं दावइस्सं त्ति। ता जाव णिओअभूमिं पढमं गदा होमि दाव अणुपदं

मह चलणालंकारहत्थाए वउलावलिआए आअन्दव्वं। ता परिदेवइस्सं ताव वीसद्धं मुहुत्तअं। (अविज्ञातहृदयं भर्तारमभिलपन्ती आत्मनोऽपि तावल्लज्जे। कुतो विभवः स्निग्धस्य सखीजनस्य इमं वृत्तान्तमाख्यातुम्। न जाने अप्रतिकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यतीति। आ कुत्र खलु प्रस्थितास्मि। (स्मृतिमभिनीय) आदिष्टास्मि देव्या—मालविके गौतमचापलाद् दोलापरिभ्रष्टायाः सरुजौ मम चरणौ। त्वं तावद् गत्वा तपनीयाशोकस्य दोहदं निर्वर्तयेति। यद्यसौ पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति ततोऽहमभिलाषपूरयितृकं प्रसादं दापयिष्यामीति। तद् यावन्नियोगभूमिं प्रथमं गता भवामि तावदनुपदं मम चरणालङ्कारहस्तया वकुलावलिकया आगन्तव्यम्। तत् परिदेविष्ये तावद् विस्रब्धं मुहूर्तकम्।) (परिक्रमति।)

विदू०—(दृष्ट्वा) ही ही। वअस्स! एदं क्खु सीहुपाणुव्वेजिदस्स मच्छण्डिआ उवणदा। (आश्चर्यमाश्चर्यम्। वयस्य! एतत् खलु सीधुपानोद्वेजितस्य [1]मत्स्यण्डिकोपनता।)

राजा—अये! किमेतत्।

विदू०—एसा णादिपरिक्खिदवेसा ऊसुअवअणा एआइणी मालविआ अदूरे वट्टदि (एषा नातिपरिष्कृतवेषा उत्सुकवदना एकाकिनी मालविका अदूरे वर्तते।)

राजा—(सहर्षम्) कथं मालविका

विदू०—अह इं। (अथ किम्।)

राजा—शक्यमिदानीं जीवितमवलम्बितुम्—

त्वदुपलभ्य समीपगतां प्रियां हृदयमुच्छ्वसितं मम विक्लवम्।
तरुवृतां पथिकस्य जलार्थिनः सरितमारसितादिव सारसात्॥६॥

अथ क्व तत्रभवती?

---

१. मत्स्यन्दिकेति पाठे तु मदं स्यन्दयतीति व्युत्पत्तिः। मत्स्यण्डिका शर्करालुगुंडद्रवः। विदेशेषु सांप्रतं प्रसिद्धः मदशामको मत्स्याण्डनिर्मितः प्रशस्ततमः पानविशेष इति त्वन्ये।

विदू०—एसा तरुराइमज्झादो णिक्कन्ता इदो ज्जेव्व परिवट्टन्ती दीसइ। (एषा तरुराजिमध्यान्निष्क्रान्ता इत एव परिवर्तमाना दृश्यते।)

राजा—(विलोक्य सहर्षम्) वयस्य पश्याम्येनाम्।

विपुलं नितम्बदेशे मध्ये क्षामं समुन्नतं कुचयोः।
अत्यायतं नयनयोर्मम जीवितमेतदायाति॥७॥

सखे! पूर्वस्मादतिमनोहरावस्थान्तरमुपारूढा तत्रभवती। तथा हि—

शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा।
माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता॥८॥

विदू०—एसा वि भवं विअ मअणव्वाहिणा परामिट्ठा भविस्सदि। (एषापि भवानिव मदनव्याधिना परामृष्टा भविष्यति।)

राजा—सौहार्दमेवं पश्यति।

माल०—अयं सो ललिदसुउमालदोहलापेक्खी अगिहीदकुसुमणेवत्थो उक्कण्ठिदाए मह अणुकरेदि असोओ। जाव एदस्स पच्छाअसीदले सिलापट्टए णिसण्णा अप्पाणं विणोदेमि। (अयं स ललितसुकुमारदोहदापेक्षी अगृहीतकुसुमनेपथ्यः उत्कण्ठिताया मम अनुकरोत्यशोकः। यावदस्य प्रच्छायशीतले शिलापट्टके निषण्णा आत्मानं विनोदयामि।)

विदू०—सुदं भवदा उक्कण्ठिदम्हि त्ति तत्तहोदो मन्तेदि। (श्रुतं भवता उत्कण्ठितास्मीति तत्रभवती मन्त्रयति।)

राजा—नैतावता भवन्तं प्रसन्नतर्कं मन्ये। कुतः—

वोढा कुरवकरजसां किसलयपुटभेदसीकरानुगतः।
[१]अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः॥९॥

(मालविकोपविष्टा।)

राजा—सखे! इतस्तावदावां लतान्तरितो भवावः।

---

१. उत्कण्ठामनिमित्तामिति तु युज्येत।

विदू०—इरावदिं विअ अदूरे पेक्खामि। (इरावतीमिवादूरे प्रेक्षे।)

राजा—नहि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः। (विलोकयन् स्थितः।)

माल०—हिअअ णिरवलम्बणादो अदिभूमिलंघिणो ते मणोरहादो विरम। किं मं आआसिअ। (हृदय! निरवलम्बनाद् अतिभूमिलङ्घिनो मनोरथाद् विरम। किं मामायास्य?

(विदूषको राजानं वीक्षते।)

राजा—प्रिये! पश्य वामत्वं स्नेहस्य—

औत्सुक्यहेतुं विवृणोपि न त्वं तत्त्वाववोधैकफलो[1] न तर्कः।
तथापि रम्भोरु करोमि लक्ष्यमात्मानमेषां परिदेवितानाम् ॥१०॥

विदू०—संपदं भवदो णिस्संसअं भविस्सदि। एसा अप्पिदमअणसंदेसा विवित्ते णं वउलावलिआ उवट्ठिदा। (सांप्रतं भवतो निःसंशयं भविष्यति। एपा अर्पितमदनसंदेशा विविक्ते ननु वकुलावलिकोपस्थिता।)

राजा—अपि स्मरेदसावस्मदभ्यर्थनाम्।

विदू०—किं दाणिं एसा दासीए दुहिदा तुह गरुअं संदेसं विसुमरेदि। अहं दाव ण विसुमरेमि। (किमिदानीमेपा दास्या दुहिता तव गुरुकं संदेशं विस्मरति। अहं तावन्न विस्मरामि।)

(प्रविश्य चरणालङ्कारहस्ता वकुलावलिका)

वकु०—अवि सुहं सहीए। (अपि सुखं सख्याः।)

माल०—अम्हो वउलावलिआ उवट्ठिदा। सहि साअदं दे। उवविस। (अहो वकुलावलिकोपस्थिता। सखि स्वागतं ते। उपविश।)

वकु०—(उपविश्य) हला तुमं दाणिं जोग्गदाए णिउत्ता। ता एक्कं दे चलणं उवणेहि जाव सालत्तअं सणूउरं अ करेमि। (सखि त्वमिदानीं योग्यतया नियुक्ता। तस्मादेकं ते चरणमुपनय यावत् सालक्तकं सनूपुरं च करोमि।)

---

१. रसः पा.

माल०—(आत्मगतम्) हिअअ ! अलं सुहिदाए। उवट्ठिदो अअं विहवो। कहं दाणिं अत्ताणं मोचेअं। अहवा एवं एव्व मे मिच्चुमण्डणं भविस्सदि। (हृदय ! अलं सुखितया। उपस्थितोऽयं विभवः। कथमिदानीमात्मानं मोचयेयम्। अथवा एतदेव मे मृत्युमण्डनं भविष्यति।)

वकु०—किं विआरेसि। ऊसुआ क्खु इमस्स तवणीआसोअस्स कुसुमोग्गमे देवी। (किं विचारयसि। उत्सुका खल्वस्य तपनीयाशोकस्य कुसुमोद्गमेन देवी।)

राजा—कथमशोकदोहदनिमित्तोऽयमारम्भः।

विदू०—किं ण क्खु जाणासि तुमं। मह कालणादो देवी मं अन्तेउरणेवच्छेण योजइस्सदि त्ति। (किं नु खलु जानासि त्वम् 'मम कारणाद् देवी इमामन्तःपुरनेपथ्येन योजयिष्यती'-ति।)

माल०—हला मरिसेहि दाव णं। (सखि मर्षय तावदेनम्।)

(पादमुपहरति)

वकु०—अइ सरीरअं सि मे। (अयि शरीरमसि मे।)

(नाट्येन चरणसंस्कारमारभते।)

राजा—

चरणान्तनिवेशितां प्रियायाः सरसां पश्य वयस्य रागलेखाम्।
प्रथमामिव पल्लवप्रसूतिं हरदग्धस्य मनोभवद्रुमस्य ॥११॥

विदू०—चलणाणुरूवो तत्तहोदीए अहिआरो उवक्खित्तो।
(चरणानुरूपस्तत्रभवत्या अधिकार उपक्षिप्तः।)

राजा—सम्यगाह भवान्।

नवकिसलयरागेणाग्रपादेन बाला
स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन।
अकुसुमितमशोकं दोहदापेक्षया वा
प्रणमितशिरसं वा कान्तमार्द्रापराधम् ॥१२॥

विदू०—पहरिस्सदि तत्तहोदी तुमं अवरद्धम्। (प्रहरिष्यति तत्रभवती त्वामपराद्धम्।)

राजा—मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य ।

(ततः प्रविशति युक्तमदा इरावती चेटी च ।)

इरा०—हञ्जे णिउणिए ! सुणामि बहुसो मदो किल इत्थिआजणस्स विसेसमण्डणं त्ति । अवि सच्चो एसो लोअवाओ । (चेटि निपुणिके ! शृणोमि बहुशो मदः किल स्त्रीजनस्य विशेषमण्डनमिति । अपि सत्य एष लोकवादः ।)

निपु०—पढमं लोअवाओ एव्व अज्ज सच्चो संवुत्तो ।
(प्रथमं लोकवाद एवाद्य सत्यः संवृतः ।)

इरा०—अलं मयि सिणेहेण । कहेहि कुदो दाणिं ओगमिदव्वं दोलाघरं पढमं गदो भट्टा ण वेत्ति । (अलं मयि स्नेहेन । कथय कुत इदनीमवगन्तव्यं दोलागृहं प्रथमं गतो भर्ता न वेति ।)

निपु०—भट्टिणीए अखिण्डदादो पणग्रादो । (भट्टिन्या अखण्डितात् प्रणयात् ।)

इरा०—ग्रलं सेवाए । मज्झत्थदं परिगाहिअ भणाहि । (अलं सेवया । मध्यस्थतां परिगृह्य भण ।)

निपु०—वसन्तोस्सवुवाअणलोलुवेण अज्जगोदमेण कहिग्रं तुवरदु भट्टिणी त्ति । (वसन्तोत्सवोपायनलोलुपेनार्यगौतमेन कथितं त्वरतां भट्टिनीति ।)

इरा०—(अवस्थासदृशं परिक्रम्य) हञ्जे ! मदेण किलाग्रमाणं अत्ताण ग्रज्जउत्तस्स दंसणे हिअग्रं तुवरेदि । चलणा उ ण मह पसरन्ति । (चेटि ! मदेन ग्लाम्यमानमात्मानमार्यपुत्रस्य दर्शने हृदयं त्वरयति, चरणौ पुनर्न मम प्रसरतः ।)

निपु०—णं संपत्ते मह दोलाघरं । (ननु संप्राप्ते स्वो दोलागृहम् ।)

इरा०—णिउणिए ! ग्रज्जउत्तो एत्थ ण दीसदि । (निपुणिके ! आर्यपुत्रोऽत्र न दृश्यते ।)

निपु०—णं भट्टिणीए ओलोअदु । परिहासणिमित्तं कहिं वि अदिट्ठेण भत्तुणा होदव्वं । अम्हे वि पिअंगुलदापरिक्खित्तं असोअसिलापट्टग्रं पविसामो । (ननु भट्टिन्यवलोकयतु । परिहासनिमित्तं कुत्रा-

प्यदृष्टेन भर्त्रा भवितव्यम्। आवामपि प्रियङ्गु-लतापरिक्षिप्तमशोक-शिलापट्टकं प्रविशावः।)

इरा०—तह। (तथा)

निपु०—(विलोक्य) आलोअदु भट्टिणी चूदङ्कुरं विचिण्णन्तीणं पिपीलिआहिं दंसिदं। (अवलोकयतु भट्टिनी चूताङ्कुरं विचिन्वत्योः पिपीलिकाभिर्दष्टम्।)

इरा०—कहं विअ एदं। (कथमिवेदम्।)

निपु०—एसा असोअपादवच्छाआए मालविआए वउलावलिआ चलणालंकारं णिव्वट्टेदि। (एषाशोकपादपच्छायायां मालविकाया बकुलावलिका चरणालङ्कारं विर्वतयति।)

इरा०—(शङ्कां रूपयित्वा) अभूमी इअं मालविआए! कहं एत्थ तक्केसि। अभूमिरियं मालविकायाः। कथमत्र तर्कयसि।)

निपु०—तक्केमि दोलापरिब्भंसिदाए सरुअचलणाऐ देवीए असोअदोहलाहिआरे मालविआ णिउत्तेत्ति। अण्णहा कहं देवी सअं धारिअं णूउरजुअलं परिअणस्स अब्भणुजाणिस्सदि। (तर्कयामि दोलापरिभ्रष्टया सरुजचरणया देव्याऽशोकदोहदाधिकारे मालविका नियुक्तेति। अन्यथा कथं देवी स्वयं धारितं नूपुरयुगलं परिजनस्याभ्यनुज्ञास्यति।)

इरा०—महदो क्खु से संभावणा। (महती खल्वस्याः संभावना।)

निपु०—किं ण अण्णेसीअदि भट्टा। (किं नान्विष्यते भर्ता।)

इरा०—हला ण मे चलणा अण्णदो पवट्टन्ति। मदो मं विआरेदि। आसंकिदस्स दाव अन्तं गमिस्सं। (मालविकां निर्वर्ण्य। निरूप्यात्मगतम्।) ठाणे क्खु कादरं मे हिअअं। (सखि! न मे चरणावन्यतः प्रवर्तेते। मदो मां विकारयति। आशङ्कितस्य तावदन्तं गमिष्यामि। (मालविकां निवर्ण्य निरूप्यात्मगतम्) स्थाने खलु कातरं मे हृदयम्।)

वकु०—(मालविकायै चरणं दर्शयन्ती) अवि रोअदि दे राअरेहाविण्णासो। (अपि रोचते ते रागरेखाविन्यासः।)

माल०—हला ! अत्तणो चलणं त्ति लज्जेमि णं पसंसिदुं । केण पसाहणकलाए अहिणीदासि । (सखि ! आत्मनश्चरण इति लज्जे एनं प्रशंसितुम् । केन प्रसाधनकलायामभिनीतासि ।)

बकु०—एत्थ क्खु भत्तुणो सीसम्हि । (अत्र खलु भर्तुः शिष्यास्मि ।)

विदू०—तुवरेहि दाव णं गुरुदक्खिणाए । (त्वरय तावदेनां गुरुदक्षिणायै ।)

माल०—दिट्ठिआ ण गव्विदासि । (दिष्ट्या न गर्वितासि ।)

बकु०—उवदेसाणुरूवा चलणा लम्भिअ अज्ज दाव गव्विदा भविस्सं । (रागं विलोक्यात्मगतम्) हन्त सिद्धो मे दप्पो । (प्रकाशम्) सहि एक्कस्स दे चलणस्स अवसिदो राअणिक्खेवो । केवलं मुहमारुदो लम्भइदव्वो । अहवा पवादं एदं ठाणं । (उपदेशानुरूपौ चरणौ लब्ध्वा अद्य तावद् गर्विता भविष्यामि । हन्त सिद्धो मे दर्पः । (प्रकाशम्) सखि एकस्य ते चरणस्यावसितो रागनिक्षेपः । केवलं मुखमारुतो लम्भयितव्यः । अथवा प्रवातमेतत् स्थानम् ।)

राजा—सखे ! पश्य—

आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन शोषयितुम् ।
प्रतिपन्नः प्रथमतरः संप्रति सेवावकाशो मे ॥१३॥

विदू०—कुदो दे अणुसओ । चिरं भवदा एदं कमेण[१] अणुभविदव्वं । (कुतस्तेऽनुशयः । चिरं भवता एतत् क्रमेणानुभवितव्यम् ।)

बकु०—सहि ! अरुणसतपत्तं विअ सोहदि दे चलणं । सव्वहा भत्तुणो अंकपरिवट्टिणी होहि । (सखि ! अरुणशतपत्रमिव शोभते ते चरणम् । सर्वथा भर्तुरङ्कपरिवर्तिनो भव ।) (इरावती निपुणिकामवेक्षते ।)

राजा—ममेयमाशीः ।

माल०—हला मा अवअणीअं मन्तेहि । (सखि मा अवचनीयं मन्त्रयस्व ।)

बकु०—मन्तइदव्वं एव्व मन्तिदं मए । (मन्त्रयितव्यमेव मन्त्रितं मया ।)

माल०—पिआ क्खु अहं तव । (प्रिया खल्वहं तव ।)

---

१. एदं भवदा चिरक्कमेण च.

वकु०—ण केवलं मह। (न केवलं मम।)

माल०—कस्स वा अण्णस्स। (कस्य वान्यस्य।)

वकु०—गुणेसु अहिणिवेसिणो भत्तुणो वि। (गुणेष्वभिनिवेशिनो भर्तुरपि।)

माल०—अलिअं मन्तेसि। एदं एव्व मइ णत्थि। (अलीकं मन्त्रयसे। एतदेव मयि नास्ति।)

वकु०—सच्चं तुइ णत्थि। अत्तुणो किसेसु सुन्दरपाण्डरेसु दीसइ अंगेसु। (सत्यं त्वयि नास्ति। भर्तुः कृशेषु सुन्दरपाण्डुरे दृश्यते अङ्गेषु।)

निपु०—पढमं गणिदं विअ हदासए उत्तरं।
(प्रथमं गणितमिव हताशाया उत्तरम्।)

वकु०—अणुराओ अणुराएण परिक्खिदव्वो त्ति सुअणवअणं पमाणीकरेहि। (अनुरागोऽनुरागेण परिक्षितव्य इति सुजनवचनं प्रमाणीकुरु।)

माल०—किं अत्तणो छन्देण मन्तेसि (किमात्मनश्छन्देन मन्त्रयसि।)

वकु०—णहि णहि। भतुणो क्खु एदाइं पणअमिदुलाइं अक्खराइँ वत्तन्तरिताइँ। (नहि नहि। भर्तुः खल्वेतानि प्रणयमृदुलान्यक्षराणि वक्त्रान्तरितानि।)

माल०—हला! देवीं चन्तिअ ण मे हिअअं विस्ससदि।
(सखि! देवीं चिन्तयित्वा न मे हृदयं विश्वसिति।

वकु०—मुद्धे! भमरसंपादो भविस्सदि त्ति वसन्तावदारसव्वस्सं किं ण चूदप्पसवो ओदंसिदव्वो। (मुग्धे! भ्रमरसंपातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसितव्यः।)

माल०—तुमं दाव दुज्जादे गच्छतस्स सहायिणी होसि।
(त्वं तावद् दुर्जाते गच्छतः सहायिनी भव।)

वकु०—विमद्दसुरही वउलावलिआ क्खु अहं।
(विमर्दसुरभिर्वकुलावलिका खल्वहम्।)

राजा—साधु वकुलावलिके साधु।

भावज्ञानानन्तरं प्रस्तुतेन
प्रत्याख्याने दत्तयुक्तोत्तरेण ।
वाक्येनेयं स्थापिता स्वे निदेशे
स्थाने प्राणाः कामिनां दूत्यधीनाः ॥१४॥

इरा०—हञ्जे ! पेक्ख कारिदं एव्व वउलावलिआए एदस्सिं पदं मालविआए । (सखि ! पश्य कारितमेव वकुलावलिकया एतस्मिन् पदं मालविकायाः ।)

निपु०—भट्ठिणि !अहिआरस्स उइदो उवदेसो । (भट्टिनि ! अधिकारस्योचित उपदेशः ।)

इरा—ठाणे क्खु संकिदं मे हिअअं । गहीदत्था अणन्तरं चिन्तइस्सं । (स्थाने खलु शङ्कितं मे हृदयम् । गृहीतार्था अनन्तरं चिन्तयिष्यामि ।)

वकु०—एसो दुदीओ वि दे णिव्वुत्तपरिकम्मा चलणो । जाव णं सणूउरं करेमि । (नाटयेन नुपुरयुगलमामुच्य) । हला ! उट्ठेहि । असोअविआसइत्तअं देवीए णिओअं अणुचिट्ठ । (एष द्वितीयोऽपि ते निर्वृत्तपरिकर्मा चरणः । यावदेनं सनूपुरं करोमि । (नाटयेन नुपुरयुगलमामुच्य) हला ! उत्तिष्ठ । अशोकविकासयितृकं देव्या नियोगमनुतिष्ठ ।)

(उभे उत्तिष्ठतः ।)

इरा०—सुदो देवीए णिओओ । होदु दाणिं । (श्रुतो देव्या नियोगः । भवत्विदानीम् ।)

वकु०—एसो उवारूढराओ उअभोअक्खमो पुरदो दे वट्टइ । (एष उपारूढराग उपभोगक्षमः पुरतस्ते वर्तते ।)

माल०—(सहर्षम्) किं भट्टा (किं भर्ता ।)

बकु०—(सस्मितम् ।) ण दाव भट्टा । एसो असोअसाहावलम्वी पल्लवगुच्छओ । ओदंसेहि णं । (न तावद् भर्ता । एषः अशोकशाखावलम्वी पल्लवगुच्छः । अवतंसयैनम् ।) (मालविका विषादं नाटयति ।)

विदू०—सुदं भवदा । (श्रुतं भवता ।)

राजा—सखे । पर्याप्तमेतावता कामिनाम्—

अनातुरोत्कण्ठितयोः प्रसिद्धचता
समागमेनापि रतिर्न मां प्रति ।
परस्पर-प्राप्ति-निराशयोर् वरं
शरीरनाशोऽपि समानुरागयोः ॥१५॥

(मालविका रचितपल्लवावतंसा पादमशोकाय प्रहिणोति ।)

राजा—वयस्य !

आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति ।
उभयोः सदृशविनिमयादात्मानं वञ्चितं मन्ये ॥१६॥

वकु॰—हला ! णत्थि दे देसो । णिग्गुणो अअं असोओ जइ कुसुमोब्भेद-मन्थरो भवे जो दे चलणसक्कारं लंभिओ । (सखि ! नास्ति ते दोषः । निर्गुणोऽयमशोकः, यदि कुसुमोद्भेदमन्थरो भवेत्, यस्ते चरणसत्कारं लम्भितः ।)

राजा—

अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन संभावितः ।
अशोक यदि सद्य एव मुकुलैर्न संपत्स्यसे
वृथा वहसि दोहदं ललितकामिसाधारणम् ॥१७॥

सखे ! वचनानुसरणपूर्वकं प्रवेष्टुमिच्छामि ।

विदू॰—एहि । णं परिहासइस्सं । (एहि एनां परिहासयिष्यामि ।)

(उभौ प्रवेशं कुरुतः ।)

निपु॰—भट्टिणि भट्टिणि ! भट्टा एत्थ पविससि ।
(भट्टिनि भट्टिनि ! भर्ताऽत्र प्रविशति ।)

इरा॰—इदं मम पढमं चिन्तिदं हिअएण ।
(एतन्मम प्रथमं चिन्तितं हृदयेन)

विदू॰—(उपेत्य) भोदि जुत्तं णाम अत्तभवदो पिअवअस्सो अअं असोओ णं वामपादेण ताडिदुं ? (भवति । युक्तं नाम अत्रभवतः प्रियवयस्योऽयमशोको ननु वामपादेन ताडयितुम् ?)

उभे—(ससंभ्रमम्) अम्हो भट्टा। (अहो भर्ता।)

विदू०—वउलावलिए। गहीदत्थाए तुइ अत्तहोदी ईरिसं अविणअं करन्ती कीस णं णिवारिदा। (बकुलावलिके! गृहीतार्थया त्वयात्र-भवती ईदृश दृशमविनयं कुर्वन्ती कस्मान्न निवारिता।)

(मालविका भयं रूपयति।)

निपु०—भट्टिणि पेक्ख। किं पउत्तं अज्जगोदमेण।
(भट्टिनि! पश्य। किं प्रवृत्तमार्यगौतमेन।

इरा०—कहं क्खु वह्मवन्धू अण्णहा जीविस्सदि। (कथं खलु ब्रह्मबन्धुर-न्यथा जीविष्यति।)

बकु०—अज्ज! एसा देवीए णिओअं अणुचिट्ठदि। एदस्सिं अदिक्कमे परवदी इअं। पसीददु भट्टा। आर्य! एषा देव्या नियोगमनुतिष्ठति। एतस्मिन्नतिक्रमे परवतीयम्। प्रसीदतु भर्ता।)

(आत्मना सहैनां प्रणिपातयति।)

राजा—यद्येवमनपराधासि। उत्तिष्ठ भद्रे!

(हस्तेन गृहीत्वैनामुत्थापयति।)

विदू०—जुज्जइ देवी एत्थ माणइदव्वा। (युज्यते देवी अत्र मानयितव्या।)

राजा—(विहस्य)

किसलयमृदोर्विलासिनि कठिने निहतस्य पादपस्कन्धे।
चरणस्य न ते बाधा संप्रति वामोरु! वामस्य॥१८॥

(मालविका लज्जां नाटयति।)

इरा०—अहो णवणीदकप्पहिअओ अज्जउत्तो।
(अहो नवनीतकल्पहृदय आर्यपुत्रः।)

माल०—वउलावलिए। एहि। अणुट्ठिदं अत्तणो णिओअं देवीए णिवेदेम्ह। (बकुलावलिके! एहि। अनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः।)

बकु०—विण्णावेहि भट्टारं विसज्जेहि त्ति। (विज्ञापय भर्तारं विसर्जयेति।)

राजा—भद्रे यास्यसि । मम तावदुत्पन्नावसरमर्थित्वं श्रूयताम् ।

वकु०—अवहिदा सुणाहि । आणवेदु भट्टा ।
(अवहिता शृणु । आज्ञापयतु भर्ता ।)

राजा—

धृतिपुष्पमयमपि जनो वध्नाति न तादृशं चिरात् प्रभृति ।
स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥१९॥

इरा०—(सहसोपसृत्य) पूरेहि पूरेहि । असोओ कुसुमं ण दंसेदि । अअं उण पुप्फदि एव्व । (पूरय पूरय । अशोकः कुसुमं न दर्शयति । अयं पुनः पुष्पत्येव ।)

(सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः ।)

राजा—(अपवार्य) वयस्य । का प्रतिपत्तिरत्र ।

विदू०—किं अण्णं । जंघावलं एव्व । (किमन्यत् । जङ्घाबलमेव ।)

इरा०—वउलावलिए । तुए साहु उवक्कन्तं । दाणिं सफलब्भत्थणं करेहि अज्जउत्तं । (वकुलावलिके ! त्वया साधूपक्रान्तम् । इदानीं सफलाभ्यर्थिनं कुरु आर्यपुत्रम् ।)

उभे— पसीददु भट्टिणी । काओ अम्हे भत्तुणो पणअपरिग्गहस्स । (प्रसीदतु भट्टिनी । के आवां भर्तुः प्रणयपरिग्रहस्य ।)

(निष्क्रान्ते ।)

इरा०—अविसस्ससणीआ पुरिसा । अत्तणो वञ्चणवअणं पमाणीकरिअ आक्खित्ताए वाहजणगदगहीदचित्ताए विअ हरिणीए एदं ण विण्णादं मए । (अविश्वसनीयाः पुरुषाः । आत्मनो वञ्चनावचनं प्रमाणीकृत्याक्षिप्तया व्याधजनगीतगृहीतचित्तयेव हरिण्या एतन्न विज्ञातं मया ।)

विदू०—(जनान्तिकम्) भो पडिपज्जेहि किंपि उत्तरम् । कम्मग्गहीदेण वि कुम्भीलएण संधिच्छेदे सिक्खिओम्मि त्ति वत्तव्वं होदि । (भो प्रतिपद्यस्व किमप्युत्तरम् । कर्मगृहीतेनापि कुम्भीलकेन संधिच्छेदे शिक्षितोऽस्मीति वक्तव्यं भवति ।)

राजा—सुन्दरि ! न मे मालविकया कश्चिदर्थः मया त्वं चिरयसीति यथाकथंचिदात्मा विनोदितः ।

इरा०—विस्ससणीओसि । ण मए विण्णादं ईरिसं विणोदवुत्तन्तं अज्जउत्तेण उवलद्धं त्ति । अण्णहा दुक्खभाइणीए एव्वं ण करीअदि । (विश्वसनीयोऽसि । न मया विज्ञातम् ईदृशो विनोदवृत्तान्तः, आर्यपुत्रेणोपलब्ध इति । अन्यथा दुःखभागिन्या एवं न क्रियेत ।)

विदू०—मा दाव अत्तभोदो दक्खिण्णस्य उवरोहं करेहि । समावदिट्टेण देवीए परिचारिआइत्थिआजणेन संकहावि जइ वारीअदि एत्थ तुमं एव्व पमाणं । (मा तावदत्रभवतो दाक्षिण्यस्योपरोधं कुरु । समीपदृष्टेन देव्याः परिचारिकास्त्रीजनेन संकथापि यदि वार्यते अत्र त्वमेव प्रमाणम् ।)

इरा०—णं संकहा णाम होदु । किंति अत्ताणं आआसइस्सं । (ननु संकथा नाम भवतु । किमित्यात्मानमायासयिष्यामि ।)

(रुषा प्रस्थिता)

राजा—(अनुसरन्) प्रसीदतु भवती ।

(इरावती रसनासंधारितचरणा व्रजत्येव)

राजा—सुन्दरि ! न शोभते प्रणयिनि जने निरपेक्षता ।

इरा०—सठ । अविस्ससणीअहिअओसि । (शठ ! अविश्वसनीयहृदयोऽसि ।)

राजा—

शठ इति मयि तावदस्तु ते<br>
परिचयवत्यवधीरणा प्रिये ।<br>
चरणपतितया न चण्डि ! तां<br>
विसृजसि मेखलयापि याचिता ? ।।२०।।

इरा०—इअं पि हदासा तुमं एव्व अणुसरदि ।
(इयमपि हताशा त्वामेवानुसरति ।)

(इति रसनामादाय राजानं ताडयितुमिच्छति)

राजा— वयस्य ! इयमिरावती

वाष्पासारा हेमकाञ्चीगुणेन
श्रोणीविम्बादप्युपेक्षाच्युतेन ।
चण्डी चण्डं हन्तुमभ्युद्यता यां
विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥२१॥

इरा०—किं मं एव्व भूओ वि अवरद्धं करेसि ।
(किं मामेव भूयोऽप्यपराद्धां करोषि ।)

राजा—(सरसनं हस्तमवलम्बयति)

अपराधिनि मयि दण्डं संहरसि किमुद्यतं कुटिलकेशि ।
वर्धयसि विलसितं त्वं दासजनायाद्य कुप्यसि च ॥२२॥

नूनमिदमनुज्ञातम् । (पादयोः पतति)

इरा०—ण क्खु इमे मालविआचलणा जा दे हरिसदोहलं पूरयिस्सन्ति ।
(न खल्विमौ मालविकाचरणौ यौ ते हर्षदोहदं पूरयिष्यतः ।)

(निष्क्रान्ता सह चेट्या)

विदू०—उट्ठेहि अकिदप्पसादोऽसि । (उत्तिष्ठ । अकृतप्रसादोऽसि ।)

राजा—(उत्थायेरावतीमपश्यन्) तत्कथं गतैव प्रिया ।

विदू०—अवस्स । दिट्ठिआ इमस्स अविणअस्स अप्पसण्णा गदा एसा । ता वअं सिग्घं अवक्कमाम जाव अंगारओ रासिं विअ अणुवंकं परिगमणं ण करेदि । (वयस्य ! दिष्ट्या अनेनाविनयेन अप्रसन्ना गतैषा- तद् वयं शीघ्रमपक्रमामः यावदङ्गारको राशिमिवानुवक्रं प्रतिगमनं न करोति ।)

राजा—अहो मदनस्य वैषम्यम् ।

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।
एवं हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता ॥२३॥

(निष्क्रान्तः सह वयस्येन)

॥ इति तृतीयोऽङ्कः ॥

## चतुर्थोऽङ्कः

(ततः प्रविशति पर्युत्सुको राजा प्रतीहारी च ।)

राजा—(आत्मगतम्)

तामाश्रित्य श्रुतिपथगतामाशया बद्धमूलः
संप्राप्तायां नयनविषयं रूढरागप्रवालः ।
हस्तस्पर्शैर्मुकुलित इव व्यक्तरोमोद्गमत्वात्
कुर्यात् कान्तं मनसिजतरुर् मां रसज्ञं फलस्य ॥१॥

(प्रकाशम्) सखे गौतम !

प्रती०—जेदु जेदु भट्टा । असंणिहिदो गोदमो ।
(जयतु जयतु भर्ता । असंनिहितो गौतमः ।)

राजा—(आत्मगतम्) आः मालविकावृत्तान्तज्ञानाय मया प्रेषितः ।

विदू०—(प्रविश्य) वड्ढदु भवं । (वर्धतां भवान् ।)

राजा—जयसेने ! जानीहि तावत् क्व देवी धारिणी सरुजचरणत्वाद् विनोद्यत इति ।

प्रती०—जं देव आणिवेदि । (यद् देव आज्ञापयति ।) (निष्क्रान्ता)

राजा—गौतम ! को वृत्तान्तस्तत्रभवत्यास्ते सख्याः ?

विदू०—जो विडालगहीदाए परहुदिआए ।
(यो विडालगृहीतायाः परभृतिकायाः ।)

राजा—(सविषादम्) कथमिव ?

विदू०—सा क्खु तवस्सिणी तए ण पिंगलच्छीए सारभाण्डभूघरए गुहाए विअ णिक्खित्ता । (सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डभूगृहे गुहायामिव निक्षिप्ता ।)

राजा—ननु मत्संपर्कमुपलभ्य ?

विदू:—अह इं। (अथ किम्।)

राजा—क एवं विमुखोऽस्माकम् येन चण्डीकृता देवी ?

विदू:—सुणादु भवं परिव्वाजिआए मे कहिदं। हिओ किल तत्तहोदी इरावदी रुअक्कन्तचलणं देविं सुहपुच्छिआ आअदा। (शृणोतु भवान् परिव्राजिकया मे कथितम्। ह्यः किल तत्रभवती इरावती रुजाक्रान्तचरणां देवीं सुखपृच्छिका आगता।)

राजा—ततस्ततः।

विदू०—तदो सा देवीए पुच्छिदा—'किं णु ओलोइदो वल्लहजणो' त्ति। ताए उत्तं—'मन्दो वो उपआरो जं परिजणे संकंतं वल्लहत्तणं ण जाणीअदि' (ततः सा देव्या पृष्टा—'किन्ववलोकितो वल्लभजन' इति। तयोक्तम्—'मन्दो व उपचारः यत् परिजने संक्रान्तं वल्लभत्वं न ज्ञायते'।)

राजा—अहो निर्भेदाद् ऋतेऽपि मालविकायामयमुपन्यासः शङ्कयति।

विदू०—तदो ताए अणुवंधिज्जमाणा सा भवदो अविणअं अंतरेण परिगदत्था किदा देवी। (ततस्तयानुबन्ध्यमाना सा भवतः अविनय-मन्तरेण परिगतार्था कृता देवी।)

राजा—अहो दीर्घरोषता तत्रभवत्याः। अतः परं कथय।

विदू०—किं अवरं। मालविआ वउलावलिआ अ पादालवासं णिगल-पदीओ अदिट्ठसुज्जपादं णागकण्णाआओ विअ अणुहोन्ति। (किमपरम्। मालविका वकुलावलिका च पातालवासं निगडपद्यौ अदृष्ट-सूर्यपादं नागकन्यके इवानुभवतः।)

राजा—कष्टं कष्टम्।

मधुरस्वरा परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ।
कोटरमकालवृष्टया प्रबलपुरोवातया गमिते ॥२॥

अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात्।

विदू०—कहं भवस्सदि । जं सारभांडघरव्वावारिदा माहविश्रा देवीए संदिट्ठा—'मह अंगुलीअअमुद्दिश्रं श्रदेक्खिअ ण मोत्तव्वा तुए हदासा मालविआ वउलावलिश्रा श्र' त्ति । (कथं भविष्यति, यत् सारभाण्डगृहव्यापारिता माधविका देव्या संदिष्टा । ममाङ्गुलीयक-मुद्रिकामदृष्ट्वा न मोक्तव्या त्वया हताशा मालविका वकुलावलिका चेति ।)

राजा—(निःश्वस्य सपरामर्शम् ।) सखे ! किमत्र कर्तव्यम् ।

विदू०—(विचिन्त्य) अत्थि एत्थ उवाश्रो । (अस्त्यत्रोपायः ।)

राजा—क इव ।

विदू०—(सदृष्टिक्षेपम्) को वि अदिट्ठो सुणिस्सदि । कण्णे दे कहेमि । (उपश्लिष्य कर्णे) एव्वं विश्र । (कोऽप्यदृष्टः श्रोष्यति । कर्णे ते कथयामि (उपश्लिष्य) एवमिव ।

(आवेदयति । )

राजा—(सहर्षम्) सुष्ठ । प्रयुज्यतां सिद्धये ।

(प्रविश्य)

प्रति०—देव ! पवादसअणे देवी णिसण्णा रत्तचंदणधारिणा परिअण-हत्थगदेण चलणेण भअवदीए कहाहिं विणोदिज्जमाणा चिट्ठदि । (देव ! प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजन-हस्तगतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति ।

राजा०—तस्मादस्मत्प्रवेशयोग्योऽयमवसरः ।

विदू०—भो गच्छदु भवं । श्रहं वि देविं पेक्खिदुं श्ररित्तपाणी भविस्सं । (भो गच्छतु भवान् । अहमपि देवीं द्रष्टुमरिक्तपाणिर्भविष्यामि ।)

राजा—जयसेनायास्तावदस्मद्रहस्यं विदितं कुरु ।

विदू०—तह । (इति कर्णे) एव्वं विअ होदि ।
(तथा । (कर्णे) एवमिव भवति ।)

(आवेद्य निष्क्रान्तः)

राजा—जयसेने ! प्रवातशयनमार्गमादेशय ।

प्रती०—इदो इदो देवो । ( इत इतो देवः )

(ततः प्रविशति शयनस्था देवी परिव्राजिका विभवतश्च परिवारः ।)

देवी—भअवदि ! रमणिज्जं कहावत्थु । तदो तदो ।
(भगवति ! रमणीयं कथावस्तु । ततस्ततः ।)

परि०—(सदृष्टिक्षेपम्) देवी ! अतः परं पुनः कथयिष्यामि । अत्र भवान् विदिशेश्वरः संप्राप्तः ।

धारि०—अम्हो भट्टा (अहो भर्ता ।)

(उत्थातुमिच्छति ।)

राजा—अलमलमुपचारयन्त्रणया—

अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बि ।
चरणं रुजा परीतं कलभाषिणि ! मां च पीडयितुम् ।।३।।

धारि०—जेदु जेदु अज्जउत्तो । (जयतु जयत्वार्यपुत्रः ।)

परि०—विजयतां देवः ।

राजा—(परिव्राजिकां प्रणम्योपविश्य ।) देवि ! अपि सह्या वेदना ।

धारि०—अज्ज अत्थि मे विसेसो । (अद्यास्ति मे विशेषः ।)

(ततः प्रविशति यज्ञोपवीतबद्धाङ्गुष्ठः संभ्रान्तो विदूषकः ।)

विदू०—परित्ताअदु परित्ताअदु भवं । सप्पेणम्हि दट्ठो ।
(परित्रायतां परित्रायतां भवान् । सर्पेणास्मि दष्टः ।)

(सर्वे विषण्णाः)

राजा—कष्टं कष्टम् । क्व भवान् परिभ्रान्तः ।

विदू०—देविं देक्खिस्सं त्ति आआरपुप्फग्गहणकारणादो पमदवणं गदोम्हि । (देवीं द्रक्ष्यामीत्याचारपुष्पग्रहणात् प्रमदवनं गतोऽस्मि ।)

धारि०—हद्धी हद्धी । अहं एव्व बम्हणस्स जीविदसंसअणिमित्तं जादम्हि ।
(हा धिक् ! हा धिक ! अहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जातास्मि ।)

विदू०—तहिं असोअत्थवअकालणादो पसारिदो दक्खिणहत्थो । तदो कोडरणिग्गदेण सप्परूवेण कालेण दट्ठोम्हि । णं एदाणि दुवे दंसणपदाणि । (तस्मिन्नशोकस्तबककारणात् प्रसारितो दक्षिणहस्तः । ततः कोटरनिर्गतेन सर्परूपेण कालेन दष्टोऽस्मि । नन्वेते द्वे दंशनपदे ।)

(दंशं दर्शयति)

परि०—तेन हि दंशच्छेदः पूर्वकर्मेति श्रूयते । स तावदस्य क्रियताम्—

छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम् ।
एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः ॥४॥

राजा—संप्रति विषवैद्यानां कर्म । जयसेने ! ध्रुवसिद्धिः क्षिप्रमानीयताम् ।

प्रती०—जं देवो आवेणदि । (यद् देव आज्ञापयति ।) (निष्क्रान्ता)

विदू—अहो पावेण मिच्चुणा गहीदोम्हि । (अहो पापेन मृत्युना गृहीतोऽस्मि ।)

राजा—मा कातरो भूः । अविषोऽपि कदाचिद् दंशो भवेत् ।

विदू०—कहं ण भाइस्सं । सिमसिमाअन्ति मे अंगाइँ ।
(कथं न भेष्यामि, सिमसिमायन्ति मेऽङ्गानि ।)

(विषवेगं रूपयति)

धारि०—हा दंसिदं असुहं विआरेण । अवलम्बथ बम्हणं ।

(हा ! दर्शितमशुभं विकारेण । अवलम्बध्वं ब्राह्मणम्)
(परिव्राजिकाससंभ्रममवलम्बते ।)

विदू०—(राजानं विलोक्य) भो ! भवदो बाल्लादो वि पिअवअस्सोम्हि । तं विआरिअ अपुत्ताए मे जणणीए जोगक्खमं वहेहि । (भोः ! भवतो बाल्यादपि प्रियवयस्योऽस्मि । तं विचार्य अपुत्राया मे जनन्या योगक्षेमं वह ।)

राजा—मा भैषीर्गौतम । स्थिरो भव । अचिरात् त्वां वैद्यश्चिकित्सिष्यति ।

(प्रविश्य)

जय०—देव ! आणाविदो धुवसिद्धीविण्णावेदि इह एव्व आणीअदु सो गोदमो त्ति । (देव ! आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति—इहैवानीयतां स गौतम इति ।)

राजा—तेन हि प्रतिगृहीतमेनं तत्रभवतः सकाशं प्रापय ।

जय०—तहा । (तथा ।)

विदू०—(देवीं विलोक्य) भोदि । जीवेअं वा ण वा । जं मए अत्तभवन्तं सेवमाणेण ते अवरद्धं तं मरिसेहि ।

(भवति । जीवेयं वा नवा । यन्मयात्रभवन्तं सेवमानेन तेऽपराद्धं तन्मृष्यस्व ।)

धारि०—दीहाऊ होहि । (दीर्घायुर्भव ।)

(निष्क्रान्तो विदूषकः प्रतीहारी च ।)

राजा—प्रकृतिभीरुस्तपस्वी ध्रुवसिद्धिमपि यथार्थनामानं सिद्धिमन्तं न मन्यते ।

(प्रविश्य)

जय०—जेदु जेदु भट्टा । धुवसिद्धी विण्णावेदि—उदकुंभविहाणेण सप्पमुद्दिअं किंपि कप्पिदवं । तं अण्णेसीअदु त्ति ।

(जयतु जयतु भर्ता । ध्रुवसिद्धिर्विज्ञापयति—उदकुम्भविधानेन सर्पमुद्रितं किमपि कल्पयितव्यम् । तदन्विष्यतामिति ।)

धारि०—इदं सप्पमुद्दिअं अंगुलीअअं । पच्छा मम हत्थे देहि णं ।

(इदं सर्पमुद्रितमङ्गुलीयम् । पश्चान्मम हस्ते देह्येतत् ।)

(अङ्गुलीयकं ददाति)

(प्रतीहारी गृहीत्वा प्रस्थिता)

राजा—जयसेने । कर्मसिद्धावाशु प्रतिपत्तिमानय ।

प्रती०—जं देवो आणवेदि । (यद् देव आज्ञापयति ।)

परि०—यथा मे हृदयमाचष्टे तथा निर्विषो गौतमः ।

राजा—भूयादेवम् ।

२०

(प्रविश्य)

जय०—जेदु देवो भट्टा। णिवुत्तविसवेगो गोदमो मुहुत्तेण पकिदित्थो संवुत्तो। (जयतु देवो भर्ता। निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः।)

धारि०—दिट्ठिआ वअणीआदो मुत्तम्हि। (दिष्ट्या वचनीयान्मुक्तास्मि।)

प्रती०—एसो उण वाहतश्रो श्रमच्चो विण्णवेदि—राअकज्जं वहु मन्तिदव्वं दंसणेण अणुग्गहं इच्छामि त्ति। (एष पुनर्वाहतकोऽमात्यो विज्ञापयति—राजकार्यं वहु मन्त्रयितव्यम्, दर्शनेनानुग्रहमिच्छामीति।)

धारि०—गच्छदु श्रज्जउत्तो कज्जसिद्धीए! (गच्छत्वार्यपुत्रः कार्यसिद्धये।)

राजा—देवि! आतपाक्रान्तोऽयमुद्देशः। शीतक्रिया चास्या रुजः प्रशस्ता। तदन्यत्र नीयतां शयनम्।

देवी०—वालिगाओ। अज्जउत्तवग्रणं अणुचिठ्ठह। (वालिकाः! आर्यपुत्रवचनमनुतिष्ठत।)

परि०—तह। (तथा।) (निष्क्रान्ता देवी परिव्राजिका परिजनश्च)

राजा—जयसेने! मां गूढेन पथा प्रमदवनं प्रापय।

जय०—इदो इदो देवो। (इत इतो देवः।)

राजा—जयसेने! ननु समाप्तकाम्यो गौतमः।

जय०—अह इं। (अथ किम्।)

राजा—

इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा।
संदिग्धमेव सिद्धौ कातरमाशङ्कते हृदयम्॥५॥

(प्रविश्य)

विदू०—वड्ढदु भवं। सिद्धाणि दे मङ्गलकम्माणि। (वर्धतां भवान्। सिद्धानि ते मङ्गलकर्माणि।)

राजा—जयसेने ! त्वमपि स्वं नियोगमशून्यं कुरु ।

जय०—जं देवो आणवेदि । (यद्, देव आज्ञापयति ।)

(निष्क्रान्ता)

राजा—गौतम ! क्षुद्रा माधविका । न खलु किंचिद् विचारितमनया ।

विदू०—देवीए अंगुलीअअमुद्दिअं देक्खिअ कहं विआरेदि ।
(देव्या अङ्गुलीयकमुद्रां दृष्ट्वा कथं विचारयति ।)

राजा—न खलु मुद्रामधिकृत्य ब्रवीमि । एतयोर्द्वयोः किंनिमित्तो मोक्षः । किं वा देव्याः परिजनमतिक्रम्य भवान् संदिष्ट इत्येवमनया प्रष्टव्यम् ।

विदू०—णं पुच्छिदोम्हि ! पुणो मन्दस्स मे तस्सिं पच्चुप्पण्णा मदी ।
(ननु पृष्टोऽस्मि । पुनर्मन्दस्य मे तस्मिन् प्रत्युत्पन्ना मतिः ।)

राजा—कथ्यताम् ।

विदू०—भणिदं मए । देव्वचिंतएहिं विण्णाविदो राआ—'सोवसग्गं वो णक्खत्तं' । ता अवस्सं सव्वबंधमोक्खो करीअदु त्ति ।
(भणितं मया । दैवचिन्तकैर्विज्ञापितो राजा—'सोपसर्गं वो नक्षत्रम्' । तदवश्यं सर्वबन्धमोक्षः क्रियतामिति ।)

राजा—(सहर्षम्) ततस्ततः ।

विदू०—तं सुणिअ देवीए इरावदीए चित्तं रक्खन्तीए राआ किल मोएदि त्ति अहं संदिट्ठो त्ति । तदो जुज्जदि त्ति ताए एव्वं संपादिदो अत्थो । (तच्छ्रुत्वा देव्या इरावत्याश्चित्तं रक्षन्त्या राजा किल मोचयतीत्यहं संदिष्ट इति । ततो युज्यत इति तयैवं सम्पादितोऽर्थः ।)

राजा—(विदूषकं परिष्वज्य) सखे ! प्रियोऽहं खलु तव ।

न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्यसिद्धिपथस्त्वन्यः[1] स्नेहेनाप्युपलभ्यते ।।६।।

---

१. ०पथः सूक्ष्मः

विदू०—तुवरदु भवं। समुद्दघरए सहीसहिदं मालविअं ठाविअ भवन्तं पच्चुग्गदोम्हि। (त्वरतां भवान्। समुद्रगृहे सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि।)

राजा—अहमेनां संभावयामि। गच्छाग्रतः।

विदू०—एदु भवं। (परिक्रम्य) एदं समुद्दघरं। (एतु भवान्। (परिक्रम्य) इदं समुद्रगृहम्।)

राजा—(साशङ्कम्) वयस्य! एषा कुसुमावचयव्यग्रहस्ता सख्यास्ते परिचारिका चन्द्रिका संनिकृष्टमागच्छति। इतस्तावदावां भित्तिगूढौ भवावः।

विदू०—अहो! कुंभीलएहिं कामुएहिं च परिहरणीआ क्खु चंदिआ। (अहो कुम्भीलकैः कामुकैश्च परिहरणीया खलु चन्द्रिका।)

(उभौ यथोक्तं कुरुतः।)

राजा—गौतम! कथं नु ते सखी मां प्रतिपालयति। एहि। एनां गवाक्षमाश्रित्य विलोकयावः।

विदू०—तह। (तथा।)

(उभौ विलोकयन्तौ तिष्ठतः।)

(ततः प्रविशति मालविका वकुलावलिका च।

वकु०—सहि! पणम भट्टारं। (सखि! प्रणम भर्तारम्।)

माल०—णमो दे। (नमस्ते।)

राजा—शङ्के मे प्रतिकृतिं निर्दिशति।

माल०—(सहर्षं द्वारमवलोक्य सविषादम्) हला! मं विप्पलंभेसि। (सखि! मां विप्रलम्भयसि।)

राजा—हर्षविषादाभ्यामत्रभवत्याः प्रीतोऽस्मि—

सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य।
वदनेन सुवदनायास्ते समवस्थे क्षणादूढे ॥७॥

वकु०—णं एसो चित्तगदो भट्टा। (नन्वेष चित्रगतो भर्ता।)

उभे—(प्रणिपत्य ।) जेदु भट्टा । (जयतु भर्ता ।)

माल०—हला ! तदा संभमदिट्ठे भट्टिणो रूवे जहा ण वितिण्हम्हि तहा अज्जवि मए भाविदो अवितिण्हदंसणो भट्टा । (सखि ! तदा संभ्रमदृष्टे भर्तू रूपे यथा न वितृष्णास्मि तथा अद्यापि मया भावितः अवितृष्णदर्शनो भर्ता ।)

विदू०—सुदं भवदा । तत्तहोदि—'चित्ते जहा दिट्ठो ण तहा दिट्ठो भव'त्ति मन्तेदि । मुहा दाणिं मंजूसा विअ रअणभंडअं जोव्वणगव्वं वहेसि । (श्रुतं भवता । तत्रभवती—'चित्रे यथा दृष्टो न तथा दृष्टो भवानि'-ति मन्त्रयति । मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि)

राजा—सखे ! कुतूहलवानपि निसर्गशालीनः स्त्रीजनः । पश्य—

कार्त्स्न्येन निर्वर्णयितुं च रूप-
मिच्छन्ति तत्पूर्वसमागमानाम् ।
न च प्रियेष्वायतलोचनानां
समग्रवृत्तीनि विलोचनानि ।।८।।

माल०—हला ! का एसा पासपरिउत्तमुहेण भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाईअदि । (सखि ! कैपा पार्श्वपरिवृत्तमुखेन भर्त्रा मे स्निग्धया दृष्ट्या निध्यायते ।)

बकु०—णं इअं पासगदा इरावदी । (नन्वियं पार्श्वगतेरावती ।)

माल०—सहि ! अदक्खिणो विअ भट्टा मे पडिभादि जो सव्वं देवीजणं उज्झिअ एक्काए मुहे बद्धलक्खो । (सखि ! अदक्षिण इव भर्ता मे प्रतिभाति यः सर्वं देवीजनमुज्झित्वा एकस्या मुखे बद्धलक्ष्यः ।

बकु०—(आत्मगतम्) चित्तगदं भट्टारअं परमत्थदो संकप्पिअ असूअदि । होदु । कीडिस्सं दाव एदाए । (प्रकाशम्) हला ! भट्टिणो वल्लहा एसा । (चित्रगतं भर्तारं परमार्थतः संकल्प्यासूयति । भवतु । क्रीडिष्यामि तावदेतया । सखि ! (प्रकाशम्) भर्तुर्वल्लभैपा ।)

माल०—तदो किं दाणिं अत्ताणं आआसइस्सं । (ततः किमिदानीमात्मान-मायासयिष्यामि ।)

(सासूयं परावर्तते ।)

राजा—सखे ! पश्य ।

भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं
सासूयमाननमितः परिवर्तयन्त्या ।
कान्तापराधकुपितेष्वनया विनेतुः
संदर्शितेव ललिताभिनयस्य शिक्षा ।।९।।

विदू०—अणुणअसज्जो दाणिं होहि । (अनुनयसज्जः इदानीं भव ।)

माल०—अज्जगोदमो एत्थ एव संसेवदि णं । (आर्यगौतमोऽत्रैव संसेवत एनाम् ।)

(पुनः स्थानान्तराभिमुखी भवितुमिच्छति ।)

वकु०—(मालविकां रुद्ध्वा) ण क्खु कुविदा दाणिं तुमं ।
(न खलु कुपितेदानीं त्वम्)

माल०—जइ चिरं कुविदं एव्व मं मण्णेसि एसो पच्चाणीअदि कोवो ।
(यदि चिरं कुपितामेव मां मन्यसे एष प्रत्यानीयते कोपः ।)

राजा—(उपेत्य)

कुप्यसि कुवलयनयने चित्रार्पितचेष्टया किमेतन्मे ।
ननु तव साक्षादयमहमनन्यसाधारणो दासः ।।१०।।

वकु०—जेदु जेदु भट्टा । (जयतु जयतु भर्ता ।)

माल०—(आत्मगतम्) कहं चित्तगदो भट्टा मए असूइदो ।
(कथं चित्रगतो भर्ता मया असूयितः ।)

(प्रकाशं सव्रीडवदनमञ्जलिं करोति ।)

(राजा मदनकातर्यं रूपयति ।)

विदू०—किं भवं उदासीणो विअ दीसइ । (किं भवानुदासीन इव दृश्यते ।)

राजा—अविश्वसनीयत्वात् सख्यास्तव ।

विदू०—अत्तहोदीए अअं कहं तुई अविस्सासो ।
(अत्रभवत्याम् अयं कथं तव अविश्वासः ।)

राजा—श्रूयताम् ।

पथि नयनयोः स्थित्वा स्थित्वा तिरोभवति क्षणात्
सरति सहसा वाह्वोर्मध्यं गतापि सखी तव ।
मनसिजरुजा क्लिष्टस्यैवं समागममायया
कथमिव सखे विस्रब्धं स्यादिमां प्रति मे मनः ॥११॥

बकु०—सहि । बहुसो क्खु भट्टा विप्पलद्धो । ता तुए अत्ता विस्ससणिज्जो करीअदु । (सखि ! बहुशः किल भर्ता विप्रलब्धः । तत्त्वयात्मा विश्वसनीयः क्रियताम् ।)

माल०—सहि ! मह उण मन्दभग्गाए सिविणसमाअमो वि भट्टिणो दुल्लहो आसि । (सखि ! मम पुनर्मन्दभाग्यायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसीत् ।)

बकु०—भट्टा । कहेदु से उत्तरं । (भर्ता कथयत्वस्या उत्तरम् ।)

राजा—

उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम् ।
तव सख्यै मया दत्तो न सेव्यः सेविता रहः ॥१२॥

बकु०—अणुगहीदम्हि । (अनुगृहीतास्मि ।)

विदू०—(परिक्रम्य ससंभ्रमम्) वउलावलिए ! एसो बालासोअरुक्खस्स पल्लवाइँ लंघेदि हरिणो । एहि णिवारेम णं । (वकुलावलिके ! एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति हरिणः । एहि, निवारयाम एनम् ।)

(प्रस्थिता ।)

बकु०—तह । (तथा ।)

राजा—वयस्य ! एवमेवास्मिन् रक्षणक्षणेऽवहितेन त्वया भवितव्यम् ।

विदू०—एव्वं वि गोदमो सन्दिसेअदि । (एवमपि गौतमः सन्दिश्यते ?)

बकु०—(परिक्रम्य) अज्ज गोदम । अहं अप्पआसे चिट्ठामि । तुमं दुवाररक्खओ होहि । (आर्य गौतम ! अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव ।)

विदू०—जुज्जदि । (युज्यते ।)

(निष्क्रान्ता वकुलावलिका)

विदू०—इमं दाव फलिहक्खंभं अस्सिदो होमि । (तथा कृत्वा) अहो सुहप्फरिसदा सिलाविसेसस्स । (इमं तावत् स्फटिकस्तम्भमाश्रितो भवामि । (तथा कृत्वा) अहो सुखस्पर्शता शिलाविशेषस्य ।) (निद्रायते ।)

(मालविका ससाध्वसा तिष्ठति)

राजा—

विसृज सुन्दरि संगमसाध्वसं
मयि[1] चिरात् प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥१३॥

माल०—देवीए भएण अत्तणो वि पिअं कादुं ण पारेमि ।
(देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि ।)

राजा—अयि ! न भेतव्यम् ।

माल०—(सोपालम्भम्) जो ण भाअदि सो मए भट्टिणीदंसणे दिट्ठसामत्थो भट्टा । (यो न बिभेति स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता ।)

राजा—

दाक्षिण्यं नाम विम्बोष्ठि ! नायकानां[2] कुलव्रतम् ।
तन्मे दीर्घाक्षि ! ये प्राणास्ते त्वदाशानिवन्धनाः ॥१४॥

तत् अनुगृह्यतां चिरानुरक्तोऽयं जनः । (संश्लेपमुपजनयति ।)

(मालविका नाट्येन परिहरति)

राजा—(आत्मगतम्) रमणीयः खलु नवाङ्गनानां मदनविषयावतारः । तथा ह्येयम्—

हस्तं कम्पवती[3] रुणद्धि रसनाव्यापारलोलाङ्गुलि[4]
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलापपूरणसुखं निर्वर्तयत्येवं मे ॥१५॥

---

१. तव. पा. २. बैम्बिनाम् पा. ३. ०यते नि.च. ४. ०ली: नि. च.

(ततः प्रविशतीरावती निपुणिका च)

इरा०—हंजे णिउणिए । सच्चं तुमं परिगदत्था चंदिआए । समुद्दघरअलिंदसइदो एआई अज्जगोदमो दिट्ठो त्ति । (हञ्जे निपुणिके ! सत्यं त्वं परिगतार्था चन्द्रिकया । समुद्रगृहालिन्दशयित एकाकी आर्यगौतमो दृष्ट इति ।)

निपु०—अण्णहा कहं भट्टिणीए विण्णावेमि ।
(अन्यथा कथं भट्टिन्यै विज्ञापयामि ।)

इरा०—तेण हि तहिं एव्व गच्छम्ह संसआदो मुत्तं पिअवअस्सं पुच्छिदुं अ ।
(तेन हि तत्रैव गच्छामः । संशयान्मुक्तं प्रियवयस्यं प्रष्टुं च ।)

निपु०—सावसेसं विअ भट्टिणीए वअणं । (सावशेषमिव भट्टिन्या वचनम् ।)

इरा०—अण्णं अ चित्तगदं अज्जउत्तं पसादेदुं ।
(अन्यच्च चित्रगतमार्यपुत्रं प्रसादयितुम् ।)

निपु०—अह दाणिं कहं णु भट्टा एव्वं अणुणीअदि ।
(अथेदानीं कथं नु भर्ता एवमनुनीयते ।)

इरा०—मुद्धे ! जारिसो चित्तगदो णं तारिसो एव्व अण्णसंकंतहिअओ अज्जउत्तो । केवलं उवआरादिक्कमं पमज्जिदुं अअं आरंभो । (मुग्धे ! यादृशश्चित्रगतो ननु तादृश एवान्यसंक्रान्तहृदय आर्यपुत्रः । केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः ।)

निपु०—इदो इदो भट्टिणी । (इत इतो भट्टिनी ।)

(उभे परिक्रामतः ।)

(प्रविश्य)

चेटी—जेदु जेदु भट्टिणी भट्टिणी । देवी भणादि—ण मे मच्छरस्स एसा कालो । तेण क्खु बहुमाण वड्ढेदुं वअस्साए सह णिअलबंधण किदा मालविआ । जइ अणुमण्णसि अज्जउत्तस्स पिअं कादुं तहा करेमि । जं तुह इच्छिअं तं मे भणाहि त्ति । (जयतु जयतु भट्टिनी । भट्टिनि ! देवी भणति—न मे मत्सरस्यैप कालः । तेन खलु बहुमानं वर्धयितुं वयस्यया सह निगडबन्धने कृता मालविका । यद्यनुमन्यसे आर्यपुत्रस्य प्रियं कर्तुं तथा करोमि । यत्तवेष्टं तन्मे भणेति ।)

इरा०—णाअरिए। विण्णावेहि देवीं—'का वअं भट्टिणी णिओजेदुं! परिअणणिग्गहेण दंसिदो मइ अणुग्गहो। कस्स वा पसादेण अअं जणो वड्ढदि'त्ति। (नागरिके! विज्ञापय देवीम्—'का वयं भट्टिनीं नियोजयितुम्। परिजननिग्रहेण दर्शितो मय्यनुग्रहः कस्य वा प्रसादेनायं जनो[1] वर्धत इति।)

चेटी—तह। (तथा।) (निष्क्रान्ता।)

निपु०—(परिक्रम्यावलोक्य च) भट्टिणि! एसो दुवारुद्देसे समुद्दघरअस्स विपणिगदो विअ वलीवद्दो अज्जगोदमो आसीणो एव्व णिद्दाअदि। (भट्टिनि! एष द्वारोद्देशे समुद्रगृहस्य विपणिगत इव वलीवर्दः आर्यगौतमः, आसीन एव निद्रायते।)

इरा०—अच्चाहिदं ण क्खु सावसेसो विसविआरो हवे। (अत्याहितम्। न खलु सावशेषो विषविकारो भवेत्।

निपु०—पसण्णमुहवण्णो दीसइ। अवि अ धुवसिद्धिणा चिइच्छदो त से असंकणिज्जं पावं। (प्रसन्नमुखवर्णो दृश्यते। अपि च ध्रुवसिद्धिना चिकित्सितः। तदस्याशङ्कनीयं पापम्।)

विदू०—(उत्स्वप्नायते) भोदि मालविए। (भवति मालविके!)

निपु०—सुदं भट्टिणीए। कस्स एसो अत्तणिओअसंपादणे विस्ससणिज्जो हदासो। सव्वकालं इदो एव्व सोत्थिवाअणमोदएहिं कुक्खि पूरिअ संपदं मालविअं सिविणावेदि। (श्रुतं भट्टिन्या। कस्यैव आत्मनियोगसम्पादने विश्वसनीयो हताशः। सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा साम्प्रतं मालविकां स्वप्नायते।)

विदू०—इरावदीं अदिक्कमन्ती होहि। (इरावतीमतिक्रामन्ती भव)

निपु०—एदं अच्चाहिदं। इमं भुअंगभीरुअं वम्हवंधुं इमिणा भुअंगकुडिलेण दंडकट्ठेण खंभंतरिदा भाअइस्सं। (एतदत्याहितम्। इमं भुजंगभीरुं ब्रह्मवन्धुमनेन भुजङ्गकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भीषयिष्यामि।)

---

१. अयं जनो मल्लक्षणो भर्त्ता चेति विनय उपालम्भश्च।

इरा०—अरिहदि एव्व किदग्घो उवद्दवस्स । (अर्हत्येव कृतघ्न उपद्रवस्य ।)
(निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति ।)

विदू०—(सहसा प्रबुध्य) अविहा अविहा । भो वअस्स । सप्पो मे उवरि पडिदो । (अविधा अविधा । भो वयस्य ! सर्पो मे उपरि पतितः ।)

राजा—(सहसोपसृत्य) सखे ! न भेतव्यं न भेतव्यम् ।

माल०—(अनुसृत्य) भट्टा । मा दाव सहसा णिक्कम । सप्पो त्ति भणीअदि । (भर्तः ! मा तावत् सहसा निष्क्राम । सर्प इति भण्यते ।)

इरा०—हद्धी हद्धी । भट्टा इदो एव्व धावदि । (हा धिक् हा धिक् ! भर्ता इत एव धावति ।)

विदू०—(सप्रहासम्) कहं दंडकट्ठं एदं । अहं उण जाणे जं मए केदईकंटएहिं डंसं करिअ सप्पस्स उवरि अअसो किदं तं मे फलिदं त्ति । (कथं दण्डकाष्ठमेतत् । अहं पुनर्जाने यन्मया केतकीकण्टकैर्दंशं कृत्वा-सर्पस्योपरि अयशः कृतं तन्मे फलितमिति ।

(प्रविश्य [1]पटाक्षेपेण ।)

वकु०—मा दाव भट्टा पविसदु । इह कुडिलगई सप्पो विअ दीसदि । मा तावद् भर्ता प्रविशतु । इह कुटिलगतिः सर्प इव दृश्यते ।)

इरा०—(स्तम्भान्तरिता राजानं सहसोपेत्य) अवि णिव्विग्घमणोरहो दिवा-संकेदो मिहुणस्स । (अपि निर्विघ्नमनोरथो दिवासङ्केतो मिथुनस्य ।)

(सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः ।)

राजा—प्रिये ! अपूर्वोऽयमुपचारः ।

इरा०—वउलावलिए । दिट्ठिआ दुच्चाहिसारविसआ संपुण्णा दे पइण्णा । (वकुलावलिके ! दिष्ट्या [2]दूत्याभिसारविषया संपूर्णा ते प्रतिज्ञा ।)

---

१. सर्वत्रायमेव पाठः । २. दूत्यं दौत्यम्, तेनाभिसारः, स विषयो यस्याम् । दुच्चाहिआरेति पाठे दूत्याधिकार इतिच्छाया ।

बकु०—पसीददु भट्टिणी ! किं मए किदं त्ति देवो पुच्छिदव्वो । दद्दुरा वाहरन्ति त्ति किं देवो पुहवीएँ वरिसिदुं विरमदि ।

(प्रसीदतु भट्टिनि ! किं मया कृतमिति देवः प्रष्टव्यः ! दर्दुरा व्याहरन्तीति किं देवः पृथिव्यां वर्षितुं विरमति ।)

विदू०—मा दाव । भोदीए दंसणमत्तेण अत्तभवं पणिवादलंघणं विसुमरिदो । तुमं उण अज्जवि पसादं ण गेण्हसि । (मा तावत् । भवत्याः दर्शनमात्रेणात्रभवान् प्रणिपातलङ्घनं विस्मृतः । त्वं पुनरद्यापि प्रसादं न गृह्णासि)

इरा०—कुविदा दाणिं अहं किं करिस्सं । (कुपितेदानीमहं किं करिष्यामि ।)

राजा—एवमेतद् 'अस्थाने कोप' इत्यनुपपन्नं त्वयि । तथा हि—

> कदा मुखं वरतनु कारणादृते
> तवागतं क्षणमपि कोपपात्रताम् ।
> अपर्वणि ग्रहकलुषेन्दुमण्डला
> विभावरी कथय कथं भविष्यति ॥१६॥

इरा०—अट्ठाणे त्ति सुट्ठु वाहरिदं अज्जउत्तेण । अण्णसंकन्तेसु अम्हाणं भाअहेएसु जइ उण कुप्पेअं तदो णं अहं हस्सा भवेअं । (अस्थान इति सुष्ठु व्याहृतमार्यपुत्रेण । अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयम् ततो नन्वहं हास्या भवेयम् ।)

राजा—त्वमन्यथा कल्पयसि । अहं पुनः सत्यमेव कोपस्थानं न पश्यामि । कुतः—

> नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो बन्धुम् ।
> इति मोचिते मयैते प्रणिपतितुं मामुपगते च ॥१७॥

इरा०—णिउणिए ! गच्छ । देवीं विण्णावेहि-दिट्ठो भवदीए पक्खवादो णं अज्ज त्ति । (निपुणिके ! गच्छ । देवीं विज्ञापय—दृष्टो भवत्याः पक्षपातो नन्वद्येति ।)

निपु०—तह । (तथा ।) (निष्क्रान्ता)

विदू०—(आत्मगतम्) अह्मो अणत्थो संपडिदो। वंधणब्भट्टो गिहकवोदो विडालिआए आलोए पडिदो। (अहो अनर्थः संपतितः वन्धनभ्रष्टो गृहकपोतो विडालिकाया आलोके पतितः।)

निपु०—(प्रविश्यापवार्य) भट्टिणी! जदिच्छादिट्ठाए माहविआए आचक्खिदं एव्वं क्खु एदं णिव्वुत्तं त्ति। (भट्टिनि! यदृच्छादृष्टया माधविकयाख्यातम्—एवं खल्वेतन्निर्वृत्तमिति।)

(कर्णे कथयति।)

इरा०—(आत्मगतम्) उववण्णं। सच्चं अअं एत्थ वह्मवंधुणा किदो पओओ। (विदूषकं विलोक्य प्रकाशम्) इअं इमस्स कामतन्तसचिवस्स णीदी। (उपपन्नम्। सत्यमयमत्र ब्रह्मवन्धुना कृतः प्रयोगः। (विदूषकं विलोक्य प्रकाशम्) इयमस्य कामतन्त्रसचिवस्य नीतिः)

विदू०—भोदि! जदि णीदिगदं एक्कं वि अक्खरं पढेअ णं मए अत्तभवं पासिदो हवे! (भवति! यदि नीतिगतमेकमप्यक्षरं पठेयं ननु मया अत्रभवान् पाशितो[1] भवेत्?

राजा—(आत्मगतम्) कथं नु खल्वस्मात् सङ्कटादात्मानं मोचयिष्यामि।

(प्रविश्य)

जय०—देव! कुमारी वसुलच्छी कंदुअं अणुधावन्दी पिंगलवाणरेण वलीअं तासिदा अंकणिसण्णा देवीए पवादकिसलअं विअ वेवमाणा ण किंवि पकिदिं पडिवज्जइ। (देव! कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलवत्त्रासिता,अङ्कनिषण्णा देव्याः प्रवातकिसलयमिव वेपमाना न किंचित् प्रकृतिं प्रतिपद्यते)

राजा—कष्टं कष्टम्। कातरो बालभावः।

इरा०—(सावेगम्) तुवरदु अज्जउत्तो णं समासासिदुं। मा से संतासजणिदो विआरो वड्ढदु। (त्वरतामार्यपुत्र एनां समाश्वासयितुम्। मास्याः सत्रासजनितो विकारो वर्धताम्।)

---

१. क. तदो गाअत्तिं वि विम्हरेअं = तदा गायत्रीमपि विस्मरेयम् नि-९. क. ख. मए अत्तभवं पेसिदो = मया अत्रभवान् प्रेषितः' का.च. नि-.४

राजा—अयमेनामहं संज्ञापयामि ।

(सत्वरं परिक्रामति ।

विदू—साहु रे पिंगलवाणर साहु । परित्तादो तुए सपक्खो ।
(साधु पिङ्गलवानर साधु । परित्रातस्त्वया स्वपक्षः ।)

(निष्क्रान्तो राजा विदूषकश्च, इरावती निपुणिका प्रतिहारी च ।)

माल०—हला देवि चिन्तिअ वेवदि मे हिअअं । ण जाणे अदो वरं किं वा अणुहविदव्वं हविस्सदि त्ति । (सखि ! देवीं चिन्तयित्वा वेपते हृदयम् । न जाने अतः परं किं वानुभवितव्यं भविष्यतीति ।

(नेपथ्ये)

अच्चरिअं अच्चरिअं अपुण्णे एव्व पंचरत्ते दोहलस्स मुउलेहिं संणद्धो तवणीआसोओ । जाव देवीए णिवेदेमि ।
(आश्चर्यमाश्चर्यम् । अपूर्ण एवं पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोकः । यावद् देव्यै निवेदयामि ।)

(उभौ श्रुत्वा प्रहृष्टे ।)

बकु०—आस्ससिदु सही । सच्चप्पइण्णा देवी ।
(आश्वसितु सखी ! सत्यप्रतिज्ञा देवी ।)

माल०—तेण हि पमदवणपालिआए पिट्ठदो होमि ।
(तेन हि प्रमदवनपालिकायाः पृष्ठतो भवामि ।)

बकु०—तह । (तथा ।)

(निष्क्रान्ते)

॥ इति चतुर्थोऽङ्कः ॥

## ॥ [1]अथ प्रवेशकः ॥

(ततः प्रविशत्युद्यानपालिका ।)

उद्या०—उवविखतो मए किदसक्कारविहिणो तवणीआसोअस्स वेदिआबंधो जाव अणुट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि । (परिक्रम्य) अहो दैवस्य अणुकंपणीआ मालविआ । तस्सिं तह चंडिआ देवी इमिणा असोअकुसुमवुत्तंतेण पसादसुमुही हविस्सदि । कहिं णु क्खु देवी हवे । (विलोक्य) अम्हो एसो देवीए परिअणब्भन्तरो किंवि जदुमुद्दालंछिदं मंजूसं गेण्हिअ चदुस्सालादो कुज्जो सारसिओ णिक्कामदि । पुच्छिसं दाव णं । सारसिअ कहिं पत्थिदोसि ।

(उपक्षिप्तो मया कृतसत्कारविधिस्तपनीयाशोकस्य वेदिकाबन्धः । यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । (परिक्रम्य) अहो दैवस्य अनुकम्पनीया मालविका ! तस्यां तथा चण्डी देवी अनेनाशोककुसुमवृत्तान्तेन प्रसादसुमुखी भविष्यति । कुत्र नु खलु देवी भवेत् । (विलोक्य) अहो एष देव्याः परिजनाभ्यन्तरः किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुश्शालातः कुब्जः सारसिको निष्क्रामति । पृच्छामि तावदेनम् । सारसिक ! कुत्र प्रस्थितोऽसि ?)

(ततः प्रविशति यथानिर्दिष्टहस्तः कुब्जः ।)

सार०—महुअरिए विज्जाभरिआणं वह्मणाणं णिच्चदक्खिणा [2]दादव्वा । तं अज्ज पुरोहिदस्स हत्थं पावइस्सं । (मधुकरिके ! विद्याभरितानां ब्राह्मणानां नित्यदक्षिणा [2]दातव्या । तामद्य पुरोहितस्य हस्तं प्रापयिष्यामि ।)

मधु०—अह किंणिमित्तं । (अथ किंनिमित्तम् ?)

---

१. इयमस्माकं पाठयोजना । अत्र पञ्चमोऽङ्कः सा.च. नि-४, नि-९. क.

२. णां मासिइं णिक्कादिरूपं पु०' का. नि-९. । ०णामाडिका निष्काणि पु० का नि-४.

सार०—जदप्पहुदि सेणावदी जण्णतुरंगरक्खणे णिउत्तो भट्टदारओ वसुमित्तो तदप्पहुदि तस्स आउसणिमित्तं णिक्कसदसुवण्णपरिमाणं दक्खिणं देवी दक्खिणीएहिं परिग्गाहेदि। (यतः प्रभृति सेनापतिर्यज्ञतुरङ्गरक्षणे नियुक्तो भर्तृदारको वसुमित्रः ततः प्रभृति तस्यायुर्निमित्तं निष्कशतसुवर्णपरिमाणां दक्षिणां देवी दक्षिणीयैः परिग्राहयति।)

मधु०—अह कहिं देवी ? किं वा अणुचिट्ठदि ? (अथ कुत्र देवी ? किं वानुतिष्ठति ?)

सार०—मंगलघरे आसणत्था भविअ विदब्भ-विसआदो भादुणा वीरसेणेण पेसिदं लेहं लेहकरेहिं वाइअमाणं सुणादि। (मङ्गलगृहे आसनस्था भूत्वा विदर्भविषयाद् भ्रात्रा वीरसेनेन प्रेषितं लेखं लेखकरैर्वाच्यमानं शृणोति।)

मधु०—को उण विदब्भराअवुत्तन्तो सुणीअदि। (कः पुनर्विदर्भराजवृत्तान्तः श्रूयते।)

सार०—वसीकिदो क्खु वीरसेणप्पमुहेहिं भत्तुणो विजअदंडेहिं विदब्भणाहो। मोइदो से दाआदो माहवसेणो दूदो। अ तेण महासाराणि रअणाणि वाहणाणि सिप्पआरिआ-भूइट्ठं परिअणं उवाअणीकरिअ भट्टिणो सआसं पेसिदो त्ति। (वशीकृतः किल वीरसेनप्रमुखैर्भर्तुर्विजयदण्डैर् विदर्भनाथः। मोचितोऽस्य दायादो माधवसेनः। दूतश्च तेन महासाराणि रत्नानि वाहनानि शिल्पकारिकाभूयिष्ठं परिजनमुपायनीकृत्य भर्तुः सकाशं प्रेषित इति।)

मधु०—गच्छ अणुचिट्ठ अत्तणो णिओअं। अहं वि देविं पेक्खिस्सं। (गच्छानुतिष्ठात्मनो नियोगम्। अहमपि देवीं प्रेक्षिष्ये।)

( निष्क्रान्ते। )

॥ इति प्रवेशकः ॥

## अथ पञ्चमोऽङ्कः

(ततः प्रविशति प्रतिहारी)

प्रति०—आणत्तम्हि असोअसक्कारवावुदाए देवीए—विण्णावेहि अज्जउत्तम् इच्छम्मि उज्जउत्तेण सह असोअरुक्खस्स पसूणलच्छि पच्चक्खीकादुं त्ति। ता जाव धम्मासणगदं देवं पडिवालेमि। (आज्ञाप्तास्मि अशोकसत्कारव्यापृतया देव्या—विज्ञापय आर्यपुत्रम्-इच्छामि आर्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमिति। तद् यावद् धर्मासनागतं देवं प्रतिपालयामि)

(परिक्रामति।)

(नेपथ्ये वैतालिकौ)

प्रथमः—विजयतां विजयतां देवः। दिष्टया दण्डैरेव रिपुशिरःसु वर्तते देवः।

परभृतकलव्याहरेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान्।
विजयकरिणामालानत्वं गतैः प्रबलस्य ते
वरद [1]वरदारोधोवृक्षैः सहावनतो रिपुः॥१॥

द्वितीयः—

विरचितपदं[2] वीरप्रीत्या सुरोपम सूरिभि-
श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान्।
तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम्॥२॥

प्रती०—एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो एव्व आअच्छदि। अहं वि दाव इमस्स पमुहादो लोआदो ओसरिअ खम्भन्तरिदा होमि। (एष जयशब्दसूचितप्रस्थानो भर्ता इत एवागच्छति। अहमपि

---

१. वरदा नदीविशेषः। २. अनयोः पादयोर्व्यत्यासो युक्तः।

तावदस्य प्रमुखाल्लोकादपसृत्य स्तम्भान्तरिता भवामि। (एकान्ते स्थिता।)

(प्रविश्य सवयस्यो राजा)

राजा— कान्तां विचिन्त्य सुलभेतरसंप्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते मम मनः सुखमश्नुते च ॥३॥

विदू०—जह अहं पेक्खामि तह एक्कन्तसुहिदो भवं हविस्सदि। (यथाहं प्रेक्ष्ये तथा एकान्तसुखितो भवान् भविष्यति।)

राजा—कथमिव।

विदू—अज्ज किल देवीए एव्वं पंडितकोसिई भणिदा—भअवदि! जं तुमं पसाहणगव्वं वहसि तं दंसेहि मालविआए सरीरे विवाहणेवत्थं त्ति। ताए सविसेसालंकिदा मालविआ। तत्तहोदी कदावि पूरए भवदो वि मणोरहं। (अद्य किल देव्या एवं पण्डितकौशिकी भणिता—भगवती! यत् त्वं प्रसाधनगर्वं वहसि तद् दर्शय मालविकायाः शरीरे विवाहनेपथ्यमिति। तया सविशेषालंकृता मालविका। तत्रभवती कदाचित् पूरयेद् भवतोऽपि मनोरथम्।)

राजा—सखे! मदपेक्षानुवृत्त्या निवृत्तेर्ष्यया[1] धारिण्या पूर्वाचरितैः संभाव्यत एवैतत्।

प्रति०—(उपगम्य) जेदु जेदु भट्टा। देवी विण्णावेदि—तवणीआसोअस्स कुसुमसहदंसणेण मह आरम्भो सफलो करीअदु त्ति। (जयतु जयतु भर्ता। देवी विज्ञापयति—तपनीयाशोकस्य कुसुमसहदर्शनेन ममारम्भः सफलः क्रियतामिति।)

राजा—ननु तत्रैव देवी तिष्ठति?

प्रति०—अह इं। जहरिहसंमाणसुहिअं अन्तेउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेण सह देवं पडिवालेदि। (अथ किम्। यथार्हसम्मानसुखितमन्तःपुरं विसृज्य मालविकापुरोगेण आत्मनः परिजनेन सह देवं प्रतिपालयति।)

---

१. मनुप्राप्य अनया नि-४, च.

राजा—(सहर्षं विदूषकं विलोक्य) जयसेने । गच्छाग्रतः ।

प्रति०—एदु एदु देवो । (एत्वेतु देवः ।) (परिक्रामति ।)

विदू०—(विलोक्य) भो वअस्स । किंवि परिवुत्तजोव्वणो विअ वसन्तो पमदवणे लक्खीअदि । (भो वयस्य ! किंचित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते ।)

राजा—यथाह भवान्

अग्रे विकीर्ण-कुरवक-फल-जालकभिद्यमान-सहकारम् ।
परिणामाभिमुखमृतोरुत्सुकयति यौवनं चेतः ।।४।।

विदू०—(परिक्रम्म) अहो । अअं सो दिण्णणेवत्थो विअ कुसुमत्थवएहिं तवणीआसोओ । ओलोअदु भवं । (अहो । अयं स दत्तनेपथ्य इव कुसुमस्तवकैस्तपनीयाशोकः । अवलोकयतु भवान् ।)

राजा—स्थाने खलु प्रसवमन्थरोऽयमभूत् । यदिदानीमनन्यसाधारणीं शोभामुद्वहति । पश्य—

सर्वाशोकतरूणां प्रथमं सूचितवसन्तविभवानाम् ।
निर्वृत्तदोहदेऽस्मिन् संक्रान्तानीव कुसुमानि ।।५।।

विदू०—तह । भो वीसद्धो होहि अम्हेसु संणिहिदेसु वि धारिणी पासपरिवट्टिणीं मालविअं अणुमण्णेदि । (तथा । भोः विस्रब्धो भव । अस्मासु संनिहितेष्वपि धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते ।)

राजा—(सहर्षम्) सखे । पश्य—

मामियमभ्युत्तिष्ठति देवी विनयादनूत्थिता प्रियया ।
विस्मृत[1]-हस्त-कमलया नरेन्द्रलक्ष्म्या वसुमतीव ।।६।।

(ततः प्रविशति धारिणी मालविका परिव्राजिका विभवतश्च परिवारः ।)

माल०—(आत्मगतम्) जाणामि णिमित्तं कोदुआलंकारस्स । तह वि मे हिअअं किसिणीपत्तगदं विअ सलिलं वेवदि । अवि अ दक्खिणेदरं वि मे णअणं वहुसो फुरदि । (जानामि निमित्तं [2]कौतुकालंकारस्य ।

---

१. विस्तृत०. २. कौतुकं विवाहहस्तसूत्रं कङ्कणनाम्ना प्रतीतम् ।

अथापि मे हृदयं विसिनीपत्रगतमिव सलिलं वेपते । अपि च दक्षिणेतर-मपि मे नयनं बहुशः स्फुरति ।)

विदू०—भो वअस्स ! विवाहणेवत्थेण सविसेसं क्लु सोहदि मालविआ । (भो वयस्य ! विवाहनेपथ्येन सविशेषं खलु शोभते मालविका ।)

राजा—पश्याम्येनाम् । यैषा—

अनतिलम्बिदुकूलनिवासिनी
बहुभिराभरणैः प्रतिभाति मे ।
उडुगणैरुदयोन्मुखचन्द्रिका
हतहिमैरिव चैत्रविभावरी ।।७।।

धारि०—(उपेत्य) जेदु जेदु अज्जउत्तो । (जयतु जयत्वार्यपुत्रः)

विदू०—वड्ढदु भोदी । (वर्धतां भवती ।)

परि०—विजयतां देवः ।

राजा—भगवति अभिवादये ।

परि०—अभिप्रेतसिद्धिरस्तु ।

धारि०—(सस्मितम्) अज्जउत्त ! एस से अम्हेहिं तरुणीजणसहाअस्स असोओ संकेदघरो कप्पिदो । (आर्यपुत्र ! एष ते अस्माभिस्तरुणीजन-सहायस्य अशोकः संकेतगृहं कल्पितः ।)

विदू०—भो आराहिओसि । (भोः आराधितोऽसि)

राजा—(सव्रीडमशोकमभितः परिक्रामन् ।)

नायं देव्या भाजनत्वं न नेयः
सत्काराणामीदृशानामशोकः ।
यः सावज्ञो माधवश्रीनियोगे
पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ।।८।।

विदू०—भो वीसद्धो भविअ तुमं जोव्वणवदिं इमं पेक्ख ! (भो विस्रब्धो भूत्वा त्वं यौवनवतीमिमां पश्य ।)

धारि०—कं ? (काम् ?)

विदू०—भोदि तवणीआसोअस्स कुसुमसोहम्। (भवति ! तपनीयाशोकस्य कुसुमशोभाम् ।)

( सर्वे उपविशन्ति । )

राजा—(मालविकां विलोक्य आत्मगतम्) कष्टः खलु संनिधिवियोगः

अहं रथाङ्गनामेव प्रिया सहचरीव मे।
अननुज्ञातसंपर्का धारिणी रजनीव नौ ॥८॥

( प्रविश्य )

कञ्चु०—विजयतां देवः ! अमात्यो विज्ञापयति—विदर्भविषयोपायने द्वे शिल्पकारिके मार्गपरिश्रमादलघुशरीरे इति पूर्वं न प्रवेशिते। संप्रति देवोपस्थानयोग्ये संवृत्ते। तदाज्ञां देवो दातुमर्हतीति।

राजा—प्रवेशय ते।

कञ्चु०—यदाज्ञापयति देवः। (निष्क्रम्य ताभ्यां सह प्रविश्य) इत इतो भवत्यौ।

प्रथ०—(जनान्तिकम्) हला मदणिए। अपुव्वं इमं राअउलं[1] पविसन्तीए पसीददि मे हिअअं। (सखि मदनिके ! अपूर्वमिदं राजकुलं प्रविशन्त्याः प्रसीदति मे हृदयम् ।)

द्विती०—जोसिणीए। अत्थि क्खु लोअप्पवादो आआमि सुहं दुक्खं वा हिअअसमवत्था कहेदि त्ति। (ज्योत्स्निके ! अस्ति खलु लोकप्रवादः आगामि सुखं दुःखं वा हृदयसमवस्था कथयतीति ।)

प्रथ०—सो सच्चो दाणिं होदु। (स सत्य इदानीं भवतु ।)

कञ्चु०—एष देव्या सह देवस्तिष्ठति। उपसर्पतां भवत्यौ।

( उभे उपसर्पतः )

(मालविका परिव्राजिका च चेट्यौ विलोक्य परस्परमवलोकयतः ।)

उभे—(प्रणिपत्य) जेदु जेदु भट्टा। जेदु जेदु भट्टिणी।
(जयतु जयतु भर्ता। जयतु जयतु भट्टिनी ।)

( उभे राजाज्ञया उपविष्टे । )

---

१. राजकुलं राजभवनसंनिवेशः दुर्गमिति यावत्।

राजा—कस्यां कलायामभिविनीते भवत्यौ ।

उभे—भट्टा ! संगीदए अब्भन्तरे म्ह । (भर्तः ! संगीतके अभ्यन्तरे स्वः ।

राजा—देवि ! गृह्यतामनयोरन्यतरा ।

धारि०—मालविए ! इदो पेक्ख । कदरा दे संगीदसहअरिणी रुच्चदि । (मालविके ! इतः पश्य । कतरा ते संगीतसहकारिणी रोचते ।)

उभे—(मालविकां दृष्ट्वा) अम्हो भट्टदारिआ । जेदु जेदु भट्टदारिआ । (अहो भर्तृदारिका । जयतु जयतु भर्तृदारिका ।)

(प्रणम्य तया सह वाष्पं विसृजतः ।) (सर्वे सविस्मयं विलोकयन्ति ।)

राजा—के भवत्यौ ? का वेयम् ?

उभे—भट्टा ! एसा अम्हाणं भट्टारिआ । (भर्तः ! एषास्माकं भर्तृदारिका ।)

राजा—कथमिव ।

उभे—सुणादु भट्टा । जो सो भट्टिणा विजअदण्डेहिं विदब्भणाहं वसीकरिअ बन्धणादो मोइओ कुमारो माहवसेणो णाम तस्स इअं कणीअसी भइणी मालविआ णाम । (शृणोतु भर्ता ! यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम तस्येयं कनीयसी भगिनी मालविका नाम ।)

धारि०—कहं राअदारिआ इअं । चन्दणं क्ख मए पादुओवओएण दूसिदं । (कथम् राजदारिकेयम् । चन्दनं खलु मया पादुकोपयोगेन दूपितम् ।)

राजा—अथ, अत्रभवती, कथमित्थंभूता ?

माल०—(निःश्वस्यात्मगतम्) विहिणिओएण । (विधिनियोगेन ।)

द्विती०—सुणादु भट्टा । दाआदवसंगदे भट्टदारए माहवसेणे तस्स अमच्चेण अज्जसुमदिणा अम्हारिसं परिअणं उज्झिअ गूढं आणीदा एसा । (शृणोतु भर्ता । दायादवशंगते भर्तृदारके माधवसेने तस्यामात्येनार्यसुमतिनास्मादृशं परिजनमुज्झित्वा गूढमानीतैषा ।)

राजा—श्रुतपूर्वं मयैतत् । ततस्ततः ।

द्वितीο—भट्टा ! अंदो वरं ण आणामि। (भर्तः ! अतः परं न जानामि।)

परिο—ततः परं मन्दभागिनी कथयिष्यामि।

उभे—भट्टदारिए। अज्जकोसिईए विअ सरसंजोओ। णं सा एव्व। (भर्तृदारिके ! आर्यकौशिक्या इव स्वरसंयोगः ? ननु सैव।)

मालο—अह इम्। (अथ किम्।)

उभे—जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि। भअवदि ! णमो दे। (यतिवेषधारिणी आर्यकौशिकी दुःखेन विभाव्यते। भगवति ! नमस्ते।)

परिο—स्वस्ति भवतीभ्याम्।

राजा—कथम्, आप्तवर्गोऽयं भगवत्याः।

परिο—एवमेतत्।

विदूο—तेण हि कहेदु भअवदो अत्तहोदोए वुत्तन्तं दाव असेसं। (तेन हि कथयतु भगवती अत्रभवत्या वृत्तान्तं तावदशेषम्।)

परिο—(सवैक्लव्यम्) तावच्छ्रूयताम्। माधवसेनसचिवं ममाग्रजं सुमतिमवगच्छ।

राजा—उपलक्षितः। ततस्ततः।

परिο—स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत्सम्बन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः।

राजा—ततस्तः।

परिο—स च अटव्यन्तरे निविष्टो गताध्वा वणिग्गणः।

राजा—ततस्ततः।

परिο—ततः

तूणीरपट्टपरिणद्धभुजान्तराल-
मापार्ष्णिलम्बिशिखिबर्हकलापधारि।
कोदण्डपाणि विनदत्प्रतिरोधकाना-
मापातदुष्प्रसहमाविरभूदनीकम् ॥१०॥

(मालविका भयं रूपयति।)

विदू०—भोदि ! मा भआहि। अदिक्कन्तं क्खु तत्तहोदी कहेदि। (भवति ! मा बिभेहि। अतिक्रान्तं खलु तत्रभवती कथयति।)

राजा—ततस्ततः।

परि०—ततो मुहूर्तं वद्धायुधास्ते पराङ्मुखीभूताः सार्थवाहयोद्धारस्तस्करैः।

राजा—हन्त। इतः परं कष्टतरं श्रोतव्यम्।

परि०—ततः स मत्सोदर्यः

इमां परीप्सुर्दुर्जाते पराभिभवकातराम्।
भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः ॥११॥

प्रथ०—हा हदो सुमदी। (हा हतः सुमतिः।)

द्विती०—तदो क्खु इअं भट्टदारिआए समवत्था संवुत्ता। (ततः खल्वियं भर्तृदारिकायाः समवस्था संवृत्ता)

(परिव्राजिका बाष्पं विसृजति।)

राजा—भगवति ! तनुत्यजामीदृशी लोकयात्रा। न शोच्यस्तत्रभवान् सफलीकृतभर्तृपिण्डः। ततस्ततः।

परि०—ततोऽहं मोहमुपगता यावत् संज्ञां लभे तावदियं दुर्लभदर्शना संवृत्ता।

राजा—महत् खलु कृच्छ्रमनुभूतं भगवत्या।

परि०—ततो भ्रातुः शरीरमग्निसात्कृत्वा पुनर्नवीकृतवैधव्यदुःखया मया त्वदीयं देशमवतीर्य इमे काषाये गृहीते।

राजा—युक्तः सज्जनस्यैष पन्थाः। ततस्ततः।

परि०—सेयमाटविकेभ्यो वीरसेनं वीरसेनाच्च देवीं गता। देवीगृहे लब्धप्रवेशया मया चानन्तरं दृष्टेत्येतदवसानं कथायाः।

माल०—(आत्मगतम्) किं णु क्खु संपदं भट्टा भणादि। (किं नु खलु सांप्रतं भर्ता भणति)

राजा—अहो परिभवोपहारिणो विनिपाताः । कुतः—

> प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती ।
> स्नानीयवस्त्रक्रियया पत्रोर्णं वोपयुज्यते ।।१२।।

धारि०—भअवदि ! तुए अभिजणवदिं मालविअं अणाचक्खन्तीए असंपदं किदं (भगवति ! त्वया अभिजनवतीं मालविकामनाचक्षाणया असांप्रतं कृतम् ।)

परि०—शान्तं पापम् । केनचित् कारणेन खलु मया नैर्घृण्यमवलम्बितम् ।

धारि०—किं विअ तं कारणम् ? (किमिव तत् कारणम् ?)

परि०—इयं पितरि जीवति केनापि देवयात्रागतेन सिद्धादेशकेन साधुना मत्समक्षं समादिष्टा—आसंवत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यतीति । तदेवं भाविनमादेशमस्यास्त्वत्पादशुश्रूषया परिणमन्तमवेक्ष्य कालप्रतीक्षया मया साधु कृतमिति पश्यामि ।

राजा—युक्ता प्रतीक्षा ।

कञ्चु०—देव ! कथान्तरेणान्तरितम् । अमात्यो विज्ञापयति—विदर्भगतमनुष्ठेयमनुष्ठितमभूत्, देवस्य तावदभिप्रायं श्रोतुमिच्छामीति ।

राजा०—मौद्गल्य ! तत्रभवतोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमिदानीमवस्थापयितुकामोऽस्मि ।

> तौ पृथग् वरदाकूले शिष्टामुत्तरदक्षिणे ।
> नक्तन्दिवं विभज्योभौ शीतोष्णकिरणाविव ।।१३।।

कञ्चु०—देव ! एवममात्यपरिषदे निवेदयामि ।

(राजा अङ्गुल्यानुमन्यते)

(निष्क्रान्तः कञ्चुकी)

प्रथमा—(जनान्तिकम्) भट्टदारिए। दिट्ठिआ भट्टिणा भट्टिदारओ अद्धरज्जे पडिट्ठं गमइस्सदि। (भर्तृदारिके। दिष्ट्या भर्त्रा भर्तृदारकः अर्द्धराज्ये गमिष्यते।)

माल०—एवं दाव बहु मणिदव्वं जं जीविदसंसआदो मुत्तो (एतत् तावद् बहु मन्तव्यम् यज्जीवितसंशयान्मुक्तः।)

(प्रविश्य)

कञ्चु०—विजयतां देवः! देव अमात्यो विज्ञापयति—कल्याणी देवस्य बुद्धिः। मन्त्रिपरिषदोऽप्येतदेव दर्शनम्। कुतः—

द्विधा विभक्तां श्रियमुद्वहन्तौ
धुरं रथाश्वाविव संग्रहीतुः।
तौ स्थास्यतस्ते [1]नृपतेर्निदेशे
[2]परस्परोपग्रहनिर्विकारौ ॥१४॥

राजा—तेन हि मन्त्रिपरिषदं ब्रूहि—सेनान्ये वीरसेनाय लेख्यताम् एवं क्रियतामिति।

कञ्चुकी—यदाज्ञापयति देवः। (निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविष्टः।) अनुष्ठिता प्रभोराज्ञा। अयं देवस्य सेनापतेः पुष्यमित्रस्य सकाशात् सोत्तरीयप्राभृतको लेखः प्राप्तः। प्रत्यक्षीकरोत्वेनं देवः।

(राजोत्थाय सप्राभृतकं लेखं सोपचारं गृहीत्वा परिजनायार्पयति।)

(परिजनो लेखं नाट्येनोद्घाटयति।)

धारि०—(आत्मगतम्) अम्हो। तदोमुहं एव्व णो हिअअं। सुणस्सं दाव गुरुअणस्स कुसलाणन्तरं वसुमित्तस्स वुत्तन्तं। अदिघोरे क्खु पुत्तओ सेनावदिणा णिउत्तो। (अहो! ततोमुखमेव नो हृदयम्। श्रोष्यामि तावद् गुरुजनस्य कुशलानन्तरं वसुमित्रस्य वृत्तान्तम्। अतिघोरे खलु पुत्रकः सेनापतिना नियुक्तः।)

---

१. नृपती पा० २. परस्पराव० पा.

राजा—(उपविश्य लेखं सोपचारं गृहीत्वा वाचयति ।) स्वस्ति । यज्ञशरणात् सेनापतिः पुष्यमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात् परिष्वज्येदमनुदर्शयति 'विदितमस्तु,योऽसौ राजयज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य वत्सरोपावर्त्तनीयो[1] निरर्गलस्तुरङ्गो विसृष्टः । स सिन्धोर्दक्षिणरोधसि चरन्नश्वानीकेन यवनेन प्रार्थितः । ततः उभयोः सेनयोर्महानासीत् संमर्दः ।

(देवी विषादं नाटयति)

राजा—कथमीदृशं संवृत्तम् । (शेषं पुनर्वाचयति)

ततः परान् पराजित्य वसुमित्रेण धन्विना ।
प्रसह्य ह्रियमाणो मे वाजिराजो निर्वितः ॥१५॥

धारि०—इमिणा आससिदं मे हिअअं । (अनेनाश्वस्तं मे हृदयम् ।)

राजा—(शेषं पुनर्वाचयति ।) सोऽहमिदानीमंशुमता सगरपुत्रेणेव प्रत्याहृताश्वो यक्ष्ये । तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति ।

राजा—अनुगृहीतोऽस्मि ।

रि०—दिष्टचा पुत्रविजयेन दम्पती वर्धेते ।

भर्त्रासि वीरपत्नीनां श्लाघ्यानां स्थापिता धुरि ।
वीरसूरिति शब्दोऽयं तनयात् त्वामुपस्थितः ॥१६॥

धारि०—भअवदि ! परितुट्ठम्हि जं पितरं अणजादो मे वच्छओ । (भगवति ! परितुष्टास्मि यत् पितरमनुजातो मे वत्सकः ।)

राजा—मौद्गल्य ! ननु कलभेन यूथपतेरनुकृतम् ।

कञ्चु०—देव ! अयं कुमारः—

नैतावता वीरविजृम्भितेन
चित्तस्य नो विस्मयमादधाति ।
यस्याप्रधृष्यः प्रभवस्त्वमुच्चै-
रग्नेरपां दग्धुरिवोरुजन्मा ॥१७॥

---

१. ०पात्तनियमो नि-४. च.

राजा—मौद्गल्य ! यज्ञसेनश्यालमुररीकृत्य मोच्यन्तां सर्वे बन्धनस्थाः ।

कञ्चु०—यदाज्ञापयति देवः ।

(निष्क्रान्तः ।)

धारि०—जयसेणे । गच्छ । इरावदपीमुहाणं अंतेउराणं पुत्तस्स वुत्तन्तं णिवेदेहि । (जयसेने ! गच्छ । इरावतीप्रमुखेभ्योऽन्तःपुरेभ्यः पुत्रस्य वृत्तान्तं निवेदय ।)

( प्रतीहारी प्रस्थिता । )

धारि०—एहि दाव । (एहि तावत् ।)

प्रति०—(प्रतिनिवृत्य) इअ म्हि । (इयमस्मि ।)

धारि०—(जनान्तिकम्) जं मए असोअदोहलणिओए मालविआए पइण्णादं तं से अभिजणं च णिवेदिअ मह वअणेण इरावदिं अणुणेहि—तुए अहं सच्चादो ण विब्भंसिदव्वे त्ति । (यन्मयाशोकदोहदनियोगे मालविकायै प्रतिज्ञातम् तदस्या अभिजनं च निवेद्य मम वचनेनेरावती-मनुनय—त्वया अहं सत्यान्न विभ्रंशयितव्येति ।)

प्रती०—जं देवी आणवेदी । (निष्क्रम्य पुनः प्रविश्य) भट्टिणी ! पुत्तविजअणिमित्तेण परितोसेण अंतेउराणं आहरणाणं मंजूसम्हि संवुत्ता । (यद् देवी आज्ञायति । (निष्क्रम्य पुनः प्रविश्य) भट्टिनि ! पुत्रविजयनिमित्तेन परितोषेण अन्तःपुराणामाभरणानां मञ्जूषास्मि संवृत्ता ।)

धारि०—एदं किं अच्चरिअं । साहारणो क्खु ताणं मह अ अअं अब्भ-दओ । (एतत्किमाश्चर्यम् । साधारणः खलु तासां मम चायमभ्युदयः ।)

प्रती०—(जनान्तिकम्) भट्टिणी ! इरावदी उण विण्णवेदी—सरिसं देवीए पहवन्तीए । तुह वअणं संकप्पिदं ण जुज्जदि अण्णहा कादुं त्ति । (भट्टिनि ! इरावती पुनर्विज्ञापयति—सदृशं देव्याः प्रभवन्त्याः । तव वचनं संकल्पितं न युज्यते अन्यथा कर्तुमिति ।)

धारि०—भअवदी ! तुए अणुमदा इच्छामि अज्जसुमदिणा पढम-संकप्पिदं मालविअं अज्जउत्तस्स पडिवादेदु । (भगवति ! त्वयानुमता इच्छामि आर्यसुमतिना प्रथमसंकल्पितां मालविकामार्यपुत्राय प्रतिपादयितुम् ।)

परि०—इदानीमपि त्वमेवास्याः प्रभवसि ।

धारि०—(मालविकां हस्ते गृहीत्वा ।) इदं अज्जउत्तो पिअणिवेदणाणुरूवं पारितोसिअं पडिच्छदु त्ति । (इदमार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छत्विति ।)

( राजा व्रीडां नाटयति । )

धारि०—(सस्मितम्) किं अवधीरेदिअज्जउत्तो । (किम् अवधीरयत्यार्यपुत्रः ।)

विदू०—भोदि ! एसो लोअव्ववहारो । सव्वो णववरो लज्जादुरो होदि त्ति । (भवति ! एप लोकव्यवहारः सर्वो नववरो लज्जातुरो भवतीति ।)

( राजा विदूषकमवेक्षते । )

विदू०—अह देवीए एव्व किदप्पणअविसेसं दिण्णदेवीसद्दं मालविअं अत्तभवं पडिग्गहीदुं इच्छदि । (अथ देव्यैव कृतप्रणयविशेषां दत्तदेवीशब्दां मालविकामत्रभवान् प्रतिग्रहीतुमिच्छति ।)

धारि०—एदाए राअदारिआए अहिजणेण एव्व दिण्णो देवीसद्दो किं पुणरुत्तेण । (एतस्या राजदारिकाया अभिजनेनैव दत्तो देवीशब्दः किं पुनरुक्तेन ।)

परि०—मा मैवम् ।

अप्याकरसमुत्पन्नो रत्नजातिपुरस्कृतः ।
जातरूपेण कल्याणि ! मणिः संयोगमर्हति ।।१८।।

धारि०—(स्मृत्वा) मरिसेदु भअवदी अब्भुदअकहाए उइदं ण लक्खिदं । जअसेणे । गच्छ दाव । कोसेअपत्तोण्णजुअलं उवणेहि । (मर्षयतु भगवती । अभ्युदयकथयोचितं न लक्षितम् । जयसेने । गच्छ तावत् । कौशेयपत्रोर्णयुगलमुपनय ।)

प्रती०—जं देवो आणवेदि । (निष्क्रम्य पत्रोर्णं गृहीत्वा पुनः प्रविश्य) देवी ! एदम् । (यद् देव्याज्ञापयति । (निष्क्रम्य पत्रोर्णं गृहीत्वा पुनः प्रविश्य) देवि ! एतत् ।)

धारि०—(मालविकामवगुण्ठनवतीं कृत्वा) अज्जउत्तो । दाणिं इमं पडिच्छदु । (आर्यपुत्र ! इदानीमिमां प्रतीच्छतु ।)

राजा—त्वच्छासनात् प्रवृत्ता एव वयम् । (अपवार्य) हन्त प्रतिगृहीता ।

विदू०—अहो देवीए अणुऊलदा । (अहो देव्या अनुकूलता ।)

( देवी परिजनमवलोकयति । )

प्रती०—(मालविकामुपेत्य ।) जेदु भट्टिणी । (जयतु भट्टिनी ।)

(देवी परिव्राजिकां निरीक्षते ।)

परि०—नैतच्चित्रं त्वयि ।

प्रतिपक्षेणापि पतिं सेवन्ते भर्तृवत्सलाः साध्व्यः ।
अन्यसरितामपि [1]जलं समुद्रगाः प्रापयन्त्युदधिम् ।।१९।।

(प्रविश्य)

निपु०—जेदु भट्टा । इरावदी विण्णावेदि—'जं उवआरातिक्कमेण तदा भट्टिणो अवरद्धा तं सअं एव्व भत्तुणो अणुऊलं णाम मए आअरिदं । संपदं पुण्णमणोरहेण भत्तुणा पसादमत्तेण संभावइदव्वेत्ति । (जयतु भर्ता । इरावती विज्ञापयति—यदुपचारातिक्रमेण भर्त्रे अपराद्धा तत् स्वयमेव भर्तुरनुकूलं नाम मया आचरितम् । साम्प्रतं पूर्णमनोरथेन भर्त्रा प्रसादमात्रेण संभावयितव्येति ।)

धा०— णिउणिए । अवस्सं से सेविदं अज्जउत्तो जाणिस्सदि । (निपुणिके ! आवश्यमस्याः सेवितमार्यपुत्रो ज्ञास्यति ।)

निपु०—अणुग्गहीदम्हि । (अनुगृहीतास्मि ।)

परि०—देव ! अमुना युक्तसंबन्धेन चरितार्थं माधवसेनं सभाजयितुं गच्छामः ।

---

१. ०तां शतानि क.

धारि०—भअवदीए ण जुत्तं अम्हे परिच्चइदुं।
(भगवत्या न युक्तमस्मान् परित्यक्तुम्।)

राजा—भगवति ! मदीयेष्वेव लेखेषु तत्रभवतस्त्वामुद्दिश्य सभाजनाक्षराणि पातयिष्यामः।

परि०—युवयोः स्नेहात् परवानयं जनः[1]।

धारि०—अज्जउत्त ! किं ते भूओ वि पिअं उवहरामि।
(आर्यपुत्र ! किं ते भूयोऽपि प्रियमुपहरामि।)

राजा—

त्वं मे प्रसादसुमुखी भव देवि ! नित्य-
मेतावदेव हृदये प्रतिपालनीयम्।

तथापीदमस्तु।

(भरतवाक्यम्)

आशास्यमी[2]तिविगमप्रभृति प्रजानां
संपत्स्यते न खलु गोप्तरि[3] नाग्निमित्रे ॥२०॥

(निष्क्रान्ताः सर्वे।)

॥ इति पञ्चमोऽङ्कः ॥

॥ समाप्तमिदं श्रीकालिदासकविकृतं मालविकाग्निमित्रं नाम नाटकम् ॥

---

१. र ८।८१. २. र १।६३.
३. कु २।५२, र २।१४, २४ प्रभृति.

# पात्राणि

## पुरुषाः

सूत्रधारः—नाटकस्य प्रवन्धकः।

पारिपार्श्विकः—सूत्रधारस्य सहचरः।

पुरूरवाः—सोमवंश्यो राजा,
अत्र नायकः।

माणवकः— विदूषकः।

आयुः—पुरूरवसः पुत्रः।

नारदः—देवर्षिः।

चित्ररथः—गन्धर्वेश्वरः।

कञ्चुकी —अन्तःपुराध्यक्षः।

पल्लवः, गालवश्च } भरतमुनेः शिष्यौ।

## स्त्रियः

उर्वशी— अप्सरोविशेषः।
अत्र नायिका।

चित्रलेखा— अप्सरोविशेषः।
उर्वश्याः सखी।

सहजन्या, रम्भा, मेनका } अप्सरोऽन्तराणि

देवी—राज्ञी। काशिराजस्य कन्या।

निपुणिका—राज्ञ्याः परिचारिका।

तापसी—तपस्विनी।

परिजनः—राज्ञ्याः परिचारिकाः।

यवनी—राज्ञः परिचारिका।

# विक्रमोर्वशीयम्

## [[1]पूर्वरङ्गः : नान्दी]

वेदान्तेषु[2] यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः[3] शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते[4]
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ।।१।।

(नान्द्यन्ते)

।। [5]अथ प्रस्तावना ।।

सूत्रधार -- (नेपथ्याभिमुखमवलोक्य ।) अलमतिविस्तरेण मारिष !

इतस्तावत् । (प्रविश्य)

पारिपार्श्विकः—भाव ! अयमस्मि ।

सूत्र०—[6]मारिष ! परिषदेषा पूर्वेषां कवीनां दृष्टरसप्रबन्धा । अहमस्यां कालिदासग्रथितवस्तुना नवेन विक्रमोर्वशीयनामधेयेन [7]त्रोटकेनोपस्थास्ये । तदुच्यतां पात्रवर्गः स्वेषु स्वेषु पाठेष्ववहितैर्भवितव्यमिति ।

---

१. इयमस्मत्कृता योजना । एतदर्थं द्रष्टव्याऽत्रैव मालविकाग्निमित्रारम्भेऽस्माकं पादटिप्पणी ।

२. वेदान्तेषूपनिषत्सु । 'तस्मिन्नपो मातरिश्वा दधाती'-तीशोपनिषदि; 'तस्मिन्नु खल्वाकाशमोतं च प्रोतं चे'-त्यन्यत्र ।

३. कु० ६।७५, र० ३।४९. | एवं हि कुमारसंभवादिकर्त्रभिन्नकर्तृकत्वमेव
४. कु० ६।७७, ३।५०. | नाटकेष्वप्यमीषु स्थिरम् ।

५. प्रस्तावनापदमत्रमस्माभिर्योजितम् ।

६. मारिष, बहुशस्तु परिषदा पूर्वेषां कवीनां दृष्टः प्रयोगबन्धः । सोऽहमद्य विक्रमोर्वशीयं नामापूर्वं नाटकं प्रयोक्ष्ये । सा.

७. त्रोटकं नाम दिव्यादिव्यनायकाश्रितार्थं नाट्यम् ।

पारि०—यदाज्ञापयति भावः। (निष्क्रान्तः)

सूत्र०—यावदिदानीमार्यमिश्रान् विज्ञापयामि। (प्रणिपत्य)

प्रणयिषु वा दाक्षिण्यादथवा सद्-वस्तु-पुरुष-बहुमानात्।
शृणुत जना अवधानात् क्रियामिमां कालिदासस्य ॥२॥

(नेपथ्ये)

अज्जा परित्ताअध परित्ताअध, जो सुरपक्खवादो जस्स वा अम्बरअले गई अत्थि। (आर्याः परित्रायध्वम् परित्रायध्वम्, यः सुरपक्षपाती यस्य वाम्बरतले गतिरस्ति।)

सूत्र०—(कर्णं दत्वा) अये किं नु खलु मद्विज्ञापनानन्तरमार्तानां कुररीणामिवाकाशे शब्दः श्रूयते—

मत्तानां कुसुमरसेन षट्पदानां
शब्दोऽयं, परभृतनाद एष धीरः।
आकाशे सुरगणसेविते समन्तात्
किं [1]नार्यः कल-मधुराक्षरं प्रगीताः ॥३॥

(विचिन्त्य) भवतु। ज्ञातम्।

ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री
कैलासनाथमुपसृत्य निवर्तमाना।
बन्दीकृता विबुधशत्रुभिरर्धमार्गे
क्रन्दत्यतः करुणमप्सरसां गणोऽयम् ॥४॥

(निष्क्रान्तः)

॥ इति प्रस्तावना ॥

---

१. किन्नर्यः पा०

## अथ प्रथमोऽङ्कः

( ततः प्रविशन्त्यप्सरसः । )

अप्स०—अज्जा परित्ताअध परित्ताअध । जो सुरपक्खवादी जस्स वा अम्बरअले गई अत्थि । (आर्याः परित्रायध्वं परित्रायध्वम् । यः सुरपक्षपाती यस्य वाम्बरतले गतिरस्ति ।)

( ततः प्रविशतोऽपटीक्षेपेण रथाधिरूढो राजा सूतश्च । )

राजा—अलमाक्रन्दितेन । सूर्योपस्थाननिवृत्तं पुरूरवसं, मामेत्य कथ्यतां, कुतो भवत्यः परित्रातव्याः ।

रम्भा—असुरावलेवादो । (असुरावलेपात् ।)

राजा—किं पुनरसुरावलेपेन भवतीनामपराद्धम् ।

रम्भा—सुणादु महाराओ । जा तवोविसेससंकिदस्स सुउमारं पहरणं महिंदस्स, पच्चादेसो रूवगव्विदाए सिरिगोरिए, अलंकारो सग्गस्स, सा णो पिअसही उव्वसी कुवेरभवणादो णिवत्तमाणा केणावि दाणवेण चित्तलेहादुदीआ अद्धपथं ज्जेव वंदिग्गाहं गिहीदा । (शृणोतु महाराजः । या तपोविशेषशङ्कितस्य सुकुमारं प्रहरणं महेन्द्रस्य, प्रत्यादेशो रूपगर्वितायाः श्रीगौर्याः, अलंकारः सर्गस्य, सा नः प्रियसखी उर्वशी, कुवेरभवनान्निवर्तमाना, केनापि दानवेन, चित्रलेखा द्वितीया, अर्धपथ एव, बन्दिग्राहं गृहीता ।)

राजा—अपि ज्ञायते कतमेन दिग्विभागेन गतः स जाल्मः ।

अप्स०—ईसाणीए दिसाए । (ऐशान्या दिशा ।)

राजा—तेन हि मुच्यतां विषादः । यतिष्ये वः सखीप्रत्यानयनाय ।

अप्स०—सरिसं एवं सोमवंससंभवस्स । (सदृशमेतत् सोमवंशसंभवस्य ।)

राजा —क्व पुनर्मां भवत्यः प्रतिपालयिष्यन्ति ।

अप्स०—एदस्सिं हेमकूडसिहरे । (एतस्मिन् हेमकूटशिखरे ।)

राजा—सूत ! ऐशानीं दिशं प्रति चोदयाश्वानाशुगमनाय ।

सूतः—यदाज्ञापयत्यायुष्मान् । ( यथोक्तं करोति ।)

राजा—(रथवेगं रूपयित्वा।) साधु साधु। अनेन रथवेगेन पूर्वप्रस्थितं वैनतेयमप्यासादयेयम्। किं पुनस्तम् अपकारिणं मघोनः। मम

अग्रे यान्ति रथस्य रेणुपदवीं चूर्णीभवन्तो घना-
श्चक्रभ्रान्तिररान्तरेषु वितनोत्यन्यामिवारावलीम्।
चित्रारम्भविनिश्चलं हरिशिरस्यायामवच्चामरं
यन्मध्ये समवस्थितो ध्वजपटः प्रान्ते च वेगानिलात्॥५॥

(निष्क्रान्तो रथेन राजा सूतश्च)

सहज०—हला! गदो राएसो। ता अम्हे वि जघासंदिट्ठं पदेसं गच्छम्ह। (हला! गतो राजर्षिः। तद् वयमपि यथासंदिष्टं प्रवेशं गच्छेम।)

मेनका—सहि! एव्वं करेम्ह (सखि! एवं कुर्मः।)

(हेमकूटशिखरे नाट्येनाधिरोहन्ति)

रम्भा—अवि णाम सो राएसी उद्धरदि णो हिअअसल्लं। (अपि नाम स राजर्षिरुद्धरति नो हृदयशल्यम्।)

मेनका—सहि! मा दे संसओ भोदु।. (सखि? मा ते संशयो भवतु।)

रम्भा—णं दुज्जआ दाणवा। (ननु दुर्जया दानवाः।)

मेन०—उवट्ठिदसंपराओ महिंदो वि मज्झमलोआदो सवहुमाणं आणाविअ तं एव्व विवुधविजआअ सेणामुहे णिओजेदि। (उपस्थितसंपरायो महेन्द्रोऽपि मध्यमलोकात् सबहुमानमानाय्य तमेव विबुधविजयाय सेनामुखे नियुङ्क्ते।)

रम्भा—सव्वहा विअई भोदु। (सर्वथा विजयी भवतु।)

मेन०—(क्षणमात्रं स्थित्वा) हला समस्ससध समस्ससध। एस उल्लसिदहरिणकेदणो तस्स राएसिणो सोमदत्तो रहो दीसदि। ण एसो अकिदत्थो पडिणिउत्तिस्सदि त्ति तक्केमि। (सख्यः समाश्वसित समाश्वसित। एष उल्लसितहरिणकेतनः तस्य राजर्षेः सोमदत्तो रथो दृश्यते। नैषः अकृतार्थः प्रतिनिवर्तिष्यत इति तर्कयामि।)

(निमित्तं सूचयित्वावलोकन्त्यः, स्थिताः)

(ततः प्रविशति रथारूढो राजा सूतश्च। भयनिमीलिताक्षी चित्रलेखादक्षिणहस्तावलम्बिता उर्वशी च।)

चित्र०—सहि समस्सस समस्सस । (सखि समाश्वसिहि समाश्वसिहि ।)

राजा—सुन्दरि ! समाश्वसिहि

गतं भयं भीरु सुरारिसंभवं
त्रिलोकरक्षी महिमा हि वज्रिणः ।
तदेतदुन्मीलय चक्षुरायतं
निशावसाने नलिनीव पङ्कजम् ॥६॥

चित्र०—अम्महे कहं उस्ससिदमेत्तसंभाविदजीविदा अज्ज वि एसा सण्णं ण पडिवज्जदि । (अहो कथमुच्छ्वसितमात्रसंभावितजीविता, अद्याप्येषा संज्ञां न प्रतिपद्यते ।)

राजा—बलवदत्रभवती परित्रस्ता । तथाहि—

मन्दारकुसुमदाम्ना गुरुरस्याः सूच्यते हृदयकम्पः ।
मुहुरुच्छ्वसता मध्ये परिणाहवतोः पयोधरयोः ॥७॥

चित्र०—(सकरुणम्) हला उव्वसि ! पज्जवत्थावेहि अत्ताणम् । अणच्छरा विअ पडिभासि । (सखि उर्वशि ! पर्यवस्थापयात्मानम् । [१]अनप्सरेव प्रतिभासि ।)

राजा—मुञ्चति न तावदस्या भयकम्पः कुसुमकोमलं हृदयम् ।
सिचयान्तेन कथञ्चित् स्तनमध्योच्छ्वासिना कथितः ॥८॥

(उर्वशी प्रत्यागच्छति)

राजा—(सहर्षम्) चित्रलेखे दिष्टया वर्धसे । प्रकृतिमापन्ना ते प्रियसखी ।

पश्य—आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
र्नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गा रोधःपतनकलुषा गच्छतीव प्रसादम् ॥९॥

चित्र०—सहि उव्वसि । वीसद्धा भव । आवण्णाणुकंपिणा महाराएण पडिहदा क्खु दे तिदसपरिपंथिणो हदासा दाणवा । (सखि उर्वशि ! विस्रब्धा भव । आपन्नानुकम्पिना महाराजेन प्रतिहताः खलु ते त्रिदशपरिपन्थिनो हताशा दानवाः ।)

---

१. अप्सरःशब्द एकवचनान्तोऽप्यस्तीति हेमाद्री रघुवंशटीकायाम् ।

उर्व०—(चक्षुषी उन्मील्य ।) किं पह्नावदंसिणा महिंदेण अब्भुवपह्लम्हि ।
(किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मि ।)

चित्र०—ण महिंदेण । महिंदसरिसाणुभावेण राएसिणा पुरूरवसेण ।
(न महेन्द्रेण । महेन्द्रसदृशानुभावेन राजर्षिणा पुरूरवसा ।)

उर्व०—(राजानमवलोक्य । आत्मगतम् ।) उवकिदं क्खु दाणवेंदसंरंभेण ।
(उपकृतं खलु दानवेन्द्रसंरम्भेण ।)

राजा—(उर्वशीं विलोक्य । आत्मगतम् ।) स्थाने खलु नारायणमृषिं विलोभयन्त्यः, तदूरुसंभवामिमां विलोक्य व्रीडिताः सर्वा अप्सरस इति । अथवा नेयं तपस्विनः सृष्टिरित्यवैमि—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः[1] ॥१०॥

उर्व०—हला—चित्तलेहे सहीअणो कहिं क्खु भवे । (सखि चित्रलेखे ! सखीजनः कुत्र खलु भवेत् ।)

चित्र०—सहि अभअप्पदाई महाराओ जाणादि ।
(सखि अभयप्रदायी महाराजो जानाति ।)

राजा—(उर्वशीं विलोक्य) महति विषादे वर्तते सखीजनः । पश्यतु भवती—

यदृच्छया त्वं सकृदप्यवन्ध्ययोः
पथि स्थिता सुन्दरि यस्य नेत्रयोः ।
त्वया विना सोऽपि समुत्सुको भवेत्
सखीजनस्ते किमुदार्द्रसौहृदः[2] ॥११॥

उर्व०—(आत्मगतम् ।) अमिअं क्खु दे वअणम् । अहवा चंदादो अमिअं त्ति किं अच्चरिअम् । (प्रकाशम्) अदो एव्व मे पेक्खिदुं तुवरदि हिअअम् । (अमृतं खलु ते वचनम् । अथवा चन्द्रादमृतमिति किमाश्चर्यम् । (प्रकाशम्) अत एव मे प्रेक्षितुं त्वरते हृदयम् ।)

---

१. मुनिर्नारायण ऋषिः, न तु ब्रह्मा, यथा प्रतिपन्नं कैश्चित् ।
२. ०त्त०. पा०

राजा—(हस्तेन दर्शयन्)

एताः सुतनु मुखं ते सख्यः पश्यन्ति हेमकूटगताः ।
उत्सुकनयना लोकाश्चन्द्रमिवोपप्लवान्मुक्तम् ॥१२॥

( उर्वशी साभिलाषं पश्यति । )

चित्र०—हला किं पेक्खसि । (सखि किं प्रेक्षसे ।)

उर्व०—णं समदुक्खगदो पिवीअदि लोअणेहिं ।
(ननु समदुःखगतः पीयते लोचनाभ्याम्)

चित्र०—(सस्मितम्) अइ को । (अयि कः ।)

उर्व०—णं पणइअणो । (ननु प्रणयिजनः ।)

रम्भा—(सहर्षमवलोक्य) हला! चित्तलेहादुदीअं पिअसही उव्वसीं गेण्हिअ विसाहासहिदो विअ भअवं सोमो समुवट्ठिदो राएसी । (सखी! चित्रलेखाद्वितीयां प्रियसखीमुर्वशीं गृहीत्वा विशाखासहित इव भगवान् सोमः, समुपस्थितो राजर्षिः ।)

मेनका—(निर्वर्ण्य) हला दुवे वि णो एत्थ प्पिआ उवणदा— इअं पच्चाणीदा पिअसही, अअं च अपरिक्खदसरीरो राएसी । (सखि! द्वे अपि नोऽत्र प्रिये उपनते— इयं प्रत्यानीता प्रियसखी, अयं चापरिक्षतशरीरो राजर्षिः ।)

सहज०—सहि जुत्तं भणासि दुज्जओ दाणओ त्ति ।
(सखि! युक्तं भणसि दुर्जयो दानव इति)

राजा—सूत इदं तच्छैलशिखरम् । अवतारय रथम् ।

सूतः—यदाज्ञापयत्यायुष्मान् । ( तथा करोति )

( उर्वशी रथावतारक्षोभं नाटयन्ती सत्रासं राजानमवलम्बते । )

राजा—(स्वगतम्) हन्त सफलो मे विषमावतारः[1] ।

यदिदं रथसंक्षोभादङ्गेनाङ्गं मगायतेक्षणया ।
स्पृष्टं सरोमकण्टकमङ्कुरितं मनसिजेनेव ॥१३॥

उर्व०—हला किं वि परदो ओसर । (सखि किमपि परतोऽपसर ।)

---

१. विषयावतारः पा०

चित्र०—णाहं सक्केमि । (नाहं शक्नोमि ।)

रम्भा—एत्थ पिअआरिणं संभावेम्ह राएसिं।
(अत्र प्रियकारिणं संभावयामो राजर्षिम् ।) ( सर्वा उपसर्पन्ति । )

राजा—सूत उपश्लेषय रथम् ।

यावत् पुनरियं सुभ्रूरुत्सुकाभिः समुत्सुका ।
सखीभिर्याति संपर्कं लताभिः श्रीरिवार्तवी ।।१४।।

( सूतो रथं स्थापयति )

अप्स०—दिट्ठिआ महाराओ विजएण वड्ढदि ।
(दिष्ट्या महाराजो विजयेन वर्धते ।)

राजा—भवत्यश्च सखीसमागमेन ।

उर्व०—(चित्रलेखादत्तहस्तावलम्बा रथादवतीर्य) हला अहिअं परिस्सजह । ण क्खु मे आसी आसासो जहा पुणो वि सहीअणं पेक्खिस्सं ति । (सख्यः अधिकं परिष्वजथ । न खलु मे आसीदाश्वासो यथा पुनरपि सखीजनं प्रेक्षिष्य इति ।) ( सख्यः परिष्वजन्ते )

मेनका—(साशंसम् ) सव्वहा कप्पसदं महाराओ पुहविं पालअंतो होदु ।
(सर्वथा कल्पशतं महाराजः पृथिवीं पालयन् भवन्तु ।)

सूतः—आयुष्मन् ! पूर्वस्यां दिशि महता रथवेगेनोपदर्शितः शब्दः

अयं च गगनात् कोऽपि तप्तचामीकराङ्गदः ।
अधिरोहति शैलाग्रं तडित्वानिव तोयदः ।।१५।।

अप्स०—(पश्यन्त्यः) अम्मो चित्तरहो । (अहो चित्ररथः ।)

(ततः प्रविशति चित्ररथः ।)

चित्र०—(राजानं दृष्ट्वा सबहुमानम् ।) दिष्ट्या महेन्द्रोपकारपर्याप्तेन विक्रममहिम्ना वर्धते भवान् ।

राजा—अये गन्धर्वराजः । (रथादवतीर्य ।) स्वागतं प्रियसुहृदे ।

(परस्परं हस्तौ स्पृशतः)

चित्र०—वयस्य केशिना हृतामुर्वशीं नारदादुपश्रुत्य प्रत्याहरणार्थमस्याः शतक्रतुना गन्धर्वसेना समादिष्टा । ततो वयम् अन्तरा चारणेभ्य-

स्त्वदीयं जयोदाहरणं[१] श्रुत्वा त्वामिहस्थमुपागताः। स भवानिमां पुरस्कृत्य सहास्माभिर्मघवन्तं द्रष्टुमर्हति। महत् खलु तत्रभवतो मघोनः प्रियमनुष्ठितं भवता। पश्य—

पुरा नारायणेनेयमतिसृष्टा मरुत्वते।
दैत्यहस्तादपाच्छिद्य सुहृदा संप्रति त्वया ॥१६॥

राजा—सखे मैवम्—

ननु वज्रिण एव वीर्यमेतद्
विजयन्ते द्विषतो यदस्य पक्ष्याः।
वसुधाधर—कन्दरा—विसर्पी
प्रतिशब्दोऽपि[२] हरेर्हिनस्ति नागान् ॥१७॥

चित्र०—युक्तमेतत्। अनुत्सेकः खलु विक्रमालङ्कारः।

राजा—सखे नायमवसरो मम शतक्रतुं द्रष्टुम्। अतः त्वमेवात्रभवतीं प्रभोरन्तिकं प्रापय।

चित्र०—यथा भवान् मन्यते। इत इतो भवत्यः। (सर्वा प्रस्थिताः।)

उर्व०—(जनान्तिकम्) हला चित्तलेहे, उवआरिणं राएसिं ण सक्कणोमि आमंतेदुम्। ता तुमं एव्व मे मुहं होहि। (सखि चित्रलेखे। उपकारिणं राजर्षि न शक्नोम्यामन्त्रयितुम् तत् त्वमेव मे मुखं भव।)

चित्र०—(राजानमुपेत्य।) महाराअ उव्वसी विण्णवेदि–महाराएण अब्भणुण्णादा इच्छामि पिअसहिं विअ महाराअस्स कित्तिं सुरलोअं णेदुं। (महाराज! उर्वशी विज्ञापयति—महाराजेनाभ्यनुज्ञाता इच्छामि प्रियसखीमिव महाराजस्य कीर्ति सुरलोकं नेतुम्।)

राजा—गम्यतां पुनर्दर्शनाय।

(सर्वाः सगन्धर्वा आकाशोत्पतनं रूपयन्ति।)

उर्वशी—(उत्पतनभङ्गं रूपयित्वा) अम्मो लदाविडवे एसा एआवली वेजअंतिआ[३] मे लग्गा। (सव्याजमुपसृत्य राजानं पश्यन्ती।) सहि चित्तलेहे मोआवेहि दाव णं। (अहो लताविटपे एषैकावली वैजयन्तिका मे लग्ना। (सव्याजमुपसृत्य राजानं पश्यन्ती) सखि चित्रलेखे मोचय तावदेनाम्।)

---

१. र. ४.७८, वि. २।१३ २. हि पा० ३. वेआअन्तिआ पा०

चित्र०—(विलोक्य विहस्य च।) आं दिढं क्खु लग्गा सा। असक्का मोश्राविदुं। (आम्, दृढं खलु लग्ना सा। अशक्यं मोचयितुम्।)

उर्वशी—अलं पडिहासेन। मोआवेहि दाव णं।
(अलं परिहासेन। मोचय तावदेनाम्।)

चित्र०—आं दुम्मोआ विअ मे पडिहादि। तहा वि मोआइस्सं दाव।
(आम् दुर्मोच्येव मे प्रतिभाति। तथापि मोचयिष्ये तावत्।)

उर्वशी—(स्मितं कृत्वा) पिअसहि सुमरेहि क्खु एदं अत्तणो वअणं।
(प्रियसखि! स्मर खल्वेतदात्मनो वचनम्।)

राजा—(स्वगतम्)

प्रियमाचरितं लते त्वया मे गमनेऽस्याः क्षणविघ्नमाचरन्त्या।
यदियं पुनरप्यपाङ्गनेत्रा परिवृत्तार्धमुखी मया हि दृष्टा ॥१८॥

(चित्रलेखा मोचयति। उर्वशी राजानमालोकयन्ती सखीजनमुत्पतन्तं पश्यति।)

सूतः—आयुष्मन्!

अदः सुरेन्द्रस्य कृतापराधान् प्रक्षिप्य दैत्याँल्लवणाम्बुराशौ।
वायव्यमस्त्रं शरधिं पुनस्ते महोरगः श्वभ्रमिव प्रविष्टम् ॥१९॥

राजा—तेन ह्युपश्लेषय रथम्। यावदारोहामि।

(सूतस्तथा करोति। राजा नाट्येन रथमारोहति।)

उर्वशी—(सस्पृहं राजानमवलोकयन्ती।) अवि णाम पुणो वि उअआरिणं एदं पेक्खिस्सं (अपि नाम पुनरप्युपकारिणमेनं प्रेक्षिष्ये।)

( सगन्धर्वा सह सखीभिर्निष्क्रान्ता )

राजा—(उर्वशीवर्त्मोन्मुखः ) अहो दुर्लभाभिलाषी मदनः—

एषा मनो मे प्रसभं शरीरात् पितुः पदं मध्यममुत्पतन्ती।
पुराङ्गना कर्षति खण्डिताग्रात् सूत्रं मृणालादिव राजहंसी ॥२०॥

( निष्क्रान्ताः सर्वे। )

॥ इति प्रथमोऽङ्कः ॥

## ।। अथ मिश्रविष्कम्भः ।।

(ततः प्रविशति विदूषकः ।)

विदू॰—ही ही भो णिमंतणिओ परमण्णेण विअ राअरहस्सेण फुट्टमाणो ण सक्कणोमि जणाइण्णे अत्तणो जीहं धारिदुं । ता जाव सो राआ धम्मासणगदो इदो आअच्छइ दाव इमस्सिं विरलजणसंवादे देवच्छंदअप्पासादे आरुहिअ चिट्ठिस्सं । (ही ही भोः निमन्त्रणिकः परमान्नेनेव राजरहस्येन स्फुटन् न शक्नोमि जनाकीर्णे आत्मनो जिह्वां धारयितुम् । तद् यावत् स राजा धर्मासनगत इत आयाति तावदेतस्मिन् विरलजनसंपाते देवच्छन्दकप्रासादे, आरुह्य स्थास्यामि) (परिक्रम्योपविश्य पाणिभ्यां मुखं पिधाय स्थितः ।)

(ततः प्रविशति चेटी)

चेटी—आणत्तम्हि देवीए कासिराअदुहिदाए जधा—हंजे णिउणिए जदो पहुदि भअअदो सुज्जस्स उअत्थाणं कदुअ पडिणिउत्तो महराओ तदो पहुदि सुण्णहिअओ विअ लक्खीअदि । ता तुमं वि दाव अज्जमाणवआदो जाणाहि से उक्कण्ठकालणं त्ति । ता कहं सो वम्हवन्धु अदिसंधादव्वो । अहवा तिणग्गलग्गं विअ अवस्साअसलिलं ण तस्सिं राअरहस्सं चिरं चिट्ठदि त्ति तक्केमि । ता जा णं अण्णेसामि । (परिक्रम्यावलोक्य च ।) अम्मो आलेक्खवाणरो विअ किंपि मंतअंतो णिहुदो अज्जमाणअओ चिट्ठदि । ता जाव णं उवसप्पामि । (उपसृत्य ।) अज्ज वंदामि । (आज्ञप्तास्मि देव्या काशिराजदुहित्रा यथा—हञ्जे निपुणिके यतः प्रभृति भगवतः सूर्यस्योपस्थानं कृत्वा प्रतिनिवृत्तो महाराजः, स्ततः प्रभृति शून्य-हृदय इव लक्ष्यते । तत् त्वमपि तावदार्यमाणवकाज्जानीहि अस्योत्कण्ठा-कारणमिति । तत्, कथं स ब्रह्मबन्धुरतिसंधातव्यः? अथवा तृणाग्रलग्नमिवा-वश्यायसलिलं न तस्मिन् राजरहस्यं चिरं तिष्ठतीति तर्कयामि । तद्

---

१. इयमस्मत्कृता योजना । वैतालिकोक्तेः संस्कृतमयत्वान्नायं प्रवेशकः ।

तावदेनमन्वेषयामि। (परिक्रम्यावलोक्य च) अहो आलेख्यवानर इव किमपि मन्त्रयन् निभृत आर्यमाणवकस्तिष्ठति। तद्, यावदेनमुपसर्पामि। (उपसृत्य) आर्य! वन्दे।)

विदू०—सत्थि भोदीए। (आत्मगतम्) एदं दुट्ठचेडिअं पेक्खिअ तं राअरहस्सं हिअअं भिंदिअ णिक्कमदि विअ (किंचिन्मुखं संवृत्य, प्रकाशम्) भोदि णिउणिए संगीदवावारं उज्झिअ कहिं पत्थिदासि। (स्वस्ति भवत्यै। एतां दुष्टचेटिकां प्रेक्ष्य तद् राजरहस्यं हृदयं भित्त्वा निष्क्रामतीव। (किञ्चिन्मुखं संवृत्य प्रकाशम्) भवति निपुणिके संगीतव्यापारमुज्झित्वा कुत्र प्रस्थितासि।)

चेटी— देवीए वअणेण अज्जं एव्व पेक्खिदुम्।
(देव्या वचनेनार्यमेव प्रेक्षितुम्।)

विदू०—किं तत्तभोदी आणवेदि। (किं तत्रभवती आज्ञापयति।)

चेटी— देवी भणादि जधा—अज्जस्स मम उअरि अदक्खिण्णं। ण मं अणुइदवेदणं दुक्खिदं अवलोअदि त्ति। (देवी भणति यथा—आर्यस्य ममोपरि अदाक्षिण्यम्। न मामनुचितवेदनां दुःखितामवलोकयतीति।)

विदू०—णिउणिए किं वा पिअवअस्सेण तत्तभोदीए पडिऊलं किंवि समाचरिदं। (निपुणिके! किंवा प्रियवयस्येन तत्रभवत्याः प्रतिकूलं किमपि समाचरितम्।)

चेटि—जं णिमित्तं उण भट्टा उक्कण्ठिदो ताए इत्थिआए णामेण भट्टिणा देवी आलविदा। (यन्निमित्तं पुनर्भर्ता उत्कण्ठितः, तस्याः स्त्रिया नाम्ना आलपिता।)

विदू०—(स्वगतम्) कहं सअं एव्व तत्तभोदा वअस्सेण रहस्सभेदो किदो। किं दाणिं अहं [1]जीहाजंतणेण दुक्खं अणुहवम्मि। (प्रकाशम्।) किं उव्वसीणामधेएण आमंतिदा। (कथं स्वयमेव तत्रभवता वयस्येन रहस्यभेदः कृतः। किमिदानीमहं जिह्वायन्त्रणेन दुःखमनुभवामि (प्रकाशम्)। किं तत्र भवता उर्वशीनामधेयेनामन्त्रिता।)

चेटी—अज्ज का सा उव्वसी? (आर्य का सा उर्वशी?)

---

१. बम्हणो जीहं रक्खिदुं समत्थोम्हि. शा. नि-४.

विदू०—अत्थि उव्वसि त्ति अच्छरा। ताए दंसणेण उम्मादिदो ण केवलं तं आआसेदि, मं वि वम्हणं असिदव्वविमुहं दिढं पीडेदि। (अस्ति उर्वशीत्यप्सराः। तस्या दर्शनेनोन्मादितो न केवलं तामायासयति मामपि ब्राह्मणमशितव्यविमुखं दृढं पीडयति।)

चेटी—(स्वगतम्।) उव्वादिदो मए भेओ भट्टिणो रहस्सदुग्गस्स। ता गदुअ देवीए एवं णिवेदेमि। (उत्पादितो मया भेदो भर्तुः रहस्य-दुर्गस्य। तद् गत्वा देव्यै एतन्निवेदयामि।) (प्रस्थिता।)

विदू०—णिउणिए! विण्णावेहि मम वअणेण कासिराअदुहिदरं—परिस्संतम्हि इमाए मिअतिण्हिआए वअस्सं णिअत्तावेदुं। जइ भोदीए मुहकमलं पेक्खिस्सदि तदो णिअत्तिस्सदि त्ति। (निपुणिके! विज्ञापय मम वचनेन काशीराजदुहितरम्—परिश्रान्तोऽस्म्येतस्या मृगतृष्णिकाया वयस्यं निवर्तयितुम्। यदि भवत्या मुखकमलं प्रेक्षिष्यते ततो निवर्तिष्यत इति।)

चेटी—जं अज्जो आणवेदि। (यदार्य आज्ञापयति) (निष्क्रान्ता[1]।)

(नेपथ्ये वैतालिकः।)

जयतु जयतु देवः।

आ लोकान्तात् प्रतिहततमोवृत्तिरासां प्रजानां
तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः।
तिष्ठत्येकः क्षणमधिपतिर्ज्योतिषां व्योममध्ये
षष्ठे काले त्वमपि लभसे देव विश्रान्तिमह्नः॥१॥

विदू०—(कर्णं दत्वा) एसो उण पिअवअस्सो धम्मासणसमुत्थिदो इदो जेव्व आअच्छदि। ता जाव पासपडिवत्ती होमि। (एष पुनः प्रियवयस्यो धर्मासनसमुत्थित इत एवागच्छति। तद् यावत् पार्श्वपरिवर्ती भवामि।) (निष्क्रान्तः।)

॥ [2]इति मिश्रविष्कम्भः॥

---

१. अत्रैव प्रवेशकसमाप्तिरिति सर्वे। २. इयमस्मद्योजना.

## अथ द्वितीयोऽङ्कः

( ततः प्रविशत्युत्कण्ठितो राजा विदूषकश्च )

राजा— आ दर्शनात् प्रविष्टा सा मे सुरलोकसुन्दरी हृदयम् ।
वाणेन मकरकेतोः कृतमार्गमवन्ध्यपातेन ॥२॥

विदू०—सपीडा क्खु जादा तत्तभोदो कासिराअदुहिदा ।
(सपीडा खलु जाता तत्रभवती काशिराजदुहिता ।)

राजा—(निरीक्ष्य) अपि रक्ष्यते भवता रहस्यनिक्षेपः ?

विदू०—(आत्मगतम्) हा धिग्, वंचिदोम्हि दुट्ठ दासीए णिउणिआए । अण्णधा कथं एव्वं पुच्छदि वअस्सो । (हा धिक् ? वञ्चितोऽस्मि दुष्टदास्या निपुणिकया । अन्यथा कथमेवं पृच्छति वयस्यः ।)

राजा—किं भवाँस्तूष्णीमास्ते ।

विदू०—भो एव्वं मए जीहा संजंतिदा जेण भवदो वि णत्थि पदिवअणं ।
(भोः एवं मया जिह्वा संयन्त्रिता येन भवतोऽपि नास्ति प्रतिवचनम् ।)

राजा—युक्तम् । अथ केनेदानीमात्मानं विनोदयामि ।

विदू०—भो महाणसं गच्छम्ह । (भो महानसं गच्छाव ।)

राजा—किं तत्र ।

विदू०—तहिं पंजविहस्स अब्भवहारस्स उवणदसंभारस्स जोअणां पेक्खमाणेहिं सक्कं उक्कंठां विणोदेदुं । (तत्र पञ्चविधस्य अभ्यवहारस्य उपनतसंभारस्य योजनां प्रेक्षमाणाभ्यां शक्यमुत्कण्ठां विनोदयितुम् ।)

राजा—(सस्मितम्) तत्र ईप्सितसंनिधानाद् भवान् रंस्यते । मया खलु दुर्लभप्रार्थनः कथमात्मा विनोदयितव्यः ।

विदू०—णं, भवं वि तत्तभोदीए उव्वसीए दंसणपहं गदो ?
(ननु, भवानपि तत्रभवत्या उर्वश्या दर्शनपथं गतः ?)

राजा—ततः किम् ।

विदू०—ण क्खु दे दुल्लह त्ति तक्केमि । (न खलु ते दुर्लभेति तर्कयामि ।)

राजा—पक्षपातोऽपि तस्यां सद्रूपस्यालौकिक एव ।

विदू०—एव्वं मंतअंतेण मे वड्ढिदं कोदूहलं । किं तत्तभोदी उव्वसी अदुदुदीआ रूवेण अहं विअ विरूवदाए । (एवं मन्त्रयता मम वर्धितं कौतूहलम् । किं तत्रभवती उर्वशी अद्वितीया रूपेण अहमिव विरूपतया ।)

राजा—माणवक ! प्रत्यवयवमशक्यवर्णनां तामवेहि । तेन हि समासतः श्रूयताम् ।

विदू०—भो ! अवहिदोम्मि । (भोः ! अवहितोऽस्मि ।)

राजा— आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥३॥

विदू०—अदो दाव तुए दिव्वरसाहिलासिणा चादअव्वदं गहीदं । ता दाव तुमं कहिं पत्थिदो । (अतस्तावत् त्वया दिव्यरसाभिलाषिणा चातकव्रतं गृहीतम् । तत् तावत् त्वं कुत्र प्रस्थितः ।)

राजा—विविक्तादृते नान्यदुत्सुकस्य शरणम् । तद्, भवान् प्रमदवन-मार्गमादेशयतु ।

विदू०—(आत्मगतम्) का गदी । (प्रकाशम्) इदो इदो भवं । (का गतिः । (प्रकाशम्) इत इतो भवान्) ( परिक्रामतः । )

विदू०—एसो पमदवणपरिसरो । आणमिअ पच्चुवगदो भवं आअन्तुओ दक्खिणमारुदेण । (एष प्रमदवनपरिसरः । आनम्य प्रत्युपगतो भवानागन्तुको दक्षिणमारुतेन ।)

राजा—(विलोक्य) उपपन्नं विशेषणमस्य वायोः । अयं हि—

निषिञ्चन् माधवीं लक्ष्मीं लतां कौन्दीं च लासयन् ।
स्नेहदाक्षिण्ययोर्योगात् कामीव प्रतिभाति मे ॥४॥

विदू०—सरिसो एव्व से अहिणिवेसो । ( परिक्रामन् । ) एदं पमद-वणम् । पविसदु भवम् । (सदृश एवास्याभिनिवेशः । (परिक्रामन्) एतत् प्रमदवनम् । प्रविशतु भवान् ।)

राजा—वयस्य प्रविश अग्रतः । (उभौ प्रवेशं नाटयतः)

राजा—(आसं रूपयित्वा ।) वयस्य ! साधु मनसा समर्थित आपत्प्रतीकारः किल ममोद्यानप्रवेशः । तच्चान्यथैवोपपन्नम् ।

विविक्षोर्यंदिदं नूनमुद्यानं तापशान्तये ।
स्रोतसेवोह्यमानस्य प्रतीपतरणं महत् ॥५॥

विदू०—कहं विअ ? (कथमिव ?)

राजा— इदमसुलभवस्तुप्रार्थनादुर्निवारं
प्रथममपि मनो मे पञ्चबाणः क्षिणोति ।
किमुत मलयवातोन्मूलिताऽऽपाण्डुपत्रै-
रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु ॥६॥

विदू०—अलं परिदेविदेण । अइरेण दे इट्ठसंपादणेण अणंगो एव्व दे सहाओ भविस्सदि । (अलं परिदेवितेन । अचिरेण तवेष्टसम्पादनेनानङ्ग एव ते सहायो भविष्यति ।)

राजा—प्रतिगृहीतं ब्राह्मणवचनम् । (परिक्रामतः)

विदू०—पेक्खदु भवं वसंतावदार-सूअअं अहिरामत्तणं पमदवणस्स । (प्रेक्षतां भवान् वसन्तावतारसूचकमभिरामत्वं प्रमदवनस्य ।)

राजा—ननु प्रतिपादमेव अवलोकयामि । अत्र हि—

अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयो
रक्ताशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।
ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे ! मध्ये मधुश्रीः स्थिता ॥७॥

विदू०—भो एसो क्खु मणिसिलापट्टअसणाहो अदिमुत्तलदामंडवो भमरसंघट्टपडिदेहिं कुसुमेहिं सअं विअ किदोवआरो भवंतं पडिच्छदि । ता अणुगेण्हिअदु दाव एसो । (भोः एष खलु मणिशिलापट्टकसनाथः अतिमुक्तलतामण्डपः भ्रमरसङ्घट्टपतितैः कुसुमैः स्वयमिव कृतोपचारो भवन्तं प्रतीच्छति । तदनुगृह्यतां तावदेषः ।)

राजा—यथा भवते रोचते । (परिक्रम्योपविशतः ।)

विदू॰—दाणिं इह सुहासीणो भवं ललिदलदाविलोहीअमाणणअणो उव्वसीगदं उक्कंठं विणोदेदु । (इदानीमिह सुखासीनो भवाँल्ललित-लता-विलोभ्यमान-नयनः, उर्वशीगतामुत्कण्ठां विनोदयतु ।)

राजा—(निःश्वस्य)

मम कुसुमितास्वपि सखे नोपवनलतासु नम्रविटपासु ।
चक्षुर्बध्नाति धृतिं तद्रूपालोकदुर्ललितम् ॥८॥

तदुपायश्चिन्त्यतां यथा सफलप्रार्थनो भवेयम् ।

विदू॰—(विहस्य) भो अहल्लाकामुअस्स महिंदस्स वज्जो[1] सचिवो, उव्वसीपज्जुच्छुअस्स अ भवदो अहं । दुवेवि एत्थ उम्मत्तआ । (भोः, अहल्याकामुकस्य महेन्द्रस्य वज्रः सचिवः, उर्वशीपर्युत्सुकस्य च भवतः अहम् । द्वावप्यत्रोन्मत्तौ ।)

राजा—[2]मा मैवम् । अतिस्नेहः खलु कार्यदर्शी । तत् उपायश्चिन्त्यताम् ।

विदू॰—एसो चिंतेमि । मा उण परिदेविदेण मम समाधिं भिंधि । (एष चिन्तयामि । मा पुनः परिदेवितेन मम समाधिं भिन्धि ।)

(चिन्तां नाटयति ।)

राजा—(निमित्तं सूचयित्वा । स्वगतम् ।)

न सुलभा सकलेन्दुमुखी च सा
किमपि चेदमनङ्गविचेष्टितम् ।
अभिमुखीष्विव काङ्क्षितसिद्धिषु
व्रजति निर्वृतिमेकपदे मनः ॥९॥

(जाताशस्तिष्ठति)

(ततः प्रविशत्याकाशयानेनोर्वशी चित्रलेखा च ।)

चित्र॰—हला कहिं दाणिं अणिद्दिट्ठकालणं गच्छीअदि । (हला क्वेदानीमनिर्दिष्टकारणं गम्यते ।)

उर्व॰—(मदनवेदनामभिनीय सलज्जम्) सहि तदा हेमऊडसिहरे लदाविडवेण खणविग्घिदआआसगमणं मं 'ओहसिअ किं दाणिं पुच्छसि कहिं गच्छीअदि त्ति । (सखि ! तदा हेमकूटशिखरे लताविटपेन क्षण-विघ्नितकाशगमनां मामुपहस्य किमिदानीं पृच्छसि क्व गम्यते इति ।)

---

१. वेज्जो=वैद्यः. पं. अ. च. २. 'न खलु चिन्तयति भवान्'-नि-४. शा.

चित्र०—किं णु क्खु तस्स राएसिणो पुरूरवस्स सआसं पत्थिदासि ?
(किं नु खलु तस्य राजर्षेः पुरूरवसः सकाशं प्रस्थितासि ?)

उर्व०—अह इं। अअं मे अवहत्थिदलज्जो ववसाओ।
(अथ किम्। अयं मे अपहस्तितलज्जो व्यवसायः।)

चित्र०—को उण सहीए तहिं पुढमं पेसिदो।
(कः पुनः सख्या तत्र पुरतः प्रेषितः।)

उर्व०—णं हिअअं। (ननु हृदयम्।)

चित्र०—तथा वि सअं एव्व साहु संपधारिअदु दाव।
(तथापि स्वयमेव साधु सम्प्रधार्यतां तावत्।)

उर्व०—सहि मअणो क्खु मं णिओएदि। किं एत्थ संपधारीअदि ?
(सखि! मदनः खलु मां नियोजयति। किमत्र सम्प्रधार्यते ?)

चित्र०—अदोवरं णत्थि मे वअणम्। (अतः परं नास्ति मे वचनम्।)

उर्व०—तेण हि आदिसीअदु मग्गो जेण तहिं गच्छन्तीणं अंतराओ ण भवे। (तेन ह्यादिश्यतां मार्गो येन तत्र गच्छन्त्योः,अन्तरायो न भवेत्।)

चित्र०—सहि! विस्सद्धा होहि। णं भअवदा देवगुरुणा अवराइदं णाम सिहाबंधणविज्जं उवदिसंतेण तिदसपडिवक्खस्स अलंघणिज्जा कदम्ह। (सखि! विस्रब्धा भव। ननु भगवता देवगुरुणा अपराजितां नाम शिखाबन्धनविद्यामुपदिशता त्रिदशप्रतिपक्षस्यालङ्घनीये कृते स्वः।)

उर्व०—(सलज्जम्) अहो विसुमरिदं मे हिअअं।
(अहो! विस्मृतं मे हृदयम्।) (उभे भ्रमणं रूपयतः।)

चित्र०—सहि पेक्ख पेक्ख। इदं भअवदीए भाईरहीए जमुणासंगमविसेसपावणेसु सलिलेसु अत्ताणअं ओलोअंतस्स विअ पइट्ठाणस्स सिहाहरणभूदं तस्स राएसिणो भवणं उवट्ठिदम्ह। (सखि! प्रेक्षस्व प्रेक्षस्व। एतद् भगवत्याः भगीरथ्याः यमुनासङ्गमविशेषपावनेषु सलिलेष्वात्मानमवलोकयत इव प्रतिष्ठानस्य[1] शिखाभरणभूतं तस्य राजर्षेर्भवनमुपस्थिते स्वः।)

उर्व०—(सस्पृहमवलोक्य) णं वत्तव्वं ठाणंतरगदो सग्गो त्ति। (विमृश्य)

---

१. तन्नाम्नो नगरस्य

सहि कहिं णु क्खु सो आवण्णाणुकंपी भवे ? (ननु वक्तव्यं स्थानान्तरगतः स्वर्ग इति। (विमृश्य) सखि! क्व नु खलु स आपन्नानुकम्पी भवेत् ?)

चित्र०—हला एदस्सिं णंदणवणेक्कदेसे विअ पदमवण ओदरिअ जाणिस्सामो। (हला एतस्मिन् नन्दनवनैकदेश इव प्रमदवने अवतीर्य ज्ञास्यावः।) ( उभे अवतरतः। )

चित्र०—(राजानं दृष्ट्वा सहर्षम्) सहि! एसो क्खु पढमोदिदो विअ चंदो कोमुदिं विअ तुमं पडिच्छदि। (सखि! एष खलु प्रथमोदित इव चन्द्रः कौमुदीमिव त्वां प्रतीच्छति।)

उर्व०—(विलोक्य) हला दाणिं पढमदंसणादो सविसेसं पिअदंसणो महाराओ पडिहादि। (हला! इदानीं प्रथमदर्शनात् सविशेषं प्रियदर्शनो महाराजः प्रतिभाति।)

चित्र०—जुज्जदि। ता एहि उवसप्पम्ह। (युज्यते। तदेहि उपसर्पावः)

उर्व०—ण दाव उवसप्पिस्सं। तिरक्खरिणीपडिच्छण्णा पासगदा से भविअ सुणिस्सं दाव पासवत्तिणा वअस्सेण सह विअणे किं मंतअंतो चिट्ठदि त्ति। (न तावदुपसर्पिष्यामि। तिरस्करिणीप्रतिच्छन्ना पार्श्वगतास्य भूत्वा श्रोष्यामि तावत् पार्श्ववर्तिना वयस्येन सह विजने किं मन्त्रयमाणस्तिष्ठतीति।)

चित्र०— जं दे रोअहि। (यत् ते रोचते।) ( उभे यथोक्तमनुतिष्ठतः )

विदू०—भो, चिंतिदो मए दुल्लहप्पणइणीसमाअमोवाओ।
(भोः चिन्तितो मया दुर्लभ-प्रणयिनी-समागमोपायः।)

( राजा तूष्णीमास्ते )

उर्व०—(सेर्ष्यम्) का णु क्खु धण्णा इत्थिआ जा इमिणा पत्थिअमाणा अत्ताणअं किदित्थेइ। (का नु खलु धन्या स्त्री या अनेन प्रार्थ्यमानात्मानं कृतार्थयति।)

चित्र०—किं उण माणुस्सअं विडंवीअदि। (किं पुनर्मानुष्यकं विडम्ब्यते।)

उर्व०—सहि भोआमि सहसा पभावादो विण्णादुं।
(सखि! बिभेमि सहसा प्रभावाद् विज्ञातुम्।)

विदू०—भो ! णं भणामि चिंतिदो मए उवाओ त्ति ।
(भोः ! ननु भणामि चिन्तितो मया उपाय इति ।)

राजा—तेन हि कथ्यताम् ।

विदू०—सिविणसमाअमआरिणिं णिद्दं सेवदु भवं । अहवा तत्तभोदीए उव्वसीए पडिकिदिं चित्तफलए आलिहिअ ओलोअंदो चिट्ठदु ।
(स्वप्नसमागमकारिणीं निद्रां सेवतां भवान् । अथवा तत्रभवत्या उर्वश्याः प्रतिकृतिं चित्रफलके आलिख्य अवलोकयंस्तिष्ठतु ।)

उर्व०—(सहर्षमात्मगतम्) हीणसत्त हिअअ ! समस्सस समस्सस ।
(हीनसत्त्व हृदय ! समाश्वसिहि समाश्वसिहि ।)

राजा—उभयमप्यनुपपन्नम् । पश्य—

हृदयमिषुभिः कामस्यान्तः सशल्यमिदं सदा
कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् ।
न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां
मम[1] नयनयोरुद्वाष्पत्वं सखे न भविष्यति ॥१०॥

चित्र०—सुदं तुए अवणं । (श्रुतं त्वया वचनम् ।)

उर्व०—सहि सुदं । ण उण पज्जत्तं हिअअस्स ।
(सखि ! श्रुतं । न पुनः पर्याप्तं हृदयस्य ।)

विदू०—एत्तिओ एव्व मे मदिविहओ । (एतावानेव मे मतिविभवः ।)

राजा—(निःश्वस्य)

नितान्तकठिनां रुजं मम न वेद सा मानसीं
प्रभावविदितानुरागमवमन्यते वापि माम् ।
अलब्धफलनीरसं मम विधाय तस्मिञ्जने
समागम-मनोरथं भवतु पञ्चवाणः कृती ॥११॥

चित्र०—सहि सुदं तुए । (सखि ! श्रुतं त्वया ।)

उर्व०—हद्धी हद्धी । मं एव्वं अवगच्छदि । (सखीमवलोक्य) सहि असमत्थम्हि अग्गदो भविअ अत्ताणं दस्सिदुं[2] । ता पहाव-

---

१. मे. २।४२. शा. ६।२२. २. से पडिवभणस्स पं अ. च.

णिम्मिदेण भुज्जवत्तेण लेहं संपादिअ अंतरा खिपिदुं [1]इच्छामि। (हा धिक् हा धिक्। माम्, एवमवगच्छति। (सखीमवलोक्य) सखि! असमर्थास्म्यग्रतो भूत्वा आत्मानं दर्शयितुम्। तत्, प्रभावनिर्मितेन भूर्जपत्रेण लेखं संपाद्य अन्तरा क्षेप्तुमिच्छामि।)

चित्र०—हला अणुमदं मे। (हला अनुमतं मे।)
(उर्वशी नाट्येन ससंभ्रममभिलिख्यान्तरा क्षिपति।)

विदू०—(दृष्ट्वा ससंभ्रमम्) अविहा अविहा। भो किं णु क्खु एदं? भुअंगणिम्मोअं मं खादिदुं णिवडिदो। (अविधा अविधा, भोः किंनु खलु एतत्? भुजङ्गनिर्मोकः किं मां खादितुं निपतितः।)

राजा—(विभाव्य विहस्य च।) वयस्य! नायं भुजङ्गनिर्मोकः भूर्जपत्रगतोऽयमक्षरविन्यासः।

विदू०—णं अदिट्ठाए उव्वसीए भवदो परिदेविदं सुणिअ समाणानुराअसूअआइं अक्खराइँ विसज्जिआइँ होन्ति। (ननु अदृष्टया उर्वश्या भवतः परिदेवितं श्रुत्वा समानानुरागसूचकान्यक्षराणि विसृष्टानि स्युः।)

राजा—नास्त्यगतिर्मनोरथानाम्[2]। (गृहीत्वानुवाच्य च सहर्षम्) सखे! [3]प्रसन्नस्ते तर्कः।

विदू०—ही ही भो। किं वम्हणवअणाणि अण्णधा होन्ति। दाणिं पसीददु भवं। जं एत्थ लिहिदं तं सुणिदुं इच्छामि। (ही ही भोः। किं ब्राह्मणवचनान्यन्यथा भवन्ति। तदिदानीं प्रसीदतु भवान्। यदत्र लिखितं तच्छ्रोतुमिच्छामि।)

उर्व०—साहु अज्ज णाअरोसि। (साधु आर्य! नागरोऽसि।)

राजा—वयस्य श्रूयताम्।

विदू०—अवहिदो म्हि। (अवहितोऽस्मि।)

राजा—श्रूयताम् (वाचयति)

सामिअ[4] संभाविआ[5] जहा अहं तुए अमुणिआ
तह अणुरत्तस्स जइ णाम तुज्झ उवरि अहं।

---

१. ०त्तेण संवादिदउत्तरा होदुं इच्छामि पं अ. च. २. कु. ५।६४
३. प्रसिद्ध इति पाठे।
४. बहुतरमत्र पाठान्तरम्। स्वच्छार्थतया का. पाठं त्वाद्रियामहे, किञ्चिदन्तरेण।
५. सामि असंभाविआ. का.

किं मे ललिअपारिआअ-सणिज्जअंमि होन्ति
णंदणवण-वादा वि अच्चुण्हआ[1] सरीरए ॥१२॥[2]

(स्वामिन् संभाविता यथाहं त्वयाऽज्ञाता
तथानुरक्तस्य यदि नाम तवोपरि अहम् ।
किं मे ललितपारिजातशयनीये भवन्ति
नन्दनवनवाता अप्यत्युष्णकाः शरीरके ॥)

उर्वशी—किं णु क्खु संपदं भणिस्सदि । (किं नु खलु साम्प्रतं भणिष्यति ।)

चित्र०—णं भणिदं एव्व मिलाणकमलणालाअमाणेहिं अंगेहिं । (ननु भणितमेव म्लान-कमलनालायमानैरङ्गैः ।)

विदू०—दिट्ठिआ मए बुभुक्खिदेण सोत्थिवाअणं विअ, उवलद्धं भवदा उक्कंठिदेण समासासणं । (दिष्ट्या, मया बुभुक्षितेन स्वस्तिवाचन-मिव, उपलब्धं भवता उत्कण्ठितेन समाश्वासनम् ।)

राजा—समाश्वासनमिति किमुच्यते

तुल्यानुरागपिशुनं ललितार्थबन्धं
पत्रे निवेशितमुदाहरणं[3] प्रियायाः ।
उत्पक्ष्मणा मम सखे मदिरेक्षणायाः
तस्याः समागतमिवाननमाननेन ॥१३॥

उर्वशी—एत्थ णो समविभाआ पीदो । (अत्रावयोः समविभागा प्रीतिः ।)

राजा—वयस्य अङ्गुलिस्वेदेन दूष्येरन्नक्षराणि । धार्यतामयं मम प्रियायाः स्वहस्तः[4] ।

विदू०—(गृहीत्वा)

किं दाणिं तत्तभोदी उव्वसी भवदो मणोरहाणं कुसुमं दंसिअ

---

१. आच्चण्हा. का.

२. इमे द्वे गाथे इति अर्त्ते, अन्ये च कतिपये । a द्र. पृ. २९३

३. उदाहरणं गीतबन्धः । र. ४/७८, अग्रेव ३४७ पृ० 'उदाजहार द्रुपदात्मजा गिर' इति भारविश्च ।

४. भाषायां हस्ताक्षरम् इति Signature इति च यत् प्रसिद्धं तदर्थं स्वहस्त इति संस्कृतं भोजराजादिदानशासनेषु प्रतीतम् । अत्र पुनः 'स्वहस्त-लिखितोऽक्षरविन्यास' इत्यर्थः । एवमग्रे २/१९ पद्येऽपि ।

फले विसंवददि। (किमिदानीं तत्रभवती उर्वशी भवतो मनोरथानां कुसुमं दर्शयित्वा फले विसंवदति।)

उर्वशी—सहि जाव उवगमणकादरं हिअअं पज्जवत्थावेमि दाव तुमं से अत्ताणं दंसिअ जं मे खमं तं भणाहि। (सखि यावदुपगमनकातरं हृदयं पर्यवस्थापयामि, तावत्, त्वमस्य आत्मानं दर्शयित्वा, यन्मम क्षमं, तद् भण।)

चित्र०—तह (तथा) (तिरस्करिणीमपनीय राजानमुपेत्य) जेदु जेदु महाराओ। (तिरस्करिणीमपनीय राजानमुपेत्य) (जयतु जयतु महाराजः।)

राजा—(दृष्ट्वा सहर्षं) स्वागतं भवत्यै (पार्श्वमवलोक्य) भद्रे!

न तथा नन्दयसि मां सख्या विरहिता तया।
सङ्गमे दृष्टपूर्वेव यमुना गङ्गया विना ॥१४॥

चित्र०—णं पढमं मेहराई दीसदि पच्छा विज्जुलदा। (ननु प्रथमं मेघराजिर्दृश्यते पश्चाद् विद्युल्लता।)

विदू०—(अपवार्य) कहं ण एसा उव्वसी। ताए तत्तहोदोए अहिमदा सहअरी। (कथं नैपोर्वशी। तस्यास्तत्रभवत्या अभिमता सहचरी?)

राजा—एतदासनमास्यताम्।

चित्र०—उव्वसी महाराअं सिरसा पणमिअ विण्णवेदि। (उर्वशी महाराजं शिरसा प्रणम्य विज्ञापयति।)

राजा—किमाज्ञापयति?

चित्र०—तस्सिं सुरारिसंभवे दुज्जादे महाराओ एव्व मं सरणं आसि। सा अहं संपदं, तुह दंसणसमुत्थेण मअणेण, वलिअं वाहीअमाणा, भूओवि महाराएण अणुकंपणीअत्ति। (तस्मिन् सुरारिसम्भवे दुर्जाते महाराज एव मम शरणमासीत्। साहं साम्प्रतं तव दर्शनसमुत्थेन मदनेन, बलवद् बाध्यमाना भूयोऽपि महाराजस्यानुकम्पनीया भवामि इति।)

राजा—अयि भद्रमुखि!

पर्युत्सुकां कथयसि प्रियदर्शनां ताम्,
आर्तं न पश्यसि पुरूरवसं तदर्थे।

साधारणोऽयमुभयोः [१]प्रणयः स्मरस्य
तप्तेन तप्तमयसा घटनाय योग्यम् ॥१५॥

चित्र०—(उर्वशीमुपेत्य) सहि एहि। तुवत्तोवि णिद्दअदरं मअणं पेक्खिअ पिअतमस्स दे दूदिम्हि संवुत्ता। (सखि एहि! त्वत्तोऽपि निर्दयतरं मदनं प्रेक्ष्य प्रियतमस्य ते दूत्यस्मि संवृत्ता।)

उर्वशी—(तिरस्करिणीमपनीय) अम्महे लहुअं तुए उज्झिदम्हि। (अहो लघु त्वया उज्झितास्मि।)

चित्र०—(सस्मितम्) सहि! इदो मुहुत्तादो जाणिस्सं का कं उज्झिस्सदि। आआरं दाव पडिवज्ज। (सखि! इतो मुहूर्तादेव ज्ञास्यामि का कामुज्झिष्यतीति। आचारं तावत् प्रतिपद्यस्व।)

उर्वशी—(ससाध्वसं राजानमुपेत्य प्रणम्य च सव्रीडम्) जेदु जेदु महाराओ। (जयतु-जयतु महाराजः।)

राजा—(सहर्षम्) सुन्दरि!

मया नाम जितं यस्य त्वयायं समुदीर्यते।
जयशब्दः सहस्राक्षादगतः[२] पुरुषान्तरम् ॥१६॥

(हस्ते गृहीत्वैनामुपवेशयति।)

विदू०—भोदि! रण्णो पिअवअस्सो वम्हणो किं ण वन्दीअदि। (भवति! राज्ञः प्रियवयस्यो ब्राह्मणः किं न वन्द्यते।)

(उर्वशी सस्मितं प्रणमति)

विदू०—सत्थि भोदीए। (स्वस्ति भवत्यै।)

(नेपथ्ये देवदूतः)

चित्रलेखे! त्वरय त्वरय उर्वशीम्।

मुनिना भरतेन यः प्रयोगो
भवतीष्वष्टरसाश्रयो नियुक्तः[३]।
ललिताभिनयं तमद्य भर्ता
मरुतां द्रष्टुमनाः सलोकपालः ॥१७॥

---

१. याच्ञा। 'प्रणयास्त्वमी विस्रम्भयाच्ञाप्रेमाणः।' द्र. पृ. २३० पादटि.
२. आगत इति पाठे पुरुषान्तरपदस्यान्तरशब्दो विशेषपरः। ३. निबद्ध पा०

(सर्वे कर्णं ददति । उर्वशी विषादं रूपयति)

चित्र०—सुदं पिअसहीए देवदूदस्स वअणं । ता अणुमाणीअदु महाराओ । (श्रुतं प्रियसख्या देवदूतस्य वचनम् । तदनुमान्यतां महाराजः ।)

उर्वशी—णत्थि मे वाआ । (नास्ति मे वाचा ।)

चित्र०—महाराअ उव्वसी विण्णवेदि—परवसो अअं जणो । ता महाराएण अब्भणुण्णादा इच्छामि देवेसु अणवरद्धं अत्ताणअं कादुं त्ति । (महाराज ! उर्वशी विज्ञापयति—परवशोऽयं जनः । तन्महाराजेनाभ्यनुज्ञाता इच्छामि देवेष्वनपराद्धमात्मानं कर्तुम्—इति ।)

राजा—(कथं कथमपि वाचं व्यवस्थाप्य ।) नास्मि भवत्योः ईश्वरनियोगप्रत्यर्थी । स्मर्तव्यस्त्वयं जनः ।

(उर्वशी वियोगदुःखं रूपयित्वा राजानं पश्यन्ती सह सख्या निष्क्रान्ता ।)

राजा—(निःश्वस्य) सखे वैयर्थ्यमिव मे चक्षुषोः संप्रति ।

विदू०—(पत्रं दर्शयितुकामः) णं एदं (अर्धोक्ते सविषादमात्मगतम् ) हद्धी हद्धी उव्वसीदंसणविम्हिदेण मए तं भुज्जावत्तअं पब्भट्टं वि हत्थादो पमादेण ण विण्णादं । (ननु एतत् (इत्यर्धोक्ते सविषादमात्मगतम्) हा धिक् हा धिक् ! उर्वशीदर्शनविस्मितेन मया तद् भूर्जपत्रं प्रभ्रष्टमपि हस्तात् प्रमादेन न विज्ञातम् ।)

राजा—भद्र ! किमपि वक्तुकाम इव ?

विदू०—एव्वं वत्तुकामोम्हि—मा भवं अंगाइँ मुंचदु । दिढं क्खु तुइ वद्धभावा उव्वसी । ण सा इदोगदं अणुराअं सिढिलेदि त्ति । (एवं वक्तुकामोऽस्मि—'मा भवानङ्गानि मुञ्चतु । दृढं खलु त्वयि बद्धभावा उर्वशी । न सा इतोगतमनुरागं शिथिलयति'—इति ।)

राजा—ममाप्येतदाशंसि मनः । तया खलु प्रस्थाने—

अनीशया शरीरस्य स्ववशं हृदयं मयि ।
स्तनकम्पक्रियालक्ष्यैर्न्यस्तं निःश्वसितैरिव ।।१८।।

विदू०—(स्वगतम्) वेवदि मे हिअअं इमं वेलं अत्तभवदा तस्स भुज्जवत्तस्स णाम गेण्हिदव्वं त्ति । (वेपते मे हृदयमिमां वेलामत्रभवता तस्य भूर्जपत्रस्य नाम ग्रहीतव्यमिति ।)

राजा—वयस्य केनेदानीं दृष्टिं विलोभयामि । (स्मृत्वा) आ:, उपनयतु भवान् भूर्जपत्रम् ।

विदू०—(सर्वतो दृष्ट्वा विषादं नाटयति) हंत ण दिस्सदि । भो दिव्वं क्खु तं भुज्जवत्तं गदं उव्वसीए मग्गेण । (हन्त न दृश्यते । भोः दिव्यं खलु तद् भूर्जपत्रं गतमुर्वश्या मार्गेण ।)

राजा—(सासूयम्) अहो सर्वत्र प्रमादी वैधेयः । ननु विचिनोतु भवान् ।

विदू०—(उत्थाय) णं इदो भवे, इह वा भवे, इह वा भवे । (ननु इतो भवेत्, इह वा भवेत्, इह वा भवेत् ।) (विचेतव्यं नाटयति)

(ततः प्रविशति सपरिवारा काशिराजपुत्री देवी चेटी च)

देवी—हंजे णिउणिए ! सच्चं तुए भणिदं इमं लदागेहं पविसंतो अज्ज-माणवअ-सहाओ अज्जउत्तो दिट्ठो त्ति । (हञ्जे निपुणिके ! सत्यं त्वया भणितमिदं लतागृहं प्रविशन्नार्यमाणवकसहाय आर्यपुत्रो दृष्ट इति ।)

निपु०—किं अण्णहा भट्टिणी मए कदावि विण्णविदपुव्वा ? (किमन्यथा भट्टिनी मया कदापि विज्ञापितपूर्वा ?)

देवी—तेण हि लदाविडवंतरिदा सुणिस्सं दाव से विस्सद्ध मंत्तिदाणि जं तुए कहिदं तं सच्चं ण व त्ति । (तेन हि लताविटपान्तरिता श्रोष्यामि तावदस्य विस्रब्धमन्त्रितानि यत् त्वया कथितं तत् सत्यं न वेति ।)

निपु०—जं भट्टिणीए रोअदि । (यद् भट्टिन्यै रोचते ।)

देवी—(परिक्रम्य पुरस्तादवलोक्य च) हंजे णिउणिए किं णु क्खु एदं जिण्ण-चीअरं विअ इदोमुहं दक्खिण-मारुदेण आणीअदि । (हञ्जे निपुणिके ! किं नु खल्वेतज्जीर्णचीवरमिव इतोमुखं दक्षिणमारुतेनानीयते ।)

निपु०—(विभाव्य) भट्टिणी ! पडिवत्तणविभाविदक्खरं भुज्जवतं क्खु एदं । हंत भट्टिणीए एव्व णेउरकोडीए लग्गं । (गृहीत्वा) णं वाईअदु एदम् । (भट्टिनि ! परिवर्त्तनविभाविताक्षरं भूर्जपत्रं खल्वेतत् । हन्त भट्टिन्या एव नूपुरकोटचां लग्नम् । (गृहीत्वा) ननु वाच्यतामेतत् ।)

देवी—अणुवाएहि दाव एदं । जदि अविरुद्धं तदो सुणिस्सं । (अनुवाचय तावदेतत् । यद्यविरुद्धं ततः श्रोष्यामि ।)

निपु०—(तथा कृत्वा) भट्टिणी ! तं एव्व कोलीणं विअ पडिहादि भट्टारअं उद्दिसिअ उव्वसीए कव्वबंधो त्ति तक्केमि, अज्जमाणवअ-प्पमादेण अम्हाणं हत्थं आगदो त्ति । (भट्टिनि ! तदेव कौलीनमिव प्रतिभाति । भट्टारकमुद्दिश्य उर्वश्याः काव्यबन्ध इति तर्कयामि, आर्य-माणवक-प्रमादेन आवयोर्हस्तमागत इति ।)

देवी—तेण हि से गहीदत्था होमि । (तेन ह्यस्य गृहीतार्था भवामि ।)

(निपुणिका वाचयति)

देवी—(श्रुत्वा) एहि इमिणा एव्व उवाअणेण दं अच्छराकामुअं पेक्खामि । (एहि, अनेनैवोपायनेन तमप्सरःकामुकं प्रेक्षे ।)

निपु०—तह । (तथा ।)

(परिजनसहिते लतागृहं परिक्रामतः ।)

विदू०—(विलोक्य) भो वअस्स ! किं एदं पवणवसगामि पमदवणसमीव-गदकीलापव्वदपज्जंते दीसदि । (भो वयस्य ! किमेतत् पवनवशगामि प्रमदवनसमीपगतक्रीडापर्वतपर्यन्ते दृश्यते ।)

राजा—(उत्थाय) भगवन् वसन्त-प्रिय दक्षिणवायो !

वासार्थं हर संभृतं सुरभिणा पौष्पं रजो वीरुधां
किं [1]मिथ्या भवतो हृतेन दयितास्नेह-[2]स्वहस्तेन मे ।
जानात्येव[3] मनोविनोदन[4]शतैरेवंविधैर्धारितं
कामार्तं [5]जनमञ्जनां प्रति भवानालक्षितप्रार्थनः ॥१९॥

निपु०—भट्टिणि ! पेक्ख पेक्ख । एदस्स एव्व अण्णेसणा वट्टदि । (भट्टिनी ! प्रेक्षस्व प्रेक्षस्व । एतस्यैवान्वेषणा वर्तते ।)

देवी—णं पेक्खामि दाव । तुण्हि चिट्ठ । (ननु पश्यामि तावत् । तूष्णीं तिष्ठ)

---

१. कार्यं. च.

२. द्र. ३६०-पृष्ठगता ४-पादटिप्पनी.

३. 'जानीते हि' च. सा. पं. थ. शा. एतच्चाबहुहस्तलेखमतम्, अन्वाख्यान-विरुद्धं च, ज्ञाधातोरकर्मकत्व एवात्मनेपदित्वात् ।

४. भवान्. च.

५. -फलैः. च.

६. जनमञ्जसाभिभवितुं नालम्बितप्रार्थनम् शा. । दक्षिणवायोर्वियोगिजनविरुद्ध-त्वादानुकूल्यायाञ्जनेतिहासोपन्यास उचितः ।

विदू०—(सविषादम्) हद्धी हद्धी भो मिलाअमाणकेसरच्छविणा मोर-पिच्छेण विप्पलद्धो म्हि। (हा धिक् हा धिक् भोः म्लायमान-केसरच्छविना मयूरपिच्छेन विप्रलब्धोऽस्मि।)

राजा—सर्वथा हतोऽस्मि।

देवी—(सहसोपसृत्य) अज्जउत्त अलं आवेएण। एदं तं भुज्जवत्तं। (आर्यपुत्र! अलमावेगेन। एतत् तद् भूर्जपत्रम्)

राजा—(ससंभ्रमम्) अये देवी। स्वागतं देव्यै।

विदू०—(अपवार्य) दुरागदं दाणिं संवुत्तं। (दुरागतमिदानीं संवृत्तम्)

राजा—(जनान्तिकम्) वयस्य! किमत्र प्रतिविधेयम्।

विदू०—(अपवार्य) लोत्तेण गहीदस्स कुंभीलअस्स अत्थि वा पडिवअणं। (लोप्त्रेण गृहीतस्य कुंभीलकस्यास्ति वा प्रतिवचनम्।)

राजा—(जनान्तिकम्) मूढ नायं परिहासकालः। (प्रकाशम्) देवि! नेदं मया मृग्यते। अयं खलु परान्वेषणार्थमारम्भः।

देवी—जुज्जदि अत्तणो सोहग्गं पच्छादेदुं। (युज्यते आत्मनः सौभाग्यं[1] प्रच्छादयितुम्।)

विदू०—भोदि! तुवरेहि से भोअणं जं पित्तोवसमणसमत्थं होदि। (भवति त्वरय अस्य भोजनं यत् पित्तोपशमनसमर्थं भवति।)

देवी—णिउणिए सोहणं क्खु वम्हणेण अणुमाणिदो वअस्सो। (निपुणिके! शोभनं खलु ब्राह्मणेनानुमानितो वयस्यः।)

विदू०—भोदि णं पेक्ख आवेसिदो पिसाचोवि भोअणेण उज्झइ। (भवति! ननु पश्य आवेशितः पिशाचोऽपि भोजनेन उज्झति।)

राजा—मूर्ख! बलादपराधिनं मां प्रतिपादयसि।

---

१. सौभाग्यमत्र प्रणयिनीजनाऽऽगतः प्रेमा। प्रणयिनोरन्योन्यं प्रति यः प्रीतिबन्धस्तस्यैव सौभाग्यमिति परिभाषा। द्रष्टव्योऽस्माकं-'कालिदासभारती'-तिलेखमालाया द्वितीयो लेखः सागरिका ४/२ अङ्के। द्र. द्र. पृ. २९७.

देवी— णत्थि क्खु भवदो अवराहो । अहं एव्व एत्थ अवरद्धा जा पडिऊलदंसणा भविअ अग्गदो दे चिट्ठामि । इदो अहं गमिस्सं । णिउणिए, एहि गच्छम्ह । (नास्ति खलु भवतोऽपराधः । अहमेवात्र अपराद्धा, या प्रतिकूलदर्शना भूत्वा अग्रतस्ते तिष्ठामि । इतोऽहं गमिष्यामि । निपुणिके ! एहि गच्छामः ।)

(कोपं नाटयित्वा प्रस्थिता ।)

राजा—(अनुसृत्य)

अपराधी नामाहं प्रसीद रम्भोरु ! विरम संरम्भात् ।
सेव्यो जनश्च कुपितः कथं च दासो निरपराधः ।।२०।।

(पादयोः पतति ।)

देवी—(स्वगतम्) मा क्खु लहुहिअआ अहं अणुणअं वहु मण्णे । किं दु अदक्खिण्णकिदस्स पच्छादावस्स भाएमि । (मा खलु लघुहृदयाहमनुनयं वहु मन्ये । किंतु अदाक्षिण्यकृतात् पश्चात्तापाद् बिभेमि ।)

(राजानमपहाय सपरिवारा निष्क्रान्ता ।)

विदू०—पाउसणदी विअ अप्पसण्णा गदा देवी । ता उट्ठेहि ।
(प्रावृण्नदीव अप्रसन्ना गता देवी । तदुत्तिष्ठ ।)

राजा—(उत्थाय) वयस्य, नेदमनुपपन्नम् । पश्य—

प्रियवचनकृतोऽपि योषितां दयितजनानुनयो रसादृते ।
प्रविशति हृदयं न तद्विदां मणिरिव कृत्रिमरागयोजितः ।।२१।।

विदू०—अणुऊलं एव्व एत्थभवदो एदं । ण क्खु अक्खिदुक्खिदस्स पमुहे दीवसिहा सहेदि । (अनुकूलमेवात्रभवत एतत् । न खलु अक्षिदुःखितस्य प्रमुखे दीपशिखा[1] सहते ।)

राजा—मा मैवम् ! उर्वशीगतमनसोऽपि मे स एव देव्यां बहुमानः । किन्तु प्रणिपातलङ्घनाद् अहमस्यां धैर्यमवलम्बिष्ये ।

विदू०—भो चिट्ठदु दाव भवदो धीरदा । बुभुक्खिदस्स बम्हणस्स जीविदं अवलंवदु भवं । समओ क्खु ण्हाणभोअणं सेविदुं (भो तिष्ठतु

1. न खल्वक्षिदुःखितोऽभिमुखे दीपशीखां सहते सा. पं. अ. च. । अत्राकर्मकः सहिः । शोभत इति च तदर्थः । सोऽयमभिजातो वाग्योगः कालिदासस्य ।

तावद् भवतो धीरता। बुभुक्षितस्य ब्राह्मणस्य जीवितमवलम्बतां भवान्।
समयः खलु स्नानभोजनं सेवितुम्।)

राजा—(उर्ध्वमवलोक्य) गतमर्धं दिवसस्य। अतः खलु—

उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी
निर्भिद्योपरि कर्णिकारमुकुलान्यालीयते षट्पदः।
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीडावेश्मनि चैष पञ्जरशुकः क्लान्तो जलं याचते ॥२२॥

(निष्क्रान्तौ)

॥ इति द्वितीयोऽङ्कः ॥

## ।। [1]अथ मिश्रविष्कम्भकः ।।

( ततः प्रविशतो भरतशिष्यौ )

गाल०—सखे पेलव ! महेन्द्रभवनं गच्छता भगवतोपाध्यायेन त्वमासनं प्रतिग्राहितः। अग्निशरणसंरक्षणाय स्थापितोऽहम्। अतः खलु पृच्छामि—अपि गुरोः प्रयोगेण दिव्या परिषदाराधिता।

पेल०—गालव। ण जाणे आराहिदा ण व त्ति। तस्सिं उण सरस्सई-किदकव्ववंधे लच्छीसग्रंवरे तेसु तेसु रसंतरेसु तम्मई आसि। किंतु—। (गालव ! न जाने आराधिता न वा इति। तस्मिन् पुनः सरस्वतीकृतकाव्यबन्धे लक्ष्मीस्वयंवरे तेषु तेषु रसान्तरेषु [2]तन्मयी आसीत्। किन्तु—)

गाल०—सदोषावकाश इव ते वाक्यशेषः।

पेल०—आम् तस्सि उव्वसीए वअणं पमादक्खलिदं आसि। (आम्, तस्मिन् उर्वश्या वचनं प्रमादस्खलितमासीत्।)

गाल०—कथमिव ?

पेल०—लच्छीभूमिग्राए वट्टमाणा उव्वसी वारुणीभूमिआए वट्टमाणाए मेणआए पुच्छिदा—सहि समागदा एदे तेलोक्कसुपुरिसा सकेसवा लोअवाला। कदमस्सि दे [3]भावाहिणिवेसोत्ति। (लक्ष्मीभूमिकायां वर्त्तमाना उर्वशी वारुणीभूमिकायां वर्त्तमानया मेनकया पृष्टा—सखि ! समागता एते त्रैलोक्यसुपुरुषाः सकेशवाश्च लोकपालाः। कतमस्मिंस्ते भावाभिनिवेश इति।)

---

१. इयमस्मत्कृता योजना।

२. तन्मयीति परिषद्विशेषणम्। अत्र 'उव्वसी तम्मआ आसी' सा. शा.। किन्तु न युज्यतेऽत्रोर्वशीपदयोजना। परिषद एवाराध्यत्वेन प्रस्तुतत्वात्, पेलवस्य द्वितीये वाक्ये सर्वपठितस्य उर्वशीपदस्य पुनरुक्तत्वाच्च, सर्वनाम्नैवोपपत्तेः।

३. हृदयाभिनिवेशः शा.

गाल०—ततस्ततः ।

पेल०—तदो ताए पुरुसत्तमे त्ति भणिदव्वे पुरूरवसि त्ति ताए णिग्गदा वाणी । ( ततः पुरुषोत्तमे इति भणितव्ये पुरूरवसीति तस्या निर्गता वाणी )

गाल०—भवितव्यतानुविधायीनि इन्द्रियाणि । न खलु तामभिक्रुद्धो गुरुः ?

पेल०—सा क्खु सत्ता उवज्झाएण । महिंदेण उण अणुगिहीदा ।
(सा खलु शप्ता उपाध्यायेन । महेन्द्रेण पुनरनुगृहीता ।)

गाल०—कथमिव ?

पेल०—जेण मम उवदेसो तुए लंघिदो तेण ण दे दिव्वं ठाणं हविस्सदि त्ति उवज्झाअस्स सावो । महिंदेण उण पेक्खणावसाणे लज्जावणदमुही सा एव्वं भणिदा—जस्सि तुमं वद्धभावासि तस्य मे रणसहाअस्स राएसिणो पिअं एत्थ करणिज्जं । ता दाव तुमं जहाकामं पुरूरवसं उवचिट्ठ जाव सो तुइ दिट्ठसंताणो भोदि त्ति । (येन ममोपदेशस्त्वया लङ्घितः तेन न ते दिव्यं स्थानं भविष्यति इति उपाध्यायस्य शापः । महेन्द्रेण पुनः प्रेक्षणावसाने लज्जावनतमुखी सा एवं भणिता—यस्मिंस्त्वं वद्धभावासि तस्य मे रणसहायस्य राजर्षेः प्रियमत्र करणीयम् । तत् तावत् त्वं यथाकामं परूरवसमुपतिष्ठस्व यावत् स [1]त्वयि दृष्टसन्तानो भवेदिति ।)

गाल० —सदृशमेतत् पुरुषान्तरविदो महेन्द्रस्य ।

पेल०—(सूर्यमवलोक्य) कधापसंगेण अम्हेहिं अवरद्धा अहिसेअवेला क्खु उवज्झाअस्स । ता एहि । से पासवत्तिणो होम । (कथाप्रसंगेनास्माभिः अपराद्धा अभिषेकवेला खलु उपाध्यायस्य । तदेहि । अस्य पार्श्ववर्तिनौ भवाव ।

गाल०—तथा ।

( निष्क्रान्तौ[2] )

---

१. यावत् स परिदृष्ट. सा. शा.

२. सर्वत्रात्रैव विष्कम्भकसमाप्तिः ।

( ततः प्रविशति कञ्चुकी )

कञ्चु०—(विनिःश्वस्य)

सर्वः कल्पे वयसि यतते लब्धुमर्थान् कुटुम्वी
पश्चात् पुत्रैरपहृतभरः कल्पते विश्रमाय ।
अस्माकं तु प्रतिदिनमियं [1]साधयन्ती प्रतिष्ठां
सेवा कारा-[2]परिणतिरहो[3]स्त्रीषु कष्टोऽधिकारः ॥१॥

(परिक्रम्य) आदिष्टोस्मि सनियमया काशिराजपुत्र्या—व्रतसम्पाद-नार्थं मया मानमुत्सृज्य निपुणिकामुखेन पूर्वं याचितो महाराजः । तदेव त्वं मद्वचनाद् विज्ञापय इति । यावदहमिदानीम् अवसितसन्ध्याजप्यं महाराजं पश्यामि । (परिक्रम्यावलोक्य च) रमणीयः खलु दिवसावसान-वृत्तान्तो राजवेश्मनः । इह हि—

उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा वर्हिणो
धूपैर्जालविनिःसृतैर्वलभयः संदिग्धपारावताः ।
आचारप्रयतः सपुष्पवलिषु स्थानेषु चार्चिष्मतीः
सन्ध्या-मङ्गलदीपिका विभजते शुद्धान्तवृद्धो जनः ॥२॥

(नेपथ्याभिमुखमवलोक्य) अये इत एव प्रस्थितो देवः—

परिजनवनिताकरार्पिताभिः
परिवृत एष विभाति दीपिकाभिः ।
गिरिरिव गतिमानपक्षसादाद्,
अनुतटपुष्पितकर्णिकारयष्टिः ॥३॥

यावदेनमवलोकनमार्गे स्थितः प्रतिपालयामि ।
(परिक्रम्य स्थितः ।)

॥ [4]इति मिश्रविष्कम्भकः ॥

---

१. सादयन्ती शरीरं सा. पं. अ.; सादयन्ती प्रतिष्ठां शा.
२. सेवाकारा परि० सा. च. पं. अ. ३. ०रभूत्
४. इयमस्माकं वस्तुयोजना.

## [a]अथ तृतीयोऽङ्कः

( ततः प्रविशति यथानिर्दिष्टो राजा विदूषकश्च । )

राजा—(स्वगतम्) आः ।

कार्यान्तरितोत्कण्ठं दिनं मया नीतमनतिकृच्छ्रेण ।
अविनोददीर्घयामा कथं नु रात्रिर्गमयितव्या[1] ॥४॥

कञ्चु०—(उपसृत्य)जयतु जयतु देवः ! देव ! देवी विज्ञापयति—मणिहर्म्यपृष्ठे सुदर्शनश्चन्द्रः । तत्र संनिहितेन देवेन प्रतिपालयितुमिच्छामि यावद् रोहिणीसंयोग इति ।

राजा—आर्य लातव्य ! विज्ञाप्यतां देवी यस्ते छन्द इति ।

कञ्चु०—यदाज्ञापयति देवः । (निष्क्रान्तः )

राजा—वयस्य ! किं परमार्थत एव देव्या व्रतनिमित्तोऽयमारम्भः स्यात् ?

विदू०—भो तक्केमि संजादपच्छादावा तत्तभोदी वदावदेसेण भवदो पणिपादलंघणं पमज्जिदुकाम त्ति । (भोः तर्कयामि सञ्जातपश्चात्तापा तत्रभवती व्रतापदेशेन भवतः प्रणिपातलङ्घनं प्रमार्ष्टुकामेति ।)

राजा—उपपन्नं भवानाह—

अवधूतप्रणिपाताः पश्चात् सन्तप्यमानमनसो हि[2] ।
[3]निभृतैर्व्यपत्रपन्ते दयितानुनयैर्[4]मनस्विन्यः[5] ॥५॥

तदादेशय मणिहर्म्य-पृष्ठमार्गम् ।

विदू०—इदो इदो भवं । इमिणा गंगातरंगसस्सिरीएण फलिअमणिसोवाणेण आरोहदु भवं पदोसावसररमणिज्जं मणिहम्मिअपिट्ठं । (इत इतो भवान् । एतेन गङ्गातरङ्गसश्रीकेण[6] स्फटिकमणिसोपानेनारोहतु भवान् प्रदोषावसररमणीयं मणिहर्म्यपृष्ठम्)

---

a. इयमस्मद्योजना । 1. मे. २।२५. 2. ऽपि सा. शा. पं. अ.
3. विविधैरनुतप्यन्ते च. 4. अनुशयैः शा.
5. अयमेव हि पाठो विदूषकोक्त्या संवदति । 6. शिशिरेण शा.

राजा—आरोहाग्रतः। ( सर्वे सोपानारोहणं नाटयन्ति। )

विदू०—(निरूप्य) भो पच्चासण्णेण चंदोदएण होदव्वं जह तिमिररेई-अमाणं पुव्वदिसामुहं आलोअसुहअं दीसदि। (भोः प्रत्यासन्नेन चन्द्रोदयेन भवितव्यम्, यथा तिमिररिच्यमानं पूर्वदिशामुखमालोकसुभगं दृश्यते।)

राजा—सम्यग् भवान् मन्यते—

उदयगूढशशाङ्कमरीचिभि-
स्तमसि दूरतरं प्रतिसारिते।
अलकसंयमनादिव लोचने
हरति मे हरिवाहनदिङ्मुखम् ॥६॥

विदू०—(विलोक्य) ही ही भो, एसो क्खु खंडमोदअसरिसो[1] उदिदो राआ दुआदीणं। (ही ही भोः, एष खलु खण्डमोदकसदृशः उदितो राजा द्विजातीनाम्।)

राजा—(सस्मितम्) सर्वत्रौदरिकस्य अभ्यवहार्यमेव विषयः। (प्राञ्जलिः प्रणम्य) भगवन् क्षपानाथ—

रविमावसते सतां क्रियायै
सुधया तर्पयते सुरान् पितॄंश्च[2]।
तमसां निशि मूर्च्छतां निहन्त्रे
हरचूडानिहितात्मने नमस्ते ॥७॥

(उपतिष्ठते)

विदू—भो वम्हणसंकामिदक्खरेण दे पिदामहेण अब्भणुण्णादो सि। ता आसणट्ठिदो होहि जाव अहं वि सुहासीणो होमि।
(भोः ब्राह्मणसंक्रामिताक्षरेण ते पितामहेनाभ्यनुज्ञातोऽसि। तत्, आसनस्थितो भव। यावदहमपि सुखासीनो भवामि।)

राजा—(विदूषकवचनं परिगृह्योपविष्टः परिजनं विलोक्य।) अभिव्यक्तायां चन्द्रिकायां किं दीपिकापौनरुक्त्येन ? तद् विश्राम्यन्तु भवत्यः।

---

१. सस्सिरीओ = सश्रीकः सा. पं. अ. च. २. पितॄन् सुरांश्च शा.

परि०—जं देवो आणवेदि । (यद् देव आज्ञापयति ।) (निष्क्रान्तः)

राजा—(चन्द्रमसमवलोक्य विदूषकं प्रति) वयस्य ! परं मुहूर्तादागमनं देव्याः । तद् विविक्ते कथयिष्यामि स्वामवस्थाम् ।

विदू०—णं दीसदि एव्व सा । किंदु तारिसं अणुराअं पेक्खिअ सक्कं क्खु आसाबंधेण अत्ताणं धारेदुं । (ननु दृश्यत एव सा । किन्तु तादृशमनुरागं प्रेक्ष्य शक्यं खलु [1]आशाबन्धेनात्मानं धारयितुम् ।)

राजा—एवमेतत् । बलवान् पुनर्मे मनसोऽभितापः ।

नद्या इव प्रवाहो विषमशिलासङ्कटस्खलितवेगः ।
विघ्नितसमागमसुखो मनसिशयः [2]शतगुणीभवति ।।८।।

विदू०—भो जहा परिहीअमाणेहिं अंगेहिं अहिअं सोहसि तहा अदूरे पिआसमागमं दे पेक्खामि । (भोः यथा परिहीयमानैरङ्गैरधिकं शोभसे तथा अदूरे प्रियासमागमं ते प्रेक्षे ।)

राजा—(निमित्तं सूचयन् ।) वयस्य—

वचोभिराशाजननै[3]-र्भवानिव गुरुव्यथम् ।
अयं मां स्पन्दितैर्बाहुराश्वासयति दक्षिणः ।।९।।

विदू०—ण क्खु अण्णहा बम्हणस्स वअणं ।
(न खल्वन्यथा ब्राह्मणस्य वचनम् )

(राजा सप्रत्याशस्तिष्ठति ।)

(ततः प्रविशति आकाशयानेनाभिसारिकावेषा उर्वशी चित्रलेखा च)

उर्वशी—(आत्मानमवलोक्य) हला चित्तलेहे ! अवि रोअदि दे अअं मम मोत्ता[4]हरणभूसिदो णीलंसुअपरिग्गहो अहिसारिआवेसो । (हला चित्रलेखे ! अपि रोचते ते अयं मम मुक्ताऽऽभरणभूषितः नीलांशुकपरिग्रहः अभिसारिकावेषः ।)

---

१. मेघदूत-१/१०, शा. ४ १५
२. 'त्वनुगुणो' शा. । पाठ एष पूर्वार्धप्रदिष्टदृष्टान्ताननुगुणः । द्र. कु. ५/८५
३. आशाजनन-शब्दाय शा. ७/२०-२१ ग.
४. अप्पाभरण० = अल्पाभरण० च. सा. पं. अ. । नीलांशुके मौक्तिकानि त्रिवेणीसौभाग्यमावहन्तीति 'मुक्ता'—पाठ एष हृदि सजते ।

चित्र०—सहि ! णत्थि मे वाआविहवो पसंसिदुं । इदुं तु चिंतेमि अवि णाम ग्रहं पुरूरवा भवेअं त्ति । (सखि ! नास्ति मे वाग्विभवः प्रशंसितुम् । इदं तु चिन्तयामि अपि नामाहं पुरूरवा भवेयमिति ।)

उर्व०—सहि ! मदणो क्खु तुमं आणवेदि । ता सिग्घं णेहि मं तस्स सुहअस्स[१] वसदिं । (सखि ! मदनः खलु त्वामाज्ञापयति । तच्छीघ्रं नय मां तस्य [१]सुभगस्य वसतिम् ।)

चित्र०—(विलोक्य) णं एदं परिवत्तिदं विअ केलाससिहरं पिअदमस्स दे भवणं उवगद म्ह । (नन्वेतत् परिवर्तितमिव[२] कैलासशिखरं प्रियतमस्य ते भवनमुपगते स्वः ।)

उर्व०—तेण हि पहावदो जाणीहि दाव कहिं सो मम हिअअचोरो किं वा अणुचिट्ठदि त्ति । (तेन हि प्रभावाज्जानीहि तावत्, क्व स मम हृदयचौरः, किं वानुतिष्ठतीति ।)

चित्र०—(ध्यात्वा विहस्यात्मगतम्) भोदु कीलिस्सं दा एदाए । (प्रकाशम्) हला दिट्ठो एसो मणोअहलद्धपिआसमाअमसुहं अणुहवंतो उवहोअक्खमे ओआसे चिट्ठदि त्ति । (भवतु । क्रीडिष्यामि तावदेतया । (प्रकाशम्) हला दृष्टो मया एष मनोरथलब्धप्रियासमागमसुखमनुभवन् उपभोगक्षमे अवकाशे तिष्ठतीति ।)

उर्व०—[३](विषादं नाटयति । निःश्वस्य) धण्णो सो जणो जो एव्वं भवे । (धन्यः स जनो य एवं भवेत् ।)

चित्र०—मुद्धे ! का उण चिंता तुए विणा अण्णपिआ-समाअमस्स ? (मुग्धे ! का पुनश्चिन्ता त्वया विना अन्यप्रियासमागमस्य ?)

उर्व०—(सोच्छ्वासम्) सहि अदक्खिणं संदेहदि मे हिअअं । (सखि ! अदक्षिणं संदेग्धि मे हृदम् ।)

---

१. स खलु सुभगो यमङ्गनाः कामयन्ते, मल्लि० मे. १।२९., द्र. ३६६ पृ. पादटि. 'सहि असमत्था क्खु अहं । तुं आणेहि तं सिग्घं । णेहि मं तस्स वा' । शा.

२. अत्र पाठः 'णं पडिबिंविअं जामिणीजमुणाए कैलाससिहरसस्सिरीअं' का. शा.

३. इतः परं 'एसो मणिहम्म' इत्यादेः पूर्वं च 'उर्वशी-अवेहि हिअअं मे ण पत्तीअदि । हला चित्तलेहे हिअए काऊण किं वि जप्पसि । पिअसमागमस्स अगदो एव्व अणेण अवहरिदं मे हिअअं'—शा. ।

चित्र०—एसो मणिहम्मिअप्पासादपिट्ठगदो वअस्समेत्तसहाओ राएसी। ता एहि उवसप्पाम णं। (एष मणिहर्म्यप्रासादपृष्ठगतः, वयस्यमात्र-सहायो राजर्षिः। तदेहि उपसर्पाव एनम्।)

(उभे अवतरतः)

राजा—वयस्य रजन्या सह विजृम्भते मदनबाधा।

उर्व०—अणिब्भिण्णत्थेण इमिणा वअणेण आकंपिदं मे हिअअं। ता अंतरिदा एव्व सुणाम से सेरालावं जाव णो संसअच्छेदो होदि। (अनिर्भिन्नार्थेनानेन वचनेन आकम्पितं मे हृदयम्। तदन्तर्हिते शृणुवः अस्य स्वैरालापं यावदावयोः संशयच्छेदो भवति।)

चित्र०—जं दे रोअदि। (यत्ते रोचते।)

विदू०—णं इमे अमिअगब्भा सेवीअंदु चंदवादा।
(नन्वेते अमृतगर्भाः सेव्यतां चन्द्रपादाः।)

राजा—वयस्य! एवमादिभिरनुपक्रम्योऽयमातङ्कः। पश्य—

कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो
न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः।
मनसिजरुजं सा वा दिव्या ममालमपोहितुं

उर्व०—(उरसि हस्तं दत्वा[1]।) का वा अवरा। (का वा अपरा।)

राजा— रहसि लघयेदारब्धा वा तदाश्रयिणी कथा ॥१०॥

उर्व०—हिअअ! मं उज्झिअ इदो संकंतेण तुए दाणिं फलं उवलद्धं।
(हृदय! मामुज्झित्वा इतः संक्रान्तेन त्वयेदानीं फलमुपलब्धम्।)

विदू०—आम्। हं वि पत्थयंतो जदा [2]मिट्ठहरिणीमंसभोअणं ण लहे तदा णं संकित्तअंतो आसासेमि अत्ताणं। (आम्। अहमपि प्रार्थयमानो यदा मिष्ट-हरिणीमांस-भोजनं न लभे तदैतत् सङ्कीर्तयन्नाश्वास-याम्यात्मानम्।)

---

१. कोष्ठकांशः सा. शा. पं० अ. न। 'उर्वशी—अवरा' शा. न।
२. सिहरिणीं रसालं वा. सा. शा. नि-४। मिष्टहरिणीमांसपाठः—

राजा—सम्पद्यते पुनरिदं भवतः ।

विदू०—भवं वि तं अइरेण पाविस्ससि । (भवानपि तामचिरेण प्राप्स्यसि ।)

राजा—सखे ! एवं मन्ये—।

चित्र०—सुणु, असंतुट्ठे सुणु (शृणु, असन्तुष्टे ! शृणु ।)

विदू०—कहं विअ । (कथमिव)

राजा—

अयं तस्या रथक्षोभादंसेनांसो निपीडितः ।
एकः कृती शरीरेऽस्मिन् शेषमङ्गं भुवो भरः ॥११॥

चित्र०—सहि ! किं दाणिं विलंबीअदि । (सखि ! किमिदानीं विलम्ब्यते ।)

उर्व०—(सहसोपसृत्य) हला ! अग्गदो वि मम ट्ठिदाए उदासीणो विअ महाराओ । (हला ! अग्रतोऽपि मम स्थिताया उदासीन इव महाराजः ।)

चित्र०—(सस्मितम्) अइ अदितुवरिदे ! अणक्खित्ततिरक्खरिणीआसि । (अयि अतित्वरिते ! अनाक्षिप्ततिरस्करिणिकासि ।)

( नेपथ्ये )

इदो इदो भट्टिणी । (इत इतो भट्टिनी)

( सर्वे कर्णं ददति । उर्वशी सह सख्या विषण्णा । )

विदू०—(सविस्मयम्) अइ भो ! उवट्ठिदा देवी । ता वाचंजमो होहि । (अयि भोः ! उपस्थिता देवी । तद् वाचंयमो भव ।)

राजा—भवानपि संवृताकारमास्ताम् ।

उर्व०—सहि ! किं एत्थ करणिज्जं । (सखि ! किमत्र करणीयम् ।)

---

— पुनः प्रतीयमानार्थसंपदतिशयस्पन्दसुभगतया सहृदयजननेदीयान् । मांसभोजनं च कालिदासे प्रसिद्धमेव शाकुन्तलस्य द्वितीयाङ्कारम्भे विदूषकस्यैवोक्त्या । शिखरिणीशब्दार्थश्च ध्वन्यालोक-३।४२—लोचने स्पष्टः । तत्रापि मांसचर्चाऽस्त्येव । सितादधिसंमिश्रः सेति च भावप्रकाशे ।

चित्र०—अलं आवेएण। अंतरिदा दाणिं वयं। विहिद-णिअम-वेसा राएसि-महिसी दीसदि। ता ण एसा इह चिरं चिट्ठिस्सदि। (अलमावेगेन। अन्तर्हिते इदानीमावाम्। विहितनियमवेषा राजर्षिमहिषी दृश्यते। तन्नैवेह चिरं स्थास्यति।)

(ततः प्रविशति औपहारिकहस्तपरिजना देवी चेटी च)

देवी—(परिक्रम्य चन्द्रमसमवलोक्य च) हंजे णिउणिए! एसो रोहिणी-संजोएण अहिअं सोहदि भअवं मिअलंछणो। (हञ्जे निपुणिके! एष रोहिणीसंयोगेनाधिकं शोभते भगवान् [1]मृगलाञ्छनः।)

चेटी—णं भट्टिणीसहिदो भट्टा विसेसरमणिज्जो। (ननु भट्टिनीसहितो भर्त्ता विशेषरमणीयः।)

(परिक्रामतः)

विदू०—(दृष्ट्वा।) भो ण जाणामि सोत्थिवाअणं मे देइ त्ति, आदु वदव्ववदेसेण मुक्करोसा भवेदो पणिपादलंघणं पमज्जिदुकाम त्ति। अज्ज मे अक्खीणं सुहदंसणा देवी। (भोः न जानामि स्वस्तिवाचनं मे ददातीति अथवा व्रतव्यपदेशेन मुक्तरोषा भवतः प्रणिपातलङ्घनं प्रमार्ष्टुकामेति। अद्य मे अक्ष्णोः शुभदर्शना देवी।)

राजा—(सस्मितम्) उभयमपि घटते। तथापि भवता यत् पश्चादभिहितं तन्मां प्रतिभाति। यदत्रभवती—

सितांशुका मङ्गलमात्रभूषणा<br>
पवित्रदूर्वाङ्कुरलाञ्छितालका।<br>
व्रतापदेशोज्झितगर्ववृत्तिना<br>
मयि प्रसन्ना वपुषैव लक्ष्यते ॥१२॥

देवी—(उपसृत्य) जेदु जेदु अज्जउत्तो। (जयतु जयतु आर्यपुत्रः।)

परि०—जेदु जेदु भट्टारओ। (जयतु जयतु भट्टारकः।)

विदू०—सत्थि भोदीए। (स्वस्ति भवत्यै)

राजा—स्वागतं देव्यै। (तां हस्तेन गृहीत्वोपवेशयति।)

---

१. पर्यायवक्रतेयं प्रतीयमानाधिक्षेपगर्भा।

उर्वशी—हला ठाणे क्खु इअं देवीसद्देण उवअरीअदि । ण किं वि परिहीअदि सचीए ओजस्सिदाए । (हला ! स्थाने खलु इयं देवीशब्देनोपचर्यते । न किमपि परिहीयते शच्या ओजस्वितया ।)

चित्र०—साहु असूआपरम्मुहं मंतिदं तुए । (साधु असूयापराङ्मुखं मन्त्रितं त्वया ।)

देवी—अज्जउत्तं पुरोकरिअ कोवि वदविसेसो मए संपादणीओ । ता मुहुत्तं उवरोधो सहीअदु । (आर्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया संपादनीयः । तन्मुहूर्तमुपरोधः सह्यताम् ।)

राजा—मा मैवम् । अनुग्रहः खलु अयम्, नोपरोधः ।

विदू०—ईरिसो सोत्थिवाअणवंतो उवरोहो बहुसो होदु । (ईदृशः स्वस्तिवाचनवानुपरोधो बहुशो भवतु ।)

राजा—किं नामधेयमेतद् देव्या व्रतम् ?

(देवी निपुणिकामुखमवेक्षते ।)

निपु०—भट्टा पिआणुप्पसादणं णाम । (भर्तः प्रियानुप्रसादनं नाम ।)

राजा—(देवीं विलोक्य) यद्येवम्—

अनेन कल्याणि मृणालकोमलं
व्रतेन गात्रं ग्लपयस्यकारणम् ।
प्रसादमाकाङ्क्षति यस्तवोत्सुकः
स किं त्वया दासजनः प्रसाद्यते ।।१३।।

उर्वशी—महंतो क्खु से इमस्सिं बहुमाणो । (महान् खलु अस्य एतस्यां बहुमानः ।)

चित्र०—अइ मुद्धे अण्णसंकंतप्पेमाणो णाअरा भारिआए अहिअं दक्खिणा होन्ति । (अयि मुग्धे ! अन्यसङ्क्रांतप्रेमाणो नागरा भार्यायामधिकं दक्षिणा भवन्ति ।)

देवी—(सस्मितम्) णं इमस्स वदपरिग्गहस्स अअं पहावो जं एत्तिअं मंताविदो अज्जउत्तो । (नन्वेतस्य व्रतपरिग्रहस्यायं प्रभावो यदेतावन्मन्त्रित आर्यपुत्रः ।)

विदू०—विरमदु भवं। त जुतं सुहासिदं पच्चाचक्खिदुं।
(विरमतु भवान्। न युक्तं सुभाषितं प्रत्याख्यातुम्।)

देवी—दारिआओ! आणेध ओवहारिग्रं जाव मणिहम्मिअपिट्ठगदे चंदपादे अच्चेमि। (दारिकाः आनयतऔपहारिकं यावन्मणिहर्म्यपृष्ठ-गतांश्चन्द्रपादानर्चामि।)

परि०—जं भट्टिणी आणवेदी। एसो गंधकुसुमादिउवहारो।
(यद् भट्टिनी आज्ञापयति। एष गन्धकुसुमाद्युपहारः।)

देवी—उवणेध। (नाटयेन गन्धपुष्पादिभिश्चन्द्रपादानभ्यर्च्य।) हंजे णिउणिए! इमे ओहारिअमोदए अज्जमाणवग्रं लंभावेहि। (हञ्जे निपुणिके! एतानौपहारिक-मोदकानार्यमाणवकं लम्भय।)

निपु०—जं भट्टिणी आणवेदी। अज्ज माणवअ एवं दाव दे।
(यद् भट्टिन्या-ज्ञापयति। माणवक इदं तावत् ते।)

विदू०—(मोदकशरावं गृहीत्वा।) सोत्थि भोदीए। वहुफलो दे एसो वदो भोदु। (स्वस्ति भवत्यै। वहुफलं तवैतद् व्रतं भवतु।)

देवी—अज्जउत्त इदो दाव। (आर्यपुत्र इतस्तावत्।)

राजा०—अयमस्मि।

देवी—(राज्ञः पूजामभिनीय प्राञ्जलिः प्रणम्य।) एसा अहं देवदामिहुणं रोहिणीमिअलंछणं सक्खीकरिअ अज्जउत्तं अणुप्पसादेमि 'अज्जप्पहुदि जं इत्थिअं अज्जउत्तो पत्थेदि, जा अ अज्जउत्तस्स समाअमप्पणयिणी ताए सह मए पीदिवंधेण वत्तिदव्वं त्ति। (एषाहं देवता मिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्यार्यपुत्रमनुप्रसादयामि—'अद्यप्रभृति यां स्त्रियमार्यपुत्रः प्रार्थयते, या चार्यपुत्रस्य समागमप्रणयिनी तया सह मया प्रीतिवन्धेन वर्तितव्यम्'इति।)

उर्व०—अम्महे ण आणे किंपरं से वअणं त्ति। मम उण विस्सासविसदं हिअअं संवुत्तं। (अहो न जाने किं परमस्या वचनमिति। मम पुन-र्विश्वासविशदं हृदयं संवृत्तम्।)

चित्र०—सहि महाणुहावाए पदिव्वदाए अब्भणुण्णादो अणंतराओ दे पिअसमाअमो हविस्सदि। (सखि! महानुभावया पतिव्रतया अभ्यनुज्ञातः अनन्तरायस्ते प्रियसमागमो भविष्यति।)

विदू०—(अपवार्य ।) [1]छिन्नहत्थे [2]मच्छे पलायिदे णिव्विण्णो धीवरो भणदि—गच्छ धम्मो मे हविस्सदि त्ति । (प्रकाशम्) भोदि ! किं [3]तारिसो दे पिओ तत्तभवं ? (छिन्नहस्ते मत्स्ये पलायिते निर्विण्णो धीवरो भणति—गच्छ धर्मो मे भविष्यतीति । (प्रकाशम्) भवति ! किं तादृशस्ते प्रियस्तत्रभवान् ?)

देवी—मूढ ! अहं क्खु अत्तणो सुहावसाणेण अज्जउत्तं णिव्वुदसरीरं कादुं इच्छामि । एत्तिएण चिंतेहि दाव पिओ ण वत्ति । (मूढ ! अहं खलु आत्मनः सुखावसानेनार्यपुत्रं निर्वृतशरीरं कर्तुमिच्छामि । एतावता चिन्तय तावत् प्रियो न वेति ।)

राजा—

दातुं वा प्रभवसि मामन्यस्मै कर्तुमेव वा दासम् ।
नाहं पुनस्तथा त्वयि यथा हि मां शङ्कसे भीरु ॥१४॥

देवी—होहि वा मा वा । जधाणिद्दिट्ठं संपादिदं मए पिआणुप्पसादणं णाम वदं । दारिआओ एध गच्छम्ह । (भव वा, मा वा । यथा-निर्दिष्टं संपादितं मया प्रियानुप्रसादनं नाम व्रतम् । दारिकाः एत गच्छाम ।)

(प्रस्थिता)

राजा—प्रिये ! न खलु प्रसादितोऽस्मि यदि संप्रति विहाय गम्यते ।

देवी—अज्जउत्त ! अलंघिदपुव्वो मए णिअमो ।
(आर्यपुत्र ! अलङ्घितपूर्वो मया नियमः ।)

(सपरिवारा निष्क्रान्ता)

उर्व०—सहि ! पिअकलत्तो राएसी । ण उण हिअअं णिवत्तेदुं सक्केमि । (सखि ! प्रियकलत्रो राजर्षिः । न पुनर्हृदयं निवर्तयितुं शक्नोमि ।)

---

१. छिन्नहत्थो सा. शा, पं. अ., भिन्नहस्ते च.

२. पुरठो वज्झे शा.

३. भोदि किं उदासीणो तत्रभवं । सा.

चित्र०—किं उण तुए [1]णिरासाए णिवत्तीअदि।
(किं पुनस्त्वया निराशया निवर्त्यते।)

राजा—(आसनमुपेत्य)वयस्य न खलु दूरं गता देवी।

विदू०—भण विस्सद्धं जं सि वत्तुकामो। असज्झो त्ति वेज्जेण आदुरो विअ सेरं मुत्तो भवं तत्तहोदीए। (भण विस्रब्धं यदसि वक्तुकामः। असाध्य इति वैद्येनातुर इव स्वैरं मुक्तो भवांस्तत्रभवत्या।)

राजा—अपि नामोर्वशी।

उर्व०—(आत्मगतम्)अज्ज किदत्था भवे। (अद्य कृतार्था भवेत्।)

राजा—

गूढा नूपुरशब्दमात्रमपि मे [2]कान्तं श्रुतौ पातयेत्
पश्चादेत्य शनैः कराम्बुजवृते कुर्वीत वा लोचने।
हर्म्येऽस्मिन्नवतीर्य साध्वसवशान्मन्दायमाना वलात्,
आनीयेत पदात् पदं चतुरया सख्या ममोपान्तिकम् ॥१५॥

चित्र—सहि! उव्वसि इमं दाव से मणोरहं संपादेहि।
(सखि! उर्वशी इमं तावदस्य मनोरथं सम्पादय।)

उर्व०—(ससाध्वसम्) भोदु। कीलिस्सं दाव। (भवतु क्रीडिष्यामि तावत्।)

(तिरस्करणीमपनीय पृष्ठतो गत्वा राज्ञो नयने संवृणोति।)
(चित्रलेखा तिरस्करिणीयपनीय विदूषकं संज्ञापयति।)

विदू०—भो वअस्स! का उण एसा। (भो वयस्य का पुनः एषा।)

राजा—(स्पर्शं रूपयित्वा) सखे! नारायणोरुसंभवा सेयं वरोरूः।

विदू०—कहं भवं अवगच्छदि। (कथं भवानवगच्छति।)

राजा—किमत्र ज्ञेयम्।

[3]अङ्गमनङ्गक्लिष्टं सुखयेदन्या न मे करस्पर्शात्।
नोच्छ्वसिति तपनकिरणैश्चन्द्रस्यैवांशुभिः[4] कुमुदम् ॥१६॥

१. त्थिरासो = स्थिराशः शा.
२. कान्ता सा. पं. अ.
३. अन्यत् कथमिव पुलकैः कलितं मम गात्रकं. शा.
४. चन्द्रस्येवांशुभिः सा. शा. पं. अ.। द्र. र. ६।३६, शा ५।२८.

उर्व०—(हस्तौ अपनीय उत्तिष्ठति । किञ्चिदपसृत्य)जेदु जेदु महाराम्रो ।
(जयतु जयतु महाराजः ।)

राजा—सुन्दरि ! स्वागतम् । (इत्येकासन उपवेशयति ।)

चित्र०—अवि सुहं वअस्सस्स । (अपि सुखं वयस्यस्य ।)

राजा—नन्वेतदुपपन्नम् ।

उर्व०—हला देवीए दिण्णो महाराओ । अदो से पणअवदी विअ सरीरसंपक्कं गदम्हि । मा क्खु मं पुरोभाइणि समत्थेहि । (हला ! देव्या दत्तो महाराजः । अतोऽस्य प्रणयवतीव शरीरसम्पर्कं गतास्मि । मा खलु मां [1]पुरोभागिनीं समर्थयस्व ।)

विदू०—कहं इह ज्जेव दुम्हाणं अत्थमिदो सुज्जो ।
(कथं इहैव युवयोरस्तमितः सूर्यः ।[2])

राजा—(उर्वशीमवलोकयन्)
देव्या दत्त इति यदि व्यापारं व्रजसि मे शरीरेऽस्मिन् ।
प्रथमं कस्यानुमते चोरितमयि मे त्वया हृदयम् ॥१७॥

चित्र०—वअस्स णिरुत्तरा एसा । संपदं मह विण्णवणा सुणीअदु ।
(वयस्य ! निरुत्तरा एषा । साम्प्रतं मम विज्ञापना श्रूयताम् ।)

राजा—अवहितोऽस्मि ।

चित्र०—वसंताणंतरं उण्हसमए भअवं सुज्जो मए उवचरिदव्वो ता जहा इअं मे पिअसही सग्गस्स ण उक्कंठेदि तहा वअस्सेण कादव्वं । (वसन्तानन्तरमुष्णसमये भगवान् सूर्यो मयोपचरितव्यः । तद् यथेयं मे प्रियसखी स्वर्गाय नोत्कण्ठते तथा वयस्येन कर्तव्यम् ।)

विदू०—किं वा सग्गे सुमरिदव्वं । ण वा तत्थ खादीअदि ण वा पीअदि । केवलं अणिमिसेहिं णअणेहिं मीणा विडंवीअंदि । (किं वा स्वर्गे स्मर्तव्यम् ? न वा तत्र खाद्यते, न वा पीयते । केवलमनिमिषैर्नयनैर्मीना विडम्ब्यन्ते ।)

---

१. स्वत एवाभिसरणशीलां कृताक्षिमीलनधाष्टर्यां वा । द्र. शाकुन्तले 'पुरोभागिनि' ५।२७.

२. आ सन्ध्याकालोदयादत्रैव तिष्ठतो येन देवीव्यतिकरं जानीथ इत्यर्थः ।

राजा—भद्रे !

अनिर्देश्यसुखः स्वर्गः कस्तं विस्मारयिष्यति ।
अनन्यनारीसामान्यो दासस्त्वस्याः पुरूरवाः ।।१८।।

चित्र०—अणुगहीदम्हि । हला उव्वसि अकादरा भविअ विसज्जेहि मं ।
(अनुगृहीतास्मि । हला उर्वशी अकातरा भूत्वा विसर्जय माम् ।)

उर्व०—(चित्रलेखां परिष्वज्य सकरुणम्) सहि मा क्खु मं विसुमरेहि ।
(सखि ! मा खलु मां विस्मर ।)

चित्र०—(सस्मितम्) वअस्सेण संगदा तुमं एव्व एदं मए जाचिदव्वा ।
(वयस्येन सङ्गता त्वयैवैतन्मया याचितव्या ।)
(राजानं प्रणम्य निष्क्रान्ता ।)

विदू०—दिट्ठिआ मणोरहसंपदीए वड्ढदि भवं ।
(दिष्ट्या मनोरथसम्पत्त्या वर्धते भवान् ।)

राजा—इयं तावद् वृद्धिर्मम । पश्य—

सामन्त-मौलिमणिरञ्जित-पादपीठम्,
एकातपत्रमवनेर्न तथा प्रभुत्वम् ।
अस्याः सखे ! चरणयोरहमद्य कान्तम्,
आज्ञाकरत्वमधिगम्य यथा कृतार्थः ।।१९।।

उर्व०—णत्थि मे वाआविहवो अदो पिअदरं मंतिदुं ।
(नास्ति मे वाग्विभवः अतः प्रियतरं मन्त्रयितुम् ।)

राजा—(उर्वशीं हस्तेनावलम्ब्य) अहा विरुद्धसंवर्धन ईप्सितलाभो नाम ।
यतः—

पादास्त एव शशिनः सुखयन्ति गात्रं
वाणास्त एव मदनस्य मनोऽनुकूलाः ।
संरम्भरूक्षमिव सुन्दरि ! यद् यदासीत्
त्वत्सङ्गमेन मम तत् तदिवानुनीतम्[1] ।।२०।।

उर्व— अवरद्धम्हि चिरकारिया अज्जउत्तस्स ।
(अपराद्धास्मि चिरकारिका आर्यपुत्रस्य ।)

---

१. ०नीतम् इत्येव पं. अ. नि–४ शा. सा.; ०नुलोमम्. पा०

राजा—सुन्दरि ! मा मैवम् ।

यदेवोपनतं दुःखात् सुखं तद् रसवत्तरम् ।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥२१॥

विदू०—भो सेविदा पदोस-रमणीआ चंदवादा । समओ क्खु दे वासघर-पवेसस्स । (भोः सेविताः प्रदोषरमणीयाश्चन्द्रपादाः । समयः खलु ते वासगृहप्रवेशस्य ।)

राजा०—तेन हि सख्यास्ते मार्गमादेशय ।

विदू०—इदो इदो भवदी । (इत इतो भवती ।)

(सर्वे परिक्रामन्ति )

राजा—सुन्दरि ! इयमिदानीं मेऽभ्यर्थना ।

उर्वशी—कीरिसी सा (कीदृशी सा)

राजा—

अनुपनतमनोरथस्य पूर्वं
शतगुणितेव गता मम त्रियामा ।
यदि तु तव समागमे तथैव
प्रसरति सुभ्रु ततः कृती भवेयम् ॥२२॥

(निष्क्रान्ताः सर्वे)

॥ इति तृतीयोऽङ्कः ॥

## ॥ [1]अथ प्रवेशकः ॥

[1]प्रक्षेपः (नेपथ्ये चित्रलेखासहजन्ययोः[2] प्रावेशिकी [3]आक्षिप्तिका)

पिअसहिविओअविमणा सहिसहिता वाउला समुल्लवइ ।
सूर-कर-फंस-विअसिअ-तामरसे [4]सरुवरुच्छंगे ॥१॥
(प्रियसखी-वियोगविमनाः सखी-सहिता व्याकुला समुल्लपति ।
सूर्यकरस्पर्शविकसित-तामरसे सरोवरोत्सङ्गे ॥)

(ततः प्रविशति विमनस्का चित्रलेखा सहजन्या च)

प्रक्षेपः—चित्र०—(प्रवेशानन्तरं द्विपदिकया[5] दिशोऽवलोक्य)

सहअरिदुक्खालिद्धअं सरवरअम्मि सिणिद्धअं ।
बाहोवग्गिअ-णअणअं तम्मइ हंसी-जुअलअं ॥२॥
(सहचरी-दुःखालीढं सरोवरे स्निग्धम् ।
वाष्पाववल्गित - नयनं ताम्यति हंसीयुगलकम् ॥)

सह०—(चित्रलेखां विलोक्य सखेदम्) सहि चित्तलेहे! मिआअमाण-सदवत्तस्स विअ दे मुहस्स छाआ हिअअस्स असुत्थदं सूएदि । ता कहेहि अणिव्विति[6]कालणं । दे समदुक्खा भविदुं इच्छामि । (सखि चित्रलेखे! म्लायमानशतपत्रस्येव ते मुखस्य छाया हृदयस्य असुस्थतां सूचयति । तत् कथय ते अनिर्वृतेः कारणम् । ते समदुःखा[7] भवितुमिच्छामि ।)

---

१. इयमस्मत्कृता योजना ।
२. अत्र षष्ठ्याः प्रावेशिकीगर्भिते प्रवेशेऽन्वयः । ३. गीतिविशेषः ।
४. अत्र कर्तृ-वाचकं किमपि नास्ति, द्वितीया च गाथा तृतीयया गतार्था ।
५. द्विपदिकया पाद-द्वय-मात्र-गत्या, न तु गीतिविशेषेण । तथा सति द्विपदिकाया दिगवलोकनानन्तरव्याहृतिकत्वं प्रसज्येत ।
६. णिव्वेदस्स सा. शा. च. पं अ. ७. द्र० रघु. ८।६५.
अत्रेदं बोध्यम्—अस्मिन् प्रवेशके इतः परतनेऽङ्के च या ३३ गाथाः, यश्च २९-३०-श्लोकमध्यश्लोकस्तेषां त्रिचतुरेष्वेव हस्तलेखेषु योगः । एतेषु बहूनामसंगतार्थत्वात्, पुनरुक्तार्थत्वात्, अस्पृष्टकालिदासकविकर्मसादृश्यभावाच्च एकमात्रपात्रोक्तिप्रायेऽस्मिन्नङ्के प्रावधत्वं निर्मितमिदं

चित्र०—(सकरुणम्) सहि ! अच्छरो[1]वारपज्जाएण इह भअवदो सुज्जस्स पादमूलोवट्ठाणं वट्टदि त्ति वलिअं क्खु उव्वसीए उवकंठिदम्हि । (सखि ! अप्सरो-वारपर्यायेणेह भगवतः सूर्यस्य पादमूलोपस्थानं वर्तत इति बलवत् खलु उर्वश्या उत्कण्ठितास्मि ।)

सह०—सहि ! जाणे वो अण्णोण्णसिणेहं । तदो तदो ? (सखि ! जानामि युवयोरन्योन्यस्नेहम् । ततस्ततः ?)

चित्र०—तदो इमाइँ दिवसाइँ को णु क्खु वुत्तंतो त्ति पणिधाणट्ठिदाए मए अच्चाहिदं उवलद्धं । (ततः एतेषु दिवसेषु को नु खलु वृत्तान्तः इति प्रणिधानस्थितया मया अत्याहितमुपलब्धम् ।)

सह०—(सावेगम्) सहि कीरिसं तं ? (सखि कीदृशं तत् ?)

चित्र०—(सकरुणम्) उव्वसी किल तं रदि-सहाअं राएसिं अमच्चेसु णिवेसिद-रज्जधुरं गेण्हिअ गंधमादणवणं विहरिदुं गदा । (उर्वशी किल तं रतिसहायं राजर्षिममात्येषु निवेशितराज्यधुरं गृहीत्वा गन्धमादनवनं विहर्तुं गता ।)

सह० --(सश्लाघम् ) सो णाम संभोओ जो तारिसेसु पदेसेसु । तदो तदो ? (स नाम संभोगो यस्तादृशेषु प्रदेशेषु । ततस्ततः ?)

चित्र०—तहिं क्खु मंदाइणीए पुलिणेसु गदा सिअदापव्वद-केलीहिं कीलमाणा विज्जाधरदारिआ उदयवदी णाम देण राएसिणा णिज्झाइद त्ति कुविदा उव्वसी । (तत्र खलु मन्दाकिन्याः पुलिनेषु गता सिकतापर्वतकेलीभिः क्रीडन्ती विद्याधरदारिका उदयवती नाम तेन राजर्षिणा निध्यातेति कुपिता उर्वशी ।)

सह०—होदव्वं । दूरारूढो क्खु पणओ असहणो । तदो तदो ? (भवितव्यम् । दूरारूढः खलु प्रणयोऽसहनः । ततस्ततः ?)

चित्र०—तदो सा भट्टिणो अणुणअं अप्पडिवज्जमाणा गुरुसाव-संमूढ-हिअआ विसुमरिद-देवदा-णिअमा इत्थिआ-जण-परिहरणिज्जं कुमारवणं पविट्ठा । पवेसाणंतरं अ काणणोवंत-वत्ति-लदाभावेण

---

—प्रयोक्तृजनैकयोजितत्वमेवोत्पश्यामः । संवादी चात्र काटयवेमः । सर्प-चुच्छुन्दरीन्यायेन निविडं तु प्रविष्टास्ता एता न नोऽत्र संगृह्णीमहे, किन्तु प्रक्षेपधियैव विजातीयत्वेन । १. वारः पर्यायः ।

परिणदं से रूवम् । (ततः सा भर्तुः अनुनयमप्रतिपद्यमाना गुरुशाप-संमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा । प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतमस्या रूपम् ।)

सह०—(सशोकम्) सव्वधा णत्थि विहिणा अलंघणिज्जं णाम । जेण तारिसस्स अणुराअस्स अअं एक्कपदे अण्णारिसो एव्व पलिणामो संवुत्तो । अह किमवत्थो सो राएसी ? (सर्वथा नास्ति विधेरलङ्घनीयं नाम । येन तादृशस्यानुरागस्यायमेकपदे अन्यादृशः एव परिणामः संवृत्तः । अथ किमवस्थः स राजर्षिः ?)

चित्र०—सो वि तस्सिं एव्व काणणे पिअदमं विचिण्णतो अहो-रत्ते अदिवाहेदि । (नभोऽवलोक्य) इमिणा उण णिव्वुदाणं वि उक्कंठाकारिणा मेहोदएण [1]अणत्थाहीणो हविस्सदि । (सोऽपि तस्मिन्नेव कानने प्रियतमां विचिन्वन् अहोरात्रानतिवाहयति । (नभोऽवलोक्य) एतेन पुनर्निर्वृतानामप्युत्कण्ठाकारिणा[2] मेघोदयेनानर्थाधीनो भविष्यति ।)

प्रक्षेपः (नेपथ्ये जम्भलिका[3])

सहअरिदुक्खालिद्धअं सरवरअंमि सिणिद्धअं ।
अविरलवाहजलोल्लअं तम्मइ हंसी-जुअलअं ॥३॥

(सहचरीदुःखालीढं सरोवरे स्निग्धम् ।
अविरलबाष्पजलार्द्रं ताम्यति हंसीयुगलम् ॥)

सह०—सहि ! ण क्खु तारिसा आकिदिविसेसा चिरं दुक्खभाइणो होन्ति । तां अवस्सं किंपि अणुग्गहणिमित्तं भूवोवि समाअमकारणं हविस्सदि । (प्राचीदिशं विलोक्य) ता एहि । उदअंमुहस्स भअवदो सुज्जस्स उवठ्ठाणं करेम्ह । (सखि ! न खलु तादृशा आकृतिविशेषाश्चिरं दुःखभागिनो भवन्ति । तदवश्यं किमप्यनुग्रहनिमित्तं भूयोऽपि समागमकारणं भविष्यति (प्राचीदिशं विलोक्य) तदेहि । उदयोन्मुखस्य भगवतः सूर्यस्योपस्थानं कुर्वः)

(निष्क्रान्ते)

---

१. अप्पदीआरो सा. शा. रं. २. द्र. मे. १।३ ३. गीतिविशेषः ।

प्रक्षेपः (नेपथ्ये [1]खण्डधारा)
चिंतादुम्मिअमाणसिआ सहअरिदंसण-लालसिआ ।
विअसिअ-कमल-मणोहरए विहरइ हंसी सरवरए ॥४॥
(चिन्तादूनमानसिका सहचरीदर्शनलालसिका ।
विकसितकमलमनोहरे विहरति हंसी सरोवरे ॥)

॥ इति प्रवेशकः ॥

## अथ[2] चतुर्थोऽङ्कः

प्रक्षेपः (नेपथ्ये पुरूरवसः प्रावेशिकी आक्षिप्तिका[3])
गहणं गइंदणाहो पिअविरहुम्माअ-पअलिअ-विआरो ।
विसइ तरुकुसुमकिसलअभूसिअणिअदेहपब्भारो ॥५॥
(गहनं गजेन्द्रनाथः प्रियाविरहोन्मादप्रकटितविकारः ।
विशति तरुकुसुमकिसलयभूपितनिजदेहप्राग्भारः ॥)

(ततः प्रविशति आकाशबद्धलक्ष्यः उन्मत्तवेषो राजा)

राजा—(सक्रोधम्) आः दुरात्मन् रक्षः! तिष्ठ तिष्ठ। मे प्रियतमामादाय गच्छसि ?

(विलोक्य)—हन्त! शैलशिखराद् गगनमुत्पत्य बाणैर्मामभिवर्षति ।

प्रक्षेपः (नेपथ्ये)
हिअआहिअपिअदुक्खओ सरवरए धुदपक्खओ ।
वाहोवग्गिअणअणओ तम्मइ हंसजुआणओ ॥६॥
(हृदयाहितप्रियादुःखः सरोवरे धुतपक्षः ।
बाष्पापवल्गितनयनस्ताम्यति हंसयुवा ॥)

(लोष्टं गृहीत्वा हन्तुं धावन् द्विपदिकया विभाव्य सकरुणम्)

---

१. खण्डधारा गीतिभेदः, खँडारधार इति तद्भाषा ।
२. इयमस्मद्योजना ।
३. गीतिभेदः । पुरूरवःप्रवेशं सूचयन्तीति भावः ।

कथम्—

नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम्।
अयमपि पटुर्धारासारो न वाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥१॥

प्रक्षेपः (नेपथ्ये द्विपदिकया निस्स्वस्य)

मइँ जाणिअँ मिअलोअणी, णिसअरु[1] कोइ हरेइ।
जाव णु णवतडसामलि, धाराहरु वरिसेइ ॥७॥
(मया ज्ञातं मृगलोचनां निशाचरः कोऽपि हरति।
यावन्नु नवतडिच्छ्यामलो धाराधरो वर्षति ॥)

(विचिन्त्य सकरुणम्) क्व नु खलु सा रम्भोरूर्गता स्यात्?

तिष्ठेत् कोपवशात् प्रभावपिहिता, दीर्घं न सा कुप्यति,
स्वर्गायोत्पतिता भवेत्, मयि पुनर्भावार्द्रमस्या मनः।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं,
सा चात्यन्तमदर्शनं नयनयोर्यातेति कोऽयं विधिः ॥२॥

(दिशोऽवलोक्य सनिःश्वासम्।) अये! परावृत्तभागधेयानां दुःखं दुःखानुबन्धि। कुतः—

अयमेकपदे तया वियोगः
प्रियया चोपनतः सुदुःसहो मे।
नववारिधरोदयादहोभि-
र्भवितव्यं च निरातपत्वरम्यैः ॥३॥

प्रक्षेपः (नेपथ्ये [2]चर्चरी)

जलहर संहर एहु कोपइँ आढत्तओ
अविरलधारासारदिसामुहकंतओ
ए मइँ पुहवि भमंतो जइ पिअँ पेक्खिहिमि
तव्वे जं जु करीहिसि तं तु सहीहिमि ॥८॥

---

१. उकारान्तप्रकृतिकत्वात् प्राकृतमिदमपभ्रंशतया परिणतम्। ततश्च प्रसिद्धिः 'कालिदासो ह्यपभ्रंशस्याद्यः कवि'-रिति। वस्तुतस्त्वेकपात्रोक्तिप्रायेऽस्मिन्नङ्के रसधारां शबलयितुमसौ परवर्त्तिनां कुशीलवप्रायाणां प्रक्षेपयोगः।
२. गीतविशेषः रं.

(जलधर संहरैतं कोपमाज्ञप्तः
अविरल–धारासार–दिशामुख–कान्तः ।
ए अहं पृथ्वीं भ्रमन् यदि प्रियां प्रेक्षे
तदा यद् यत् करिष्यसि तत् तत् सहिष्ये ॥)

(विहस्य) मुधैव खलु मया मनसः परितापवृद्धिरुपेक्ष्यते । यथा मुनयोऽपि व्याहरन्ति—राजा कालस्य कारणमिति । तत् किमहं जलदसमयं न प्रत्यादिशामि ?

प्रक्षेपः (नेपथ्ये [१]चर्चरी)

गंधुम्माइअ महुअरगीएहिं
वज्जंतेहिं परहुअ तूरेहिं ।
पसरिअपवणुव्वेलिअपल्लवणिअरु
सुललिअविविहपआरेहिं णच्चइ कप्पअरु ॥९॥
(गन्धोन्मादितमधुकरगीतैः,
वाद्यमानैः परभृततूर्यैः
प्रसृतपवनोद्वेल्लितपल्लवनिकरः
सुललितविविधप्रकारं नृत्यति कल्पतरुः ॥)

अथवा न प्रत्यादिशामि जलदसमयं यत् प्रावृषेण्यैरेव लिङ्गैर्मम राजोपचारः सम्प्रति ।

विद्युल्लेखा-कनकरुचिरं श्रीवितानं ममाभ्रं
व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि ।
घर्मच्छेदात् पटुतरगिरो वन्दिनो नीलकण्ठाः
धारासारोपनयनपरा [२]नैगमाः सानुमन्तः ॥४॥

भवतु । किमेवं परिच्छदश्लाघया ? यावदस्मिन् कानने तां प्रियामन्वेषयामि ।

प्रक्षेपः (नेपथ्ये [३]पाठस्यान्ते भिन्नकः)

दइआरहिओ अहिअं दुहियो विरहाणुगओ परिमंथरओ ।
गिरिकाणणए कुसुमुज्जलए गजजूहवई बहुझीणगई ॥१०॥

---

१. गीतिभेदः रं २. नैगमा वणिजः । 'नैगमाः क्षुर-वेदान्त-वणिग्वाणिज्य-नागरे' रं.
३. पाठः 'पाठो वाद्याक्षरोत्करः' इति भरतः-रं., भिन्नको गीतिभेदः रं.

(दयितारहितोऽधिकं दुखितो विरहानुगतः परिमन्थरः ।
गिरिकानने कुसुमोज्ज्वले गजयूथपतिर्वहुक्षीणगतिः ॥)

(परिक्रम्यावलोक्य च) हन्त हन्त ! व्यवसितस्य मे संदीपनमिव संवृत्तम् । कुतः—

आरक्तराजिभिरियं कुसुमैर्नवकन्दली सलिलगर्भैः ।
कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः ॥५॥

इतो गतेति कथं नु तत्रभवती मया सूचयितव्या । यतः—

पद्भ्यां स्पृशेद् वसुमतीं यदि सा सुगात्री
मेघाभिवृष्टसिकतासु वनस्थलीषु ।
पश्चान्नता गुरुनितम्वतया[1] ततोऽस्या
दृश्येत चारुपदपङ्क्तिरलक्तकाङ्का ॥६॥

(परिक्रम्यावलोक्य च सहर्षम्) उपलब्धमुपलक्षणम् येन तस्याः कोपनाया मार्गोऽनुमीयते ।

हृतोष्ठरागैर्नयनोदविन्दुभिः, निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ॥७॥

भवतु । आदास्ये तावत् । (परिक्रम्य विभाव्य च सास्रम्) कथं सेन्द्रगोपं नवशाद्वलमिदम् ? कुतो नु खलु निर्जने वने प्रियाप्रवृत्तिरवगमयितव्या । शिखिनं दृष्ट्वा)

अये ! अयमासारोच्छ्वसितशैलेयस्थलीपाषाणमारूढः—

आलोकयति पयोदान् प्रवलपुरोवातताडितशिखण्डः ।[2]
केकागर्भेण शिखी दूरोन्नमितेन कण्ठेन ॥८॥

(उपेत्य) भवतु । यावदेनं पृच्छामि ।

प्रक्षेपः (नेपथ्ये खण्डकः[3])

संपात-विसूरणओ तुरिअं परवारणओ ।
पिअअम-दंसण-लालसओ गअवरु विम्हिअ-माणसओ ॥११॥

---

१. द्र. शा. ३।६. २. ०नर्त्तित० पा० ३. गीतिविक्षेपः रं.

(संप्राप्तविसूरणः त्वरितं परवारणः ।
प्रियतमंदर्शनलालसो गजवरो विस्मितमानसः ॥
तेनाखण्डकान्तरे[1] चर्चरी

वंहिण पइँ इअ अब्भत्थिअम्मि ओअक्खहि मं ता
एत्थ वणे भम्मंते जइ पइँ दिट्ठी सा महु कंता ।
णिसम्महि मिअंकसरिसवअणा हंसगई
ए चिण्हे जाणीहिसि आअक्खिउ तुज्झ मइँ ॥१२॥

(वर्हिण ! त्वामित्यभ्यर्थये आचक्ष्व मे तत्
अत्र वने भ्रमता यदि त्वया दृष्टा सा मम कान्ता ।
निशामय मृगाङ्कसदृशवदना हंसगतिः
अनेन चिह्नेन ज्ञास्यस्याख्यातं तव मया ॥)

नीलकण्ठ [2]वृतोत्कण्ठा वनेऽस्मिन् वनिता त्वया ।
दीर्घापाङ्गा सितापाङ्ग ! दृष्टा दृष्टिक्षमा भवेत् ॥९॥

(विचिन्त्य) कथमदत्वैव प्रतिवचनं नर्तितुं प्रवृत्तः ? किं नु खलु हर्ष-कारणमस्य ? (विचिन्त्य) आं, ज्ञातम्—

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽस्य[3] जातः ।
रतिविगलितवन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष वर्ही[4] ॥१०॥

भवतु । परव्यसननिवृत्तं न खलु एनं पृच्छामि । (परिक्रम्यावलोक्य च) अये इयमातपान्त-संधुक्षितमदा जम्बूविटपमध्यास्ते परभृता । विहङ्गमेषु पण्डिता खलु जातिरेषा । यावदेनामभ्यर्थये ।

प्रक्षेपः (नेपथ्ये खुरकः[5])

विज्जज्झरकाणणलीणओ दुक्खविणिग्गअबाहुप्पीडओ ।
दूरोसारिअहिअआणंदओ अंबरमाणे भमइ गइंदओ ॥१३॥

---

१. तेना इति मङ्गलार्थमक्षरद्वयम्- रं., खण्डकश्चर्चरी च गीतिविशेषौ ।
२. ममो०-सर्वे, हरोत्कण्ठां-पा० ३. अद्य पा. ४. र. ९।६७.
५. खुरको नृत्यविशेषः रं.

(विद्याधरकाननलीनो दुःखविनिर्गतबाष्पोत्पीडः ।
दूरोत्सारितहृदयानन्दोऽम्बरमानेन भ्रमति गजेन्द्रः ॥)

(नर्तित्वा [१]वलन्तिकयोपसृत्य जानुभ्यां च स्थित्वा)
(खुरकान्ते चर्चरी) हेले हेले ।

परहुअ महुरपलाविणि कंती णंदणवणसच्छंद-भमंती ।
जइ पइँ पिअअम सा महु दिट्ठी ता आअक्खहि महु परपुट्ठी ॥१४॥

(परभृते ! मधुरप्रलापिनि कान्ते नन्दनवने स्वच्छन्दं भ्रमन्ती ।
यदि त्वया प्रियतमा सा मम दृष्टा तर्ह्याचक्ष्व मे परपुष्टे ।)

भवति ! ([१]वलन्तिकयोपसृत्य)

त्वां कामिनो मदनदूतिमुदाहरन्ति
मानावभङ्गनिपुणं त्वममोघमस्त्रम् ।
तामानय प्रियतमां मम वा समीपं
मां वा नयाशु कलभाषिणि यत्र कान्ता ॥११॥

किमाह भवती । कथं त्वाम् एवमनुरक्तं विहाय गता इति (अग्रतोऽवलोक्य) शृणोतु भवती—

कुपिता, न तु कोपकारणं, सकृदप्यात्मगतं, स्मराम्यहम् ।
प्रभुता रमणेषु योषितां नहि भावस्खलितान्यपेक्षते ॥१२॥

(ससंभ्रममुपविश्य अनन्तरं जानुभ्यां स्थित्वा 'कुपिता'इति पुनः पठित्वा उत्थाय विलोक्य च) कथं कथाविच्छेदकारिणी स्वकार्य एव व्यासक्ता ।
अथवा—

महदपि परदुःखं शीतलं सम्यगाहुः
प्रणयमगणयित्वा यन्ममापद्गतस्य ।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता
फलमभिनवपाकं राजजम्बूद्रुमस्य ॥१३॥

एवंगतेऽपि प्रियेव मे मञ्जुस्वनेति न मे कोपोऽस्याम् । सुखमास्तां भवती । इतो वयं साधयामस्तावत् ।

(परिक्रम्य कर्णं दत्वा) अये दक्षिणेन वनधारां प्रियाचरणनिक्षेपशंसी नूपुररवः श्रूयते । यावदेनमनुगच्छामि (परिक्रम्य)

---

१. वलन्तिका रागविशेषः—रं., गतिगतमञ्चितमिति वयम् ।

प्रक्षेपः (नेपथ्ये [1]ककुभेन पडुपभङ्गाः[2])

पिअअमविरहकिलामिअ—वअणो
अविरल-वाह-जलाउल - णअणो ।
दूसह-दुक्ख - विसंठुल - गमणो
पसरिअउरुतादी विअअंगो
अहिअं दुम्मि-अमाणसओ
काणणे भमइ गइंदओ ॥१५॥

(प्रियतमाविरहक्लान्तवदनः अविरलवाष्पजलाकुलनयनः ।
दुःसहदुःखविसंष्ठुलगमनः प्रसृतगुरु-ताप-दीप्ताङ्गः ।
अधिकं दूनमानसः कानने भ्रमति गजेन्द्रः ॥)

(द्विपदिका)

पिअकरिणी-विच्छोइअओ गुरुसोआणल-दीविअओ ।
वाइजलाउललोअणओ करिवरु भमइ समाउलओ ॥१६॥
(प्रियकरिणीवियुक्तो गुरुशोकानलदीप्तः ।
वाष्प-जलाकुल-लोचनः करिवरो भ्रमति समाकुलः ॥)

(अनन्तरं द्विपदिकया दिशोऽवलोक्य सकरुणम्) हा धिक् कष्टम् ।

मेघश्यामा दिशो दृष्ट्वा मानसोत्सुकचेतसाम्[3] ।
कूजितं राजहंसानां नेदं नूपुरशिञ्जितम् ॥१४॥

भवतु । यावदेते मानसोत्सुकाः[3] पतत्रिणः सरसोऽस्मान्नोत्पतन्ति ताव-देतेभ्यः प्रियाप्रवृत्तिरवगमयितव्या । (उपसृत्य) भो ! भो ! जल-विहङ्गमराज !

पश्चात् सरः प्रतिगमिष्यसि मानसं तत्
पाथेयमुत्सृज विसं[3] ग्रहणाय भूयः ।
मां तावदुद्धर शुचो दयिताप्रवृत्त्या
स्वार्थात् सतां गुरुतरा प्रणयिक्रियैव[4] ॥१५॥

अये ! यथोन्मुखो विलोकयति तथा मया न लक्षितेत्येवं वचनमाह ।

(उपविश्य)

---

१. ककुभो नाम रागः रं. २. उपभङ्गा अवच्छेदाः रं. ३. मे. १।११
४. द्र. मे. १।५, स्पष्टमेतेन मेघेऽत्र प्रणयशब्दपाठस्यौचित्यम्, वि. ४।१३,३८, र. २।३६, १६।२३, १९।२१.

प्रक्षेपः (चर्चरी)

रे रे हंसा किं गोइज्जइ
(नर्त्तित्वा उत्थाय च)
गइअणुसारें महँ लक्खिज्जइ।
कइँ पइँ सिक्खिउ ए गइ लालस
सा पइँ दिट्ठी जहणभरालस ॥१७॥

(रे! रे! हंस किं गोपाय्यते गत्यनुसारेण मया लक्ष्यते।
केन तव शिक्षिता एषा गतिः लालसा सा त्वया दृष्टा जघनभरालसा ॥)

यदि हंस गता न ते नतभ्रूः
सरसो रोधसि दर्शनं प्रिया मे।
मदखेलपदं कथं नु तस्याः
सकलं चौर! गतं त्वया गृहीतम् ॥१६॥

अतश्च—

(अञ्जलिं बद्ध्वा)

हंस प्रयच्छ मे कान्तां गतिस्त्वस्यास्त्वया हृता।
विभावितैकदेशेन देयं यदभियुज्यते ॥१७॥

(विहस्य) एष चौरानुशासी राजेति भयादुत्पतितः। यावदन्यमवकाशमवगाहिष्ये। (परिक्रम्यावलोक्य च)

अयमिदानीं प्रियासहायश्चक्रवाकः। तावदेनं पृच्छामि

प्रक्षेपः (नेपथ्ये अतोऽन्तरे)

(कुटिलिका[1]) (मल्लघटी[2])
मंमररणिअमणोहरए कुसुमिअतरुवरपल्लवए।

(चर्चरी)

दइआविरहुम्माइअओ काणणे भमइ गइंदओ ॥१८॥
(मर्मररणितमनोहरे कुसुमिततरुवरपल्लवे।
दयिताविरहोन्मादितः कानने भ्रमति गजेन्द्रः ॥)

प्रक्षेपः (द्विलयान्ते[3] चर्चरी)

गोरोअणा-कुंकुमवण्णा चक्का भणइ महँ।
महुवासर-कीलंती धणिआ ण दिट्ठी पइँ ॥१९॥

---

१-२. नाट्यभेदौ—रं. ३. लयः नृत्तगीतवाद्यानां साम्यम्-रं.

(गोरोचनाकुङ्कुमवर्ण ! चक्र ! भण माम् ।
मधुवासरे क्रीडन्ती धन्या न दृष्टा त्वया ॥)

(चर्चरिकयोपसृत्य जानुभ्यां स्थित्वा)

रथाङ्गनामन् वियुतो रथाङ्गश्रोणिबिम्बया ।
अयं त्वां पृच्छति रथी मनोरथशतैर्वृतः ॥१८॥

कथं कः क[1] इत्याह माम् । मा तावत् । न खलु विदितोऽहमस्य ।

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥१९॥

कथं तूष्णीं स्थितः । भवतु । उपालभे तावदेनम् ।

सरसि नलिनीपत्रेणापि त्वमावृतविग्रहां
ननु सहचरीं दूरे मत्वा विरौषि समुत्सुकः ।
इति च भवतो जायास्नेहात् पृथक्स्थितिभीरुता
मयि च विधुरे भावः [2]कान्ताप्रवृत्तिपराङ्मुखः ॥२०॥

सर्वथा मदीयानां भागधेय-विपर्ययाणामयं प्रभावप्रकाशः । यावद् अन्यमत्रकाशम् अवगाहिष्ये । (पदान्तरे स्थित्वा) भवतु न तावद् गच्छामि । (परिक्रम्यावलोक्य च)

इदं रुणद्धि मां पद्ममन्तःकूजितषट्पदम् ।
मया दष्टाधरं तस्याः ससीत्कारमिवाननम् ॥२१॥

भवतु । इतो गतस्य मेऽनुशयो मा भूदित्यस्मिन्नपि कमलसेविनि मधुकरे प्रणयं करिष्ये ।

प्रक्षेपः (नेपथ्ये अर्धद्विचतुरस्रः[3])
एक्कक्कमवड्ढिअगुरुअरपेम्मरसें ।
सरे हंसजुआणओकीलइ कामरसें ॥२०॥
(एकक्रमवर्धितगुरुतरप्रेमरसेन ।
सरसि हंसयुवा क्रीडति कामरसेन ॥)

---

१. अनुरणनमिदं चक्रवाकरुतीनाम् २. कोऽयं, कीदृक् पा०

३-४. नन्द्यावर्त्तापरनामकः संस्थानविशेषोऽर्धचतुरस्रः । स एव द्विवारं कृतत्वादर्धद्विचतुरस्रः—रं.

([1]चतुरस्रकेणोपसृत्य)

मधुकर ! मदिराक्ष्याः शंस तस्याः प्रवृत्ति
(विभाव्य) वरतनुरथवासौ नैव दृष्टा त्वया मे ।
यदि सुरभिमवाप्स्यस्तन्मुखोच्छ्वासगन्धं
तव रतिरभविष्यत् पुण्डरीके किमस्मिन् ।।२२।।

साधयामस्तावत् । (द्विपदिकया परिक्रम्यावलोक्य च)

अये! एष नीपस्कन्धनिषण्णहस्तः करिणीसहायो नागराजस्तिष्ठति । अस्मात् प्रियोदन्तमुपलप्स्ये । यावदेनमुपसर्पामि ।

प्रक्षेपः (नेपथ्ये [2]कुटिलिका) करिणी-विरह-संताविअओ ।
(मल्लघटी[3]) काणणे गंधुद्धुअ महुअरु ।।२१।।

(करिणीविरहसंतापितः । कानने गन्धोद्धतमधुकरः ।।)

(विलोक्य) अथवा न त्वरा कार्या । न तावदयमुपसर्पणकालः ।

अयमचिरोद्गतपल्लवमुपनीतं प्रियकरेणुहस्तेन ।
अभिलषतु तावदासवसुरभिरसं सल्लकीभङ्गम् ।।२३।।

(क्षणमात्रं स्थित्वा । अवलोक्य) हन्त कृताह्निकः संवृत्तः । भवतु । समीपमस्य गत्वा पृच्छामि ।

प्रक्षेपः (चर्चरी)

हउँ पइँ पुच्छिमि आअक्खहि
गअवरु ललिअपहारें णासिअतरुवरु ।
दूरविणिज्जिअ ससहरुकंती
दिट्ठि पिआ पइँ सम्मुह जंती ।।२२।।

---

१. चतुरस्रो नन्द्यावर्त्तार्धसंस्थानविशेषः—रं.

२. कुलिका रं शा., कुलिका गीतिभेदः शा०, कुटिलिका नाट्यभेदः इति ४।१८ गाथायां रं.

३. मन्दघटी-रं शा., सा च गीतिः शा. । मल्लघटी पुनर्नाट्यभेद इति ४।१८ गाथायां रं.

(अहं त्वां पृच्छामि आचक्ष्व गजवर !
ललितप्रहारेण नाशिततरुवर ! ।
दूर–विनिर्जित–शशधर–कान्तिः
दृष्टा प्रिया त्वया सम्मुखं यान्ती ॥)

(पदद्वयं[1] पुरतः उपसृत्य)

मदकल ! युवतिशशिकला गजयूथप ! यूथिकाशवलकेशो ।
स्थिरयौवना स्थिता ते दूरालोके सुखालोका ? ॥२४॥

(आकर्ण्य सहर्षम्) अहह अनेन भवतः स्निग्धमन्द्रेण गर्जितेन प्रियोपलम्भशंसिना समाश्वासितोऽस्मि । साधर्म्याच्च त्वयि मे भूयसी प्रीतिः ।

मामाहुः पृथिवीभृतामधिपतिं, नागाधिराजो भवान्,
अव्युच्छिन्न-पृथुप्रवृत्ति भवतो दानं, ममाप्यर्थिषु ।
स्त्रीरत्नेषु ममोर्वशी प्रियतमा, यूथे तवेयं वशा
सर्वं मामनु ते, प्रियाविरहजां त्वं तु व्यथां माऽनुभूः ॥२५॥

सुखमास्तां भवान् । साधयामस्तावत् । (द्विपदिकया परिक्रम्य पार्श्वतो दृष्टिं दत्वा)

अये ! अयमसौ सुरभिकन्दरो नाम विशेषरमणीयः सानुमानालोक्यते । प्रियश्चायमप्सरसाम् । अपि नाम सा सुतनुरस्योपत्यकायामुपलभ्येत (परिक्रम्यावलोक्य च ) कथमन्धकारः ? भवतु विद्युत्प्रकाशेनावलोकयामि । हन्त ! मदीयैर्दुरितपरिणामैर्मेघोऽपि शतह्लदाशून्यः संवृत्तः, तथापि शिलोच्चयमेनमपृष्ट्वा न निवर्तिष्ये ।

प्रक्षेपः (खण्डकः[2])

पसरिअखरखुरदारिअमेइणि वणगहणे अविचल्लु ।
परिसप्पइ पेच्छह लीणो णिअकज्जुज्जुअ कोलु ॥२३॥

(प्रसृतखरदारितमेदिनिर्वनगहनेऽविचलः ।
परिसर्पति पश्यत लीनो निजकार्योद्युक्तः कोलः ॥)

अपि वनान्तरमल्पकुचान्तरा श्रयति पर्वत-पर्वसु संनता ।
इदमनङ्गपरिग्रहमङ्गना पृथुनितम्ब ! नितम्बवती तव ॥२६॥

---

१. पदद्वयमेवेदं वस्तुतो रङ्गनिर्देशे द्विपदिका । २. गीतभेदः रं.

कथं तूष्णीमेवास्ते । शङ्के विप्रकर्षान्न श्रृणोतीति । भवतु । समीपेऽस्य गत्वा पुनरेनं पृच्छामि ।

प्रक्षेपः (चर्चरी)

फलिह-सिलाअल-णिम्मलणिज्झरु बहुविहकुसुमें विरइअसेहरु ।
किंणरमहुरुग्गीअमणोहरु देक्खावहि महु पिअअम महिअरु ॥२४॥

(स्फटिकशिलातलनिर्मलनिर्झर ! बहुविधकुसुमैर्विरचितशेखर ।
किंनरमधुरोद्गीतमनोहर ! दर्शय मम प्रियतमां महीधर ॥)

(परिक्रम्य अञ्जलिं बद्ध्वा ।)

सर्वक्षितिभृतां नाथ ! दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ॥२७॥

(नेपथ्ये तदेवाकर्ण्य सहर्षम्) कथं यथाक्रमं दृष्टा इत्याह । भवानपि अतः प्रियतरं श्रृणोतु । क्व तर्हि मे प्रियतमा ? (पुनरेव सर्वक्षितिभृतामित्यादि पठति, नेपथ्ये तदेवाकर्ण्य । विभाव्य च) हा धिक् । ममैवायं कन्दरमुखविसर्पी प्रतिशब्दः । (मूर्च्छति उत्थाय सविषादम् ।) अहह श्रान्तोऽस्मि । अस्यास्तावद् गिरिनद्यास्तीरे स्थितस्तरङ्ग-वातमासेविष्ये । (परिक्रम्यावलोक्य च) इमां नवाम्बुकलुषामपि स्रोतोवहां पश्यतो मे रमते मनः । कुतः—

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरसना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाविद्धं याति स्खलितमभिसन्धाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता ॥२८॥

भवतु । प्रसादयामि तावदेनाम् । (अञ्जलिं बद्ध्वा ।)

प्रक्षेपः (कुटिलिका-नाटयेन)

पसीअ पिअअम सुंदरि एं णए खुहिआकरुण विहंगम एं णए ।
सुरसरितीरसमूसुअ एं णए अलिउलझंकारिअ एं णए ॥२५॥

(प्रसीद प्रियतमे ! सुन्दरि ! नदि ! क्षुभिताकरुणविहङ्गमे ! नदि ! ।
सुरसरित्तीरसमुत्सुके ! नदि ! अलिकुलझङ्कारिते ! नदि ! ॥)

(नेपथ्ये चर्चरी)

पुव्वदिसापवणाहअकल्लोलुग्गअबाहओ
मेहअंगे णच्चइ स ललिअँ जलणिहिणाहओ ।
हंसविहंगमकुंकुम संखकआभरणु
करिमअराउलकसणकमलकआवरणु ।
वेलासलिलुव्वेल्लिअहत्थदिण्णतालु ।
ओत्थरइ दसदिस रुधेविणु णवमेहआलु ॥२६॥

(पूर्वदिक्पवनाहतकल्लोलोद्गतबाहुः
मेघाङ्गैर्नृत्यति सललितं जलनिधिनाथः ।
हंसविहङ्गमकुङ्कुमशङ्खकृताभरणः
करिमकराकुलकृष्णकमलकृतावरणः ।
वेला सलिलोद्वेल्लितदत्तहस्ततालोऽ-
वस्तृणाति दशदिशो रुद्ध्वा नवमेघकालः ॥)

त्वयि निबद्धरतौ प्रियवादिनि प्रणयभङ्गपराङ्मुखचेतसि[1] ।
कमपराधलवं मयि पश्यसि त्यजसि मानिनि दासजनं यतः ॥२९॥

(विचिन्त्य)

कथं तूष्णींमेवास्ते अथवा परमार्थसरिदेवैषा । न खलूर्वशीपुरूरवसमपहाय समुद्राभिसारिणी भविष्यति । भवतु । अनिर्वेदप्राप्याणि श्रेयांसि । यावत् तमेव प्रदेशं गच्छामि यत्र मे नयनयोः सा सुनयना तिरोहिता । (परिक्रम्य विलोक्य च)

इमं तावत्प्रियाप्रवृत्तये सारङ्गमासोनमभ्यर्थये[2] । (जानुभ्यां स्थित्वा)

---

१. ०रतेः, ०दिनः, ०तसः, ०लवं मम. शा. सा.

२. इतः परं पद्यम्—

(गलितकः[3])

अभिनवकुसुमस्तवकिततरुवरस्य परिसरे
मदकलकोकिलकूजितरवझङ्कारमनोहरे ।
नन्दनविपिने निजकरिणीविरहानलेन संतप्तो
विचरति गजाजिपतिरैरावतनामा ॥

३. गलितको नाट्यविशेषः र.

कृष्णशारच्छवियोऽसौ दृश्यते, काननश्रिया ।
नवसष्पावलोकाय कटाक्ष इव पातितः ।।३०।।

(विलोक्य) किं नु खलु मामवधीरयन्निवा अन्यतोमुखः संवृत्तः । (दृष्ट्वा)

अस्यान्तिकमायान्ती शिशुना स्तनपायिना मृगी रुद्धा ।
तामयमनन्यदृष्टिर्भग्नग्रीवो विलोकयति[1] ।।३१।।

प्रक्षेपः (चर्चरी)
सुरसुन्दरि जहणभरालस पीणुत्तुंग घणत्थणि
थिरजोव्वण तणुसरीरि हंसगई
गअणुज्जलकाणणे मिअलोअणि भमंती
दिठ्ठी पइँ तह विरहसमुद्दन्तरे उत्तारहि मइँ ।।२७।।
(सुरसुन्दरी जघनभरालसा पीनोत्तुङ्गघनस्तनी ।
स्थिरयौवना तनुशरीरा हंसगतिः
गगनोज्ज्वलकानने मृगलोचना भ्रमन्ती
दृष्टा त्वया तर्हि विरहसमुद्रान्तरादुत्तारय माम् ।।)

(उपसृत्य अञ्जलिं वद्ध्वा) हंहो हरिणीपते !
अपि दृष्टवानसि मम प्रियां वने ?
कथयामि ते तदुपलक्षणं शृणु ।
पृथुलोचना सहचरी यथैव ते
सुभगं तथैव खलु सापि वीक्षते[2] ।।३२।।

कथमनादृत्य मद्वचनं कलत्राभिमुखं स्थितः । उपपद्यते 'परिभवास्पदं दशाविपर्ययः' । यावदितोऽहमन्यमवकाशमवगाहिष्ये । (परिक्रम्यावलोक्य च) हन्त ! दृष्टमुपलक्षणं तस्या मार्गस्य ।

'रक्तकदम्बः सोऽयं प्रियया घर्मान्तशंसि यस्यैकम् ।
कुसुममसमग्रकेसरविषममपि कृतं शिखाभरणम् ।।३३।।

(परिक्रम्य अवलोक्य च)[3]

---

१. द्र. रघु. ९।५५ । २. 'सुभगा०० वीक्ष्यते' नि-४-रं. शा. सा.
३. '०वलोक्य च—'किं नु खलु०'-नि-४-रं. पं. अ. शा. सा.

अये प्रियावामपादप्रियः अशोकः। भवतु अत्र प्रणयी भवामि—[1]

रक्ताशोक! कृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनं
(पवनधूयमानमूर्धानमवलोक्य सक्रोधम्)
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः।
उत्कण्ठाघटमानषट्पदघटासङ्घट्टदष्टच्छदस्
तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥३४॥

भवतु। सुखमास्तां भवान्। (परिक्रम्यावलोक्य च)

किं नु खलु एतच्छिलाभेदगतं नितान्तरक्तमवलोक्यते।
प्रभालेपी नायं हरिहतगजस्यामिषलवः
स्फुलिङ्गो वा नाग्नेर्गहनमभिवृष्टं यत इदम्।
(विभाव्य) अये रक्ताशोकप्रसवसमरागो मणिरयं
यमुद्धर्तुं पूषा व्यवसित इवालम्बितकरः ॥३५॥

अहो अयं हरति मे मनः। भवतु। आदास्ये तावदेनम्।

प्रक्षेपः (नेपथ्ये)

पणइणि-बद्धासाइअओ वाहाउल-णिअ-णअणओ।
गअवइ गहणे दुहिअओ भमइ क्खामिअवअणओ ॥२८॥

(प्रणयिनीबद्धाशः वाष्पाकुलनिजनयनः।
गजपतिर्गहने दुःखितः भ्रमति क्षामितवदनः ॥)

(ग्रहणं नाटयति। द्विपदिकयोपसृत्य गृहीत्वाऽऽत्मगतम्) अथवा

मन्दारपुष्पैरधिवासितायां यस्याः शिखायामयमर्पणीयः।
सैव प्रिया सम्प्रति दुर्लभा मे किमेनमस्रोपहतं करोमि ॥३६॥

(उत्सृजति) (नेपथ्ये)

वत्स! गृह्यतां गृह्यताम्।
सङ्गमनीयो मणिरिह शैलसुता-चरणरागयोनिरयम्।
आवहति धार्यमाणः सङ्गममचिरात् प्रियजनेन ॥३७॥

---

१. 'अये०० भवामि' अस्मद्योजना.

राजा—(कर्णं दत्वा) को नु खलु मामेवमनुशास्ति । (अवलोक्य) अये ! अनुकम्पते मां कश्चिन्मृगचारी मुनिर्भगवान् । भगवन् अनुगृहीतोऽस्मि अहमुपदेशाद् भवतः । (मणिमादाय) हंहो सङ्गमनीय !

तया वियुक्तस्य [1]निमग्नमध्यया
भविष्यसि त्वं यदि सङ्गमाय मे ।
ततः करिष्यामि भवन्तमात्मनः
शिखामणिं बालमिवेन्दुमीश्वरः ।।३८।।

(परिक्रम्यावलोक्य च) अये ! किं नु खलु कुसुमरहितामपि लतामिमां पश्यतो मे मनो रमते । अथवा स्थाने मनोरमा ममेयम् । इयं हि—

तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद् विश्रान्तपुष्पोद्गमा ।
चिन्तामौनमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा ।।३९।।

यावदस्यां प्रियानुकारिण्यां परिष्वङ्गप्रणयी भवामि ।

प्रक्षेपः (चर्चरी)

लए पेक्ख विणु हिअएँ भमामि । जइ विहिजोएँ पुणि तहिं पाविमि ।
ता रण्णें विणु करमि णिभंती । पुणु णइ मेल्लुइँ ताह कअन्ती ।।२९।।
(लते प्रेक्षस्व विना हृदयेन भ्रमामि । यदि विधियोगेन पुनस्तां प्राप्नोमि ।
तदारण्येन विना करोमि निर्भ्रान्ति । पुनर्न प्रवेशयामि तां कृतान्ताम् ।।

(उपसृत्य लतामालिङ्गति । ततः प्रविशति तत्स्थान एव उर्वशी ।)

राजा—(निमीलिताक्ष एव स्पर्शं रूपयित्वा ।) अये ! उर्वशीगात्रसंस्पर्शादिव निर्वृतं मे शरीरम् । तथापि नास्ति विश्वासः । कुतः—

समर्थये यत् प्रथमं प्रियां प्रति
क्षणेन तन्मे परिवर्ततेऽन्यथा ।
अतो विनिद्रे सहसा विलोचने
करोमि न स्पर्शविभावितप्रियः ।।४०।।

(शनैश्चक्षुष्युन्मील्य) कथं सत्यमेव प्रियतमा । (मूर्च्छितः पतति)

---

१. विलग्न० पं. अ. च.

उर्व०—(बाष्पं विसृज्य) समस्ससदु समस्ससदु महाराओ ।
(समाश्वसितु समाश्वसितु महाराजः ।)

राजा—(संज्ञां लब्ध्वा) प्रिये अद्य जीवितम् ।

तद् वियोगोद्भवे तन्वि मया तमसि मज्जता ।
दिष्ट्या प्रत्युपलब्धासि चेतनेव गतासुना ॥४१॥

उर्व०—अब्भंतरकरणाए मए पच्चक्खीकिदवुत्तन्तो क्खु महाराओ ।
(अभ्यन्तरकरणया मया प्रत्यक्षीकृतवृत्तान्तः खलु महाराजः ।)

राजा—अभ्यन्तरकरणयेति न खलु ते वचनार्थमवैमि ।

उर्व०—कहइस्सं । इदं दाव पसीददु महाराओ जं मए कोववसं गदाए एदं अवत्थंतरं पाविदो महाराओ । (कथयिष्यामि । एतत् तावत्-प्रसीदतु महाराजो यन्मया कोपवशं गतया एतदवस्थान्तरं प्रापितो महाराजः ।)

राजा—कल्याणि ! न तावदहं प्रसादयितव्यः । त्वद्दर्शनादेव प्रसन्न-वाह्यान्तःकरणोऽन्तरात्मा । तत् कथय कथमियन्तं कालम-वस्थिता मया विना भवती ।

प्रक्षेपः (चर्चरी)

मोरां परहुउ हंसु रहंगउ अलि गउ पव्वउ सरिउ कुरंगउ ।
तुज्झह करणे रण्णभमंते को ण हु पुच्छिउ मइँ रोअंते ॥३०॥
(मयूरः परभृता हंसो रथाङ्गः अलिर्गजः पर्वतः सरित्कुरङ्गमः ।
तव कारणेनारण्ये भ्रमता को न खलु पृष्टो मया रुदता ॥)

उर्व०—एव्वं अंतक्करणपच्चक्खीकिदुवुत्तंतो महाराओ ।
(एवमन्तःकरणप्रत्यक्षीकृतवृत्तान्तो महाराजः ।)

राजा—प्रिये ! अन्तःकरणमिति न खल्ववगच्छामि ।

उर्व०—सुणादु महाराओ । पुरा भअवदा कुमारेण सासदं कुमारवदं गेण्हिअ अकलुसो णाम गंधमादणकच्छो अज्झासिदो । किदो अ एस विही । (श्रृणोतु महाराजः । पुरा भगवता कुमारेण शाश्वतं कुमारव्रतं गृहीत्वा अकलुषो नाम गन्धमादनकच्छोऽध्यासितः । कृतश्चैप विधिः—-)

राजा—क इव ?

उर्वशी—जा किल इत्थिआ इमं पदेसं पविसदि सा लदाभावेण परिण-
मिस्सदि त्ति। किदो अ अअं सावांतो 'गोरीचरणराअसंभवं
मणिं विणा तदो ण मुच्चिस्सदि'त्ति। तदो अहं गुरुसाव-
संमूढहिअआ देवदा-समअं विसुमरिअ अगहिदाणुणआ इत्थिआ-
जणपरिहरणिज्जं कुमारवणं पविट्ठा। पवेसाणन्दरं एव्व अ
काणणोवंतवत्तिवासंतीलदाभाएण परिणदं रूवं। (या किल स्त्री
इमं प्रदेशं प्रविशति सा लताभावेन परिणंस्यतीति। कृतश्चायं शापान्तः
गौरीचरणरागसंभवं मणिं विना ततो न मोक्ष्यत इति। ततोऽहं
गुरुशापसंमूढहृदया देवतासमयं विस्मृत्य अगृहीतानुनया स्त्रीजनपरिहरणीयं
कुमारवनं प्रविष्टा। प्रवेशानन्तरमेव च काननोपान्तवर्तिवासन्तीलताभावेन
परिणतं मे रूपम्।)

राजा—प्रिये सर्वमुपपन्नम्।

श्रमखेदसुप्तमपि मां शयने या मन्यसे प्रवासगतम्।
सा त्वं प्रिये सहेथाः कथं मदीयं चिरवियोगम्॥४२॥

इदं तद् यथाकथितं त्वत्सङ्गमनिमित्तं पुनरुपलभ्य मणिप्रभावा-
दासादिता त्वमस्माभिः। ( मणिं दर्शयति )

उर्वशी—अम्मो संगमणीओ अअं मणी। अदो क्खु महाराएण आलिं-
गिदमेत्त ज्जेव्व पकिदित्थ म्हि संवुत्ता। (अहो! सङ्गमनीयोऽयं
मणिः। अतः खलु महाराजेनालिङ्गितमात्रैव प्रकृतिस्थास्मि संवृत्ता।)

(मणिमादाय मूर्धनि वहति।)

राजा—एवमेव सुन्दरि क्षणमात्रं स्थीयताम्।

स्फुरता विच्छुरितमिदं रागेण मणेर्ललाटनिहितस्य।
श्रियमुद्वहति मुखं ते बालातपरक्तकमलस्य॥४३॥

उर्व०—पिअंवद! महंतो क्खु कालो तुए पइट्ठाणदो णिग्गदस्स। कदाइ
असूइस्संति मं पकिदीओ। ता एहि णिवुत्तम्ह। (प्रियम्वद! महान्
खलु कालस्तव प्रतिष्ठानान्निर्गतस्य। कदाचिदसूयिष्यन्ति मह्यं प्रकृतयः।
तदेहि निवर्तावहे।)

राजा—यदाह भवती। ( उत्तिष्ठतः।)

उर्व०—अध कथं महाराओ गंतुं इच्छदि ।
(अथ कथं महाराजो गन्तुमिच्छति ।)

राजा—
अचिरप्रभा-विलसितैः पताकिना
सुरकार्मुकाभिनवचित्रशोभिना ।
गमितेन खेलगमने विमानतां
नय मां नवेन वसतिं पयोमुचा ॥४४॥

( निष्क्रान्तौ )

प्रक्षेपः (नेपथ्ये चर्चरी)

पाविअसहअरिसंगमओ पुलअपसाहिअअंगअओ ।
सेच्छापत्तविमाणओ विहरइ हंसजुआणओ ॥३१॥
(प्राप्तसहचरीसङ्गमः पुलकप्रसाधिताङ्गः ।
स्वेच्छाप्राप्तविमानो विहरति हंसयुवा ॥)

॥ इति चतुर्थोऽङ्कः ॥

## ॥ [1]अथ प्रवेशकः ॥

(ततः प्रविशति हृष्टो विदूषकः)

विदू०—ही ही भो दिट्ठिआ चिरस्स कालस्स उव्वसीसहाओ णंदणवणप्पमुहेसु देवदारण्णेसु विहरिअ पडिणिवुत्तो पिअवअस्सो। पविसिअ णअरं दाणिं ससक्कारोवआरेहिं पकिदीहिं अणुरज्जंतो रज्जं करेदि। असंताणत्तणं वज्जिअ ण किंवि से सोअणीअं। अज्ज तिहि विसेसो त्ति भअवदीणं गंगाजउणाणं संगमे देवीहिं सह किदाहिसेओ संपदं उवआरिअं पविट्ठो। ता जाव तत्तभवदो अलंअरीअमाणस्स अणुलेवणमल्ले अग्गभागी होमि[2]। (ही ही भोः दिष्ट्या चिरस्य कालस्योर्वशीसहायो नन्दनवनप्रमुखेषु देवतारण्येषु विहृत्य प्रतिनिवृत्तः प्रियवयस्यः। प्रविश्य नगरमिदानीं ससत्कारोपचारैः प्रकृतिभिरनुरज्यमानो राज्यं करोति। असन्तानत्वं वर्जयित्वा न किमप्यस्य शोचनीयम्। अद्य तिथिविशेष इति भगवत्योर्गङ्गायमुनयोः सङ्गमे देवीभिः सह कृताभिषेकः साम्प्रतमुपकार्यां प्रविष्टः। तद् यावत् तत्रभवतोऽलंक्रियमाणस्यानुलेपमाल्येऽग्रभागी भवामि।[3]) (परिक्रामति)

(नेपथ्ये)

हद्धी हद्धी। दुऊलुत्तुरच्छदे तालवेण्टाधारे णिक्खिविअ णीअमाणो मए भट्टिणो अब्भंतर-विलासिणी-मोलि-रअण-जोग्गो मणी आमिससंकिणा गिद्धेण अक्खित्तो। (हा धिक् हा धिक्!! दूकूलोत्तरच्छदे तालवृन्ताधारे निक्षिप्य नीयमानो मया, भर्तुरभ्यन्तरविलासिनीमौलिरत्नयोग्यो [3]मणिरामिषशङ्किना गृध्रेणाक्षिप्तः।)

विदू०—(कर्णं दत्त्वा) अच्चाहिदं अच्चाहिदं। परं बहुमदो क्खु सो वअस्सस्स संगमणीओ णाम चूणामणी। अदो क्खु असमत्तणेवच्छो एव्व तत्तभवं आसणादो उट्ठिअ इदो आअच्छदि।

---

१. इयस्माकं योजना। अत्रै पञ्चमोङ्क इति सा. था. च. नि-४.

२. ०मल्लभाई भादुओ विअ = ०माल्यभागी भ्रातेव. नि. ४, सा.

३. णीअमाणो अच्छराविलासवदीए मोलिरअणो मणी. सा.

जाव णं उवसप्पामि । (अत्याहितमत्याहितम् । परमबहुमतः खलु स वयस्यस्य सङ्गमनीयो नाम चूडामणिः । अतः खल्वसमाप्त-नेपथ्य एव तत्रभवानासनादुत्थाय इत आगच्छति । यावदेनमुपसर्पामि[1] ।)

॥ इति प्रवेशकः ॥

## [a]अथ पञ्चमोऽङ्कः

(ततः प्रविशति सावेगपरिजनो राजा[2] ।)

राजा—[3]

आत्मनो वधमाहर्त्तं क्वासौ विहग-तस्करः ।
येन [4]तत्प्रथमं स्तेयं गोप्तुरेव गृहे कृतम ॥१॥

किरा०—[5]एसो एसो क्खु मुह कोडि-लग्गहेमसुत्तेण मणिणा आलिहंतो विअ आआसं पडिब्भमदि । (एष एष खलु मुखकोटिलग्नहेमसूत्रेण मणिना आलिखन्निव आकाशं परिभ्रमति ।)

राजा—पश्याम्येनम्—

असौ मुखालम्बितहेमसूत्रं बिभ्रन्मणिं मण्डलचारशीघ्रः[6] ।
अलातचक्रप्रतिमं विहङ्गस्तद्रागलेखावलयं तनोति ॥२॥

किं नु खल्वत्र कर्तव्यम् ।

विदू०—(उपेत्य) भो अलं एत्थ घिणाए । अवराही सासणीओ । (भोः ! अलमत्र घृणया[7] । अपराधी शासनीयः ।)

---

१. 'आसणादो उट्ठिदो । ता पासवत्ती होमि' सा. शा. रं. a. इयमस्मद्योजना.

२. प्रविशति राजा सूतश्च कञ्चुकिरेचकी कञ्चुकिवेधकी परिजनश्च सा. शा. रं.

३. राजा—वेधक वेधक शा. च. रं , रेचक रेचक शा.

४. तच्च तत् प्रथममतीव गुरु द्र. कु ७।४३, मे १।२, शा ५।२१ग, ७।१, ९-१०ग, र १०।६७, मा. १।१२ ग. । 'तत् प्रथमं'—सा.

५. किराती सा. च. पं० अ.

६. मण्डलशीघ्रचारः सा. शा. रं.

७. घृणा दया । द्र. शा. ३।१४ णिग्घिण.

राजा—सम्यगाह भवान् । धनुर्धनुस्तावत् ।

यवनी—एसा आणइस्सं[1] (एषा आनेष्यामि ।) (निष्क्रान्ता[2])

राजा—वयस्य ! न दृश्यते स विहगाधमः । क्व नु खलु गतः ।

विदू०—भो ! इदो दक्खिणंतेण स सउणिहदासो ।[3]
(भोः ! इतो दक्षिणान्तेन स शकुनिहताशः ।)

राजा—(परिवृत्यावलोक्य च ।) दृष्ट इदानीम्—

प्रभापल्लवितेनासौ करोति मणिना खगः ।
अशोकस्तवकेनेव दिङ्मुखस्यावतंसकम् ।।३।।

यव०—(चापहस्ता प्रविश्य ।) भट्टा एदं हत्थावाव-सहिदं सरासणं[4] ।
(भर्तः ! एतद् हस्तावापसहितं शरासनम् ।)

राजा—किमिदानीं शरासनेन । वाणपथमतीतः स क्रव्यभोजनः ।
तथा हि—

आभाति मणिविशेषो दूरमिदानीं पतत्रिणा नीतः ।
नक्तमिव लोहिताङ्गः[5] परुषघनच्छेदसंयुक्तः ।।४।।

(कञ्चुकिनं विलोक्य) आर्य लातव्य !

कञ्चु०—आज्ञापयतु देवः ।

राजा—मद्वचनादुच्यन्तां नागरकाः । सायं निवासवृक्षाश्रयी विचीयतां स विहगदस्युरिति ।

कञ्चु०—यदाज्ञापयति देव । (निष्क्रान्तः)

---

१. परिजनः—जं भट्टा आणवेदि सा. शा. रं. ।
२. राजा सम्यगाह भवान् । धनुर्धनुस्तावत् (निष्क्रान्ता धनुर्ग्राहिणी यवनी) पं अ.
३. दक्खिणंतेण अवगतो सो सासणीओ कुणवभोअणो—च. पं. अ.
४. ससरं चावं-रं. शा. । शाकु. ६।२६-२७. हस्तावापो ज्याघातवारणम्-रा.
५. मङ्गलग्रहः ६. उच्यतां नागरिकः—च. पं. अ.

विदू०—भो। उववि‍सदु भवं संपदं। कहिं गदो सो रअणकुंभीलओ भवदो सासणादो मुच्चिस्सदि। (भोः ! उपविशतु भवान् साम्प्रतम्। क्व गतः स रत्नकुम्भीलको भवतः शासनान्मोक्ष्यते।)

राजा—(विदूषकेण सहोपविश्य) वयस्य—

रत्नमिति न मे तस्मिन् मणौ प्रियत्वं विहङ्गमाऽऽक्षिप्ते।
प्रियया तेनास्मि सखे सङ्गमनीयेन सङ्गमितः[1] ॥५॥

विदू०—णं परिगदत्थो म्हि किदो भवदा।
(ननु परिगतार्थोऽस्मि कृतो भवता।)

(ततः प्रविशति सशरं मणिमादाय कञ्चुकी)

कञ्चु०—जयतु जयतु देवः।

अनेन निर्भिन्नतनुः स वध्यो रोषेण ते मार्गणतां गतेन।
प्राप्तापराधोचितमन्तरिक्षात् समौलिरत्नः पतितः पतत्री ॥६॥

(सर्वे विस्मयं रूपयन्ति)

कञ्चु०—[2]अद्भिः प्रक्षालितोऽयं मणिः कस्मै प्रदीयताम्।

राजा—वेधक ! गच्छ। अग्निशुद्धमेनं कृत्वा पेटकं प्रवेशय[3]।

किरा०—जं भट्टा आणवेदि। (यद् भर्ताज्ञापयति।)

(मणिं गृहीत्वा निष्क्रान्तः)

राजा—आर्य लातव्य ! [4]जानीते भवान् कस्यायं वाण इति ?

कञ्चु०—नामाङ्कितोऽयं दृश्यते। न तु मे वर्णविभावसहा[5] दृष्टिः।

राजा—तेन हि उपनय[6] शरं यावदहं निरूपयामि।

(कञ्चुकी तथा करोति। राजा नामाक्षराण्यनुवाच्य विचारयति[7]।)

---

१. द्र. र १६।७४, शा. ६ प्रवेशकान्त्यभागे।
२. अभिप्रक्षालितः शा. रं.
३. गच्छ कोपपेट्टके स्थापयैनम्-रं. शा.
४. जानाति-रं. शा. 'जानीते हि भवानि'-ति २।१९ पद्येऽत्रैव प्रयोगात् तु वाक्यार्थस्य कर्मत्वेऽप्यात्मनेपदं कालिदासोचितम्।
५. वर्णविचारक्षमा च. पं. अ., वर्णविभावनसहा सा.
६. उपश्लेपय शा. रं.
७. सापत्यतां रूपयति सा. पं. अ.

कञ्चुकी—यावदहं नियोगमशून्यं करोमि । ( निष्क्रान्तः )

विदू०—किं भवं विआरेदि । (किं भवान् विचारयति ।)

राजा—शृणु तावत् प्रहर्तुर्नामाक्षराणि ।

विदू०—अवहिदो म्हि । (अवहितोऽस्मि ।)

राजा—श्रूयताम् । (वाचयति )—

उर्वशीसंभवस्यायमैलसूनोर्धनुष्मतः ।
कुमारस्यायुषो बाणः [1]संहर्ता द्विषदायुषाम् ।।७।।

विदू०—(सपरितोषम् ।) दिट्ठिआ संताणेण वड्ढदि भवं ।
(दिष्ट्या सन्तानेन वर्धते भवान् ।)

राजा—सखे ! कथमेतत् ? अन्यत्र नैमिषीयसत्रात् अवियुक्तोऽहमुर्वश्या । न च मया कदाचिदपि गर्भव्यक्तिरालक्षिता[2] कुत एव प्रसूतिः? किंतु—(स्मृतिं रूपयित्वा[3] )

आविलपयोधराग्रं लवलीदलपाण्डुराननच्छायम् ।
तानि दिनानि वपुरभूत् केवलमलसेक्षणं तस्याः[4] ।।८।।

---

१. प्रहर्तुः सा. पं. अ. च.

२. कथमेतत् ? सखे ! अनिमिष्या वियुक्तोऽहमुर्वश्या । न कदाचिदपि तत्रभवती गर्भाविर्भूतदोहदाऽप्युपलक्षिता शा. रं., अनिमिषीयक्रतुदर्शनादित्यपरे, अनिमिषीयरजोदर्शनादित्येके । अत्र हि गर्भ-पालन-प्रसव-संगोपनेभ्योऽभ्यर्हितस्य वियोगस्यान्यथाऽसिद्धेर्भवितव्यमेव केनचित् कारणेन । तच्चात्र नैमिषीयं सत्रम् । अवश्यं चैतेन षाण्मासिकेन दाशमासिकेन वा भवितव्यम् । कामादिविकारासंस्पर्शाय गर्भस्य तापसाश्रमेष्वेव भर्मकर्म, जन्म चाभिमतमेव शाकुन्तलादिषु कालिदासस्य ।

३. इदमस्माभिर्योज्यते ।

४. अत्र पाठाः आवि-ग्रम् = आनीलचूचुकाग्रम् । उत्तरार्धे च 'कानिचिदहानि वपुरभूत्—का., कतिचिदहनि शरीरं श्लथवलयमिवाभवत् तस्याः—रं. शा. कतिचिदहानि शरीरं केवलमलसेक्षणं तस्याः' क्वचित्, कानिचिदहानि जातं शरीरमलसेक्षणं तस्याः क्वचित्, कानि दिनानि वपुरभूत् केवलमलसेक्षणं तस्याः—च' । एषु 'तानी'-ति स्मृतिपरक-सर्वनाम-घटितत्वमेवोचितम् ।

विदू०—मा भवं सव्वं माणुसीधम्मं दिव्वासु संभावेदु। पहाव-णिगूढाइँ ताणं चारिदाइँ। (मा भवान् सर्वं मानुषीधर्मं दिव्यासु संभावयतु। प्रभावनिगूढानि तासां चरितानि।)

राजा—अस्तु तावदेवं यथा भवानाह। पुत्रसंवरणे तु किमिव कारणं तत्रभवत्याः ?

विदू०—मा वुड्ढि मं राआ परिहरिस्सदित्ति।
(मा वृद्धां मां राजा परिहरिष्यतीति।)

राजा—कृतं परिहासेन। चिन्त्यताम्।

विदू०—को देवदा-रहस्साइँ तक्कइस्सदि।
(को देवतारहस्यानि तर्कयिष्यति।)

(प्रविश्य कञ्चुकी)

काञ्चु०—जयतु जयतु देवः। देव च्यवनाश्रमात् कुमारं गृहीत्वा सम्प्राप्ता तापसी देवं द्रष्टुमिच्छति।

राजा—उभयमप्यविलम्बितं प्रवेशय।

काञ्चु०—यदाज्ञापयति देवः।

(निर्गम्य चापहस्तेन कुमारेण तपस्या च सह प्रविष्टः)

काञ्चु०—इत इतो भगवती। (सर्वे परिक्रामन्ति)

विदू०—(विलोक्य) किं णु क्खु सो एसो तत्तभवं खत्तिअकुमारओ जस्स णामंकिदो गिद्धलक्खबेधी अद्धणाराओ। तह हि वहुअरं भवदो अणुकरेदि। (किं नु खलु स एप तत्रभवान् क्षत्रियकुमारकः, यस्य नामाङ्कितो गृध्रलक्ष्यवेधी अर्धनाराचः। तथा हि बहुतरं भवतोऽनुकरोति।)

राजा—स्यादेवम्। अतः खलु—

वाष्पायते निपतिता मम दृष्टिरस्मिन्
वात्सल्यवन्धि हृदयं मनसः प्रसादः।
संजात-वेपथुभिरुज्झित-धैर्यवृत्ति—
रिच्छामि चैनमदयं परिरब्धुमङ्गैः ॥९॥

कञ्चु०—भगवति ! एवं स्थीयताम्।

(तापसीकुमारौ स्थितौ।)

राजा—अम्ब ! अभिवादये ।

ताप०—महाभाग । सोमवंसवित्थारइत्तओ होहि । (आत्मगतम्) अम्हो अणाचक्खिदोवि विण्णादो एव्व इमस्स राएसिणो आउसो अ ओरसो संबंधो (प्रकाशम्) जाद पणम दे गुरुं । (महाभाग ! सोमवंशविस्तारयिता भव । (आत्मगतम्) अहो अनाख्यातोऽपि विज्ञात एवास्य राजर्षेरायुषश्च औरसः सम्बन्धः । (प्रकाशम्) जात ! प्रणम ते गुरुम् ।)

(कुमारश्चापगर्भमञ्जलिं बद्ध्वा प्रणमति ।)

राज—वत्स ! आयुष्मान् भव ।

कुमारः—(स्वगतम्)

> यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोऽहमस्येति ।
> उत्सङ्गवर्धितानां गुरुषु भवेत् कीदृशः स्नेहः ॥१०॥

राजा—भगवति ! किमागमनप्रयोजनम् ?

ताप०—सुणादु महाराओ । एसो दीहाऊ आऊ जादमेत्तो एव्व उव्वसोए किंवि णिमित्तं अवेक्खिअ मम हस्ते णासीकिदो । जं खत्तिअ-कुमारअस्स जादकम्मादिविहाणं तं से भअवदा चवणेण असेसं अणुचिट्ठिदं गहीदविज्जो धणुव्वेदे अहिविणीदो । (शृणोतु महाराजः । एष दीर्घायुः आयुः जातमात्र एव उर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः । यत् क्षत्रियकुमारस्य जातकर्मादिविधानं तदस्य भगवता च्यवनेनाशेषमनुष्ठितम् । गृहीतविद्यः धनुर्वेदे अभिविनीतः ।)

राजा—सनाथः खलु संवृत्तः ।

ताप०—अज्ज । पुप्फसमिधकुसणिमित्तं इसिकुमारएहिं सह गदेण इमिणा अस्समविरुद्धं आअरिदं । (अद्य पुष्पसमित्कुशनिमित्तं ऋषिकुमारकैः सह गतेनाश्रमविरुद्धमाचरितम् ।)

विदू०—(सावेगम्) किं विअ ? (किमिव ?)

ताप०—गहीदामिसो किल गिद्धो पादवसिहरे णिलीअमाणो अणेण लक्खीकिदो वाणस्स । (गृहीतामिषः किल गृध्रः पादपशिखरे निलीयमानः अनेन लक्ष्यीकृतो बाणस्य ।)

(विदूषको राजानमवलोकयति)

राजा—ततस्ततः ।

ताप०—तदो उवलद्धवुत्तंतेण भअवदा चवणेण अहं समादिट्ठा—णिज्जा-देहि एदं उव्वसीहत्थे णासं त्ति । ता इच्छामि देविं उव्वसिं पेक्खिदुं । (तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा—निर्यातय एनमुर्वशीहस्ते न्यासमिति । तदिच्छामि देवीमुर्वशीं प्रेक्षितुम् ।)

राजा—तेन ह्यासनमनुगृह्णातु भगवती ।

(तापसो उपनीत आसन उपविशति ।)

राजा—आर्य लातव्य । आहूयतामुर्वशी ।

कञ्चु०—यदाज्ञापयति देवः । (निष्क्रान्तः ।)

राजा—(कुमारमवलोक्य) एहि एहि वत्स !

सर्वाङ्गीणः स्पर्शः सुतस्य किल तेन मामुपगतेन ।
आह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ।।११।।

ताप०—जाद ! णंदेहि पिदरम् । (जात ! नन्दय पितरम्)

(कुमारो राजानमुपगम्य पादग्रहणं करोति ।)

राजा—(कुमारमालिङ्ग्य पादपीठे चोपवेश्य) वत्स ! इतस्तव पितुः प्रियसखं ब्राह्मणमशङ्कितो वन्दस्व ।

विदू०—किंति संकिस्सदि । णं अस्समवासपरिचिदो एव्व सहामिओ । (किमिति शङ्क्ष्यते । नन्वाश्रमवासपरिचित एव शाखामृगः ।)

कुमार—(सस्मितम्) तात वंदे ।

विदू०—सोत्थि भवदो । वड्ढदु भवं । (स्वस्ति भवतो । वर्धतां भवान् ।)

(ततः प्रविशत्युर्वशी कञ्चुकी च)

कञ्चु०—इत इतो देवी ।

उर्व०—(कुमारमवलोक्य) को णु क्खु एसो सवाणासणो पादपीठे अग्रं महाराएण संजमीअमाणसिहण्डओ चिट्ठदि । (तापसीं दृष्ट्वा) अम्मो सच्चवदी-सूइदो अग्रं मे पुत्तओ आऊ । महंतो क्खु

संवत्तो। (को नु खल्वेप सवाणासनः पाठपीठे स्वयं महाराजेन संयम्यमानशिखण्डकस्तिष्ठति। अहो सत्यवतीसूचितः अयं मे पुत्रक आयुः। महान् खलु संवृत्तः।)

(सहर्षं परिक्रामति)

राजा—(उर्वशीं दृष्ट्वा।) वत्स—

इयं ते जननी प्राप्ता त्वदालोकनतत्परा।
स्नेहप्रस्रवनिर्भिन्नमुद्वहन्ती स्तनांशुकम् ॥१२॥

ताप०—जाद एहि। पच्चुग्गच्छ मादरं। (जात एहि। प्रत्युद्गच्छ मातरम्।)

(कुमारेण सह उर्वशीमुपसर्पति)

उर्व०—अंव पादवंदणं करेमि। (अम्ब! पादवन्दनं करोमि।)

ताप०—वच्छे भत्तुणो वहुमदा होहि। (वत्से भर्तुर्बहुमता भव।)

कुमार—अम्ब! अभिवादये।

उर्व०—(कुमारमुन्नमितमुखं परिष्वज्य) वच्छ पिदरं आराधइत्तओ होहि। (राजानमुपेत्य।) जेदु जेदु महाराओ। (वत्स पितरमाराधयिता भव। (राजानमुपेत्य) जयतु जयतु महाराजः।)

राजा—स्वागतं पुत्रवत्यै! इत आस्यताम् (अर्धासनं ददाति)

(उर्वशी उपविशति। सर्वे यथोचितमुपविशन्ति)

ताप०—वच्छे। एसो गहीदविज्जो आऊ संपदं कवअहरो[1] संवुत्तो। ता एदस्स दे भत्तुणो समक्खं णिज्जादिदो हत्थणिक्खेवो। ता विसज्जेदुं इच्छामि। उवरुज्झइ मह अस्समधम्मो। (वत्से! एप गृहीतविद्य आयुः साम्प्रतं कवचहरः संवृत्तः। तत् एतस्य ते भर्तुः समक्षं निर्यातितो हस्त-निक्षेपः। तद् विसर्जयितुमिच्छामि। उपरुध्यते ममाश्रमधर्मः।)

उर्व०—चिरस्स अज्जं देक्खिअ अहिअदरं अवितिण्हम्हि। ण सक्कणोमि विसज्जिदुं। अण्णय्यं उण उवरोहिदुं। ता गच्छदु अज्जा पुणो दंसणाअ। (चिरस्यार्यां दृष्ट्वा अधिकतरमवितृष्णास्मि। न शक्नोमि विस्रष्टुम्। अन्याय्यं पुनरुपरोद्धुम्। तद् गच्छत्वार्या पुनर्दर्शनाय।)

---

१. र. ८/९४

राजा०—अम्ब ! भगवते च्यवनाय मां प्रणिपातय।

ताप०—एव्वं भोदु। (एवं भवतु)

कुमा०—आर्ये ! सत्यं यदि निवर्तसे मामप्याश्रमं नेतुमर्हसि।

राजा—अयि वत्स ! उषितं त्वया पूर्वस्मिन्नाश्रमे। द्वितीयमध्यासितुं तव समयः।

ताप०—जाद। गुरुओ वअणं अणुचिट्ठ। (जात ! गुरोर्वचनमनुतिष्ठ)

कुमा०—तेन हि—

यः सुप्तवान् मदङ्के शिखण्डकण्डूयनोपलब्धसुखः।
तं मे जातकलापं प्रेषय मणिकण्ठकं शिखिनम्[1] ॥१३॥

ताप०— विहस्य) एव्वं करेमि। (एवं करोमि)

उर्व०—भअवदि ! पादवंदणं करेमि। (भगवति ! पादवन्दनं करोमि)

राजा—भगवति ! प्रणमामि।

ताप०—सोत्थि भोदु तुम्हाणं। (स्वस्ति भवतु युष्मभ्यम्)

(निष्क्रान्ता)

राजा—(उर्वशीं प्रति) कल्याणि !

अद्याहं पुत्रिणामग्र्यः सत्पुत्रेणामुना तव।
पौलोमीसंभवेनेव जयन्तेन पुरन्दरः[2] ॥१४॥

(उर्वशी स्मृत्वा रोदिति।)

विदू०—(विलोक्य सावेगम्) भो, किं णु क्खु संपदं अत्तहोदी एक्कवदे अस्सुमुही संवुत्ता। (भोः ! किं नु खलु साम्प्रतमत्रभवती एकपदे अश्रुमुखी संवृत्ता।)

---

१. द्र. शाकु.—सप्तमेऽङ्के शकुन्त—लावण्य—प्रसङ्गः, चतुर्थेऽङ्के च मृग्या अनघप्रसवत्वसूचनाप्रसङ्गः।

२. र. ३।२३, ७८, शा. ७।२८

राजा—(सावेगम् )

किं सुन्दरि ! प्ररुदितासि ममोपनीते
वंशस्थितेरधिगमान्महति प्रमोदे ।
पीनस्तनोपरि निपातिभिरानयन्ती
मुक्तावलीविरचनां पुनरुक्तिमस्रैः[1] ॥१५॥

(अस्या बाष्पं प्रमार्ष्टि)

उर्व०—सुणादु महाराओ। पढमं उण पुत्तदंसणसमुत्थेण आणंदेण विसुमरिद म्हि। दाणिं मर्हिदसंकित्तणेण सुमरिओ समओ मह हिअअं आआसेसि। (शृणोतु महाराजः। प्रथमं पुनः पुत्रदर्शन-समुत्थेनानन्देन विस्मृतास्मि। इदानीं महेन्द्रसंकीर्तनेन स्मृतः समयो मम हृदयमायासयति।)

राजा—कथ्यतां समयः।

उर्व०—अहं पुरा महाराअगहीदहिअआ गुरुसावसंमूढा मर्हिदेण आणत्ता। (अहं पुरा महाराजगृहीतहृदया गुरुशापसंमूढा महेन्द्रेण आज्ञप्ता।)

राजा—किमिति ?

उर्व०—जदा सो मे पिअसहो राएसी तुइ समुप्पण्णस्स वंसकरस्स मुहं पेक्खिस्सदि तदा तुए भूओ वि मं समीवं आअंतव्वं त्ति। तदो मए महाराअविओअभीरुदाए जादमेत्तो एव्व विज्जागमणिमित्तं भअवदो चवणस्स अस्समे एसो पुत्तओ अज्जाए सच्चवदीए हत्थे अप्पआसं णिक्खित्तो। अज्ज पिदुणो आराहणसमत्थो संवुत्तो त्ति कलअंतीए ताए णिज्जादिदो एसो मे दीहाऊ आऊ। ता एत्तिओ मे महाराएण सह संवासो। (यदा स मे प्रियसखो राजर्षिस्त्वयि समुत्पन्नस्य वंशकरस्य मुखं प्रेक्षिष्यते तदा त्वया भूयोऽपि मम समीपमागन्तव्यमिति। ततो मया महाराजवियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं भगवतश्च्यवनस्याश्रमे एष पुत्रक आर्यायाः सत्यवत्या हस्ते अप्रकाशं निक्षिप्तः। अद्य पितुराराधनसमर्थः संवृत्त इति कलयन्त्या तया निर्यातित एष मे दीर्घायुरायुः। तत् एतावान् मे महाराजेन सह संवासः।)

(सर्वे विषादं नाटयन्ति। राजा मोहमुपगच्छति।)

१. र. ६।२८, मे. २।४३.

विदू०—अव्वम्हण्णं अव्वम्हण्णं। (अब्रह्मण्यमब्रह्मण्यम्)

कञ्चु०—समाश्वसितु समाश्वसितु महाराजः।

राजा—(समाश्वस्य सनिःश्वासम्) अहो! सुखप्रत्यर्थिता दैवस्य—

आश्वासितस्य मम नाम सुतोपलब्ध्या
सद्यस्त्वया सह कृशोदरि! विप्रयोगः।
व्यावर्तितातपरुजः प्रथमाभ्रवृष्ट्या
वृक्षस्य वैद्युत इवाग्निरुपस्थितोऽयम् ॥१६॥

विदू०—अअं सो अत्थो अणत्थाणुवंधी संवुत्तो। संपदं तक्केमि अत्तभवदा वक्कलं गेण्हिअ तवोवणं गंदव्वं त्ति। (अयं सोऽर्थः अनर्थानुबन्धी संवृत्तः। साम्प्रतं तर्कयामि अत्रभवता वल्कलं गृहीत्वा तपोवनं गन्तव्यमिति।)

उर्व०—मं वि मंदभाइणिं किदविणअस्स पुत्तस्स लाभाणंतरं सग्गारोहणेण अवसिदकज्जं विप्पओअमुहिं महाराओ समत्थइस्सदि? (मामपि मन्दभागिनीं कृतविनयस्य पुत्रस्य लाभानन्तरं स्वर्गारोहणेनावसितकार्यां विप्रयोगमुखीं महाराजः समर्थयिष्यति?)

राजा—सुन्दरी मा मैवम्।

न हि सुलभवियोगा कर्तुमात्मप्रियाणि
प्रभवति परवत्ता शासने तिष्ठ भर्तुः।
अहमपि तव सूनावद्य विन्यस्य राज्यं
विचरितमृगयूथान्याश्रयिष्ये वनानि[१] ॥१७॥

कुमा०—नार्हति तातः पुङ्गवधारितायां धुरि दम्यं नियोजयितुम्[२]।

राजा—अयि वत्स! मा मैवम्।

शमयति गजानन्यान् गन्धद्विपः कलभोऽपि सन्
भवति सुतरां वेगोदग्रं भुजङ्गशिशोर्विषम्।
भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं
न खलु वयसा जात्यैवायं स्वकार्यसहो भरः[३] ॥१८॥

आर्य लातव्य?

---

१. र. ७।७१, शाकु. १।२५. २. र. ६।७८, ३।३२.
३. र. ११।१, १८।३-५१.

कञ्चु०—आज्ञापयतु देवः ।

राजा—मद्वचनादमात्यपरिषदं ब्रूहि संभ्रियतामायुषो राज्याभिषेक इति ।

कञ्चु०—यदाज्ञापयति देवः । (दुःखितो निष्क्रान्तः)

(सर्वे दृष्टिविघातं रूपयन्ति)

राजा—(आकाशमवलोक्य) किं नु खलु निरभ्रे विद्युत्संपातः[1] ।

उर्व०—(विलोक्य) अम्मो भअवं णारदो । (अहो भगवान् नारदः)

राजा—(निपुणमवलोक्य) अये भगवान् नारदः । य एषः—

गोरोचनानिकषपिङ्गजटाकलापः
संलक्ष्यते शशिकलामलवीतसूत्रः ।
मुक्तागुणातिशयसंभृतमण्डनश्रीर्
हेमप्ररोह इव जङ्गमकल्पवृक्षः[2] ॥१९॥

अर्घं तावदस्मै ।

उर्व०—(यथोक्तमादाय) इअं भअवदे अरिहणा । (इयं भगवतेऽर्हणा ।)

(ततः प्रविशति नारदः । सर्वे उत्तिष्ठन्ति)

नार०—विजयतां विजयतां मध्यमलोकपालः ।

राजा—(उर्वशीहस्तादर्घमादायावर्ज्य च) भगवन्नभिवादये ।

उर्व०—भअवं पणमामि । (भगवान् प्रणमामि)

नर०—अविरहितौ दम्पती भूयास्ताम् ।

राजा—(आत्मगतम्) अपि नामैवं स्यात् । (कुमारमाश्लिष्य प्रकाशम्) वत्स भगवन्तमभिवादयस्व ।

कुमा०—भगवन् ! और्वशेय आयुः प्रणमति ।

नारद—आयुष्मानेधि ।

---

१. नारदावतरणवर्णने माघो वराकीमिमां विद्युतमेव विस्मरति ।

२. कु. ६।६, ८।६८.

राजा—अयं विष्टरोऽनुगृह्यताम् ।

नारद—तथा । (उपविष्टः)

(सर्वे नारदमनूपविशन्ति ।)

राजा—(सविनयम्) भगवन् किमागमनप्रयोजनम् ?

नारद—राजन् ! श्रूयतां महेन्द्रसन्देशः ।

राजा—अवहितोऽस्मि ।

नारद—प्रभावदर्शी मघवा वनगमनाय कृतबुद्धिं भवन्तमनुशास्ति ।

राजा—किमाज्ञापयति ?

नार०—त्रिकालदर्शिभिर्मुनिभिरादिष्टो महान् सुरासुरसङ्गरो भावी । भवाँश्च[1] सांयुगीनः सहायो नः । तेन न त्वया शस्त्रं संन्यस्तव्यम् । इयं चोर्वशी यावदायुः, तव सहधर्मचारिणी भवत्विति ।

उर्व०—(अपवार्य) अम्महे सल्लं विअ मे हिअआदो अवणीदं । (अहो शल्यमिव मे हृदयादपनीतम् ।)

राजा—परवानस्मि देवेश्वरेण ।

नार०—युक्तम् ।

त्वत्कार्यं वासवः कुर्यात् त्वं च तस्येष्टमाचरेः ।
सूर्यः समेधयत्यग्निमग्निः सूर्यं स्वतेजसा ।।२०।।

(आकाशमवलोक्य ।) रम्भे ! उपनीयतां स्वयं महेन्द्रेण संभृतः कुमारस्यायुषो यौवराज्याभिषेकः ।

(प्रविष्टा यथोक्तहस्ता अप्सरसः)

अप्स०—भअवं इमे अहिसेअसंभारा । (भगवन्नेतेऽभिषेकसंभाराः ।)

नार०—उपवेश्यतामयमायुष्मान् भद्रपीठे ।

रम्भा—इदो वच्छ । (इतो वत्स) (कुमारं भद्रपीठ उपवेशयति)

नार०—( कुमारस्य शिरसि कलशमावर्ज्य ) रम्भे ! निर्वर्त्यतां शेषो विधिः ।

रम्भा—(यथोक्तं निर्वर्त्य) वच्छ ! पणम भअवंतं पिदरो अ । (वत्स ! प्रणम भगवन्तं पितरौ च ।) (कुमारो यथाक्रमं प्रणमति)

---

१. कु २।५७

नार०—स्वस्ति भवते ।

राजा—कुलधुरन्धरो भव ।

उर्व०—पिदुणो आराहओ होहि । (पितुराराधको भव ।)

(नेपथ्ये वैतालिकद्वयम् ।)

वैता०—विजयतां युवराजः ।

प्रथमः—

अमरमुनिरिवात्रिर्ब्रह्मणोऽत्रेरिवेन्दुर्,[1]
बुध इव शिशिरांशोर्बोधनस्येव देवः ।
भव पितुरनुरूपस्त्वं गुणैर्लोककान्तै—
रतिशयिनि समस्ता वंश एवाशिषस्ते ॥२१॥

द्वितीयः—

तव पितरि पुरस्तादुन्नतानां स्थितेऽस्मिन्
स्थितिमति च विभक्ता त्वय्यनाकम्पधैर्ये ।
अधिकतरमिदानीं राजते राजलक्ष्मीर्
हिमवति जलधौ च व्यस्ततोयेव गङ्गा ॥२२॥

अप्स०—(उर्वशीमुपेत्य ।) दिट्ठिआ पिअसही पुत्तस्स जुवराअसिरीए भत्तुणो अविरहेण अ वड्ढदि । (दिष्ट्या प्रियसखी पुत्रस्य युवराजश्रिया भर्तुरविरहेण च वर्धते।) ।

उर्व० -णं साहारणो एसो अब्भुदयो । (कुमारं हस्ते गृहीत्वा) एहि वच्छ । जेट्ठमादरं अभिवंदेहि । (ननु साधारण एषोऽभ्युदयः (कुमारं हस्ते गृहीत्वा) एहि वत्स । ज्येष्ठमातरमभिवन्दस्व ।)

(कुमारः प्रतिष्ठते)

राजा— तिष्ठ । सममेव तत्रभवत्याः समीपं यास्यामस्तावत् ।

नारदः—

आयुषो यौवराज्यश्रीः स्मारयत्यात्मजस्य ते ।
अभिषिक्तं महासेनं सैनापत्ये मरुत्वता[2] ॥२३॥

---

१. र. २।७२. २. कुमारसंभवं स्मरणीयमत्र । र. ७।१

राजा—अनुगृहीतोऽस्मि मघवता ।

नार०—भो राजन् ! किं ते भूयः प्रियमुपकरोतु पाकशासनः ?

राजा—यदि मे मघवा प्रसन्नः किमतः परमिच्छामि । तथापि इदमस्तु—

( भरतवाक्यम् )

परस्पर-विरोधिन्योरेकसंश्रय-दुर्लभम् ।
सङ्गतं श्रीसरस्वत्योर्भूतयेऽस्तु सदा सताम्[1] ॥२४॥

अपि च—

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु ॥२५॥

(निष्क्रान्ताः सर्वे । )

॥ इति पञ्चमोऽङ्कः ॥

[समाप्तमिदं श्रीकालिदासकृतं विक्रमोर्वशीयं नाम त्रोटकम्]

---

१. र. ६।२९.

# पात्राणि

[पुरुषाः]

| पात्रम् | परिचयः |
|---|---|
| सूत्रधारः | नाटकप्रवन्धकः |
| दुष्यन्तः | नायकः |
| माधव्यः | विदूषकः |
| सर्वदमनः | शकुन्तलासूनुः |
| सोमरातः | पुरोहितः |
| श्यालः | प्रधानपुरुषः (Police officer) |
| सूचकः, जानुकः | पुरुषौ (Police men) |
| रैवतकः, करभकः, कञ्चुकी | दौवारिकाः दासाः |
| वैतालिकौ | वन्दिनौ |
| कण्वः | काश्यपः शकुन्तलायाः पालयिता पिता |
| वैखानसः, शार्ङ्गरवः, शारद्वतः, हारीतः, गोतमः | कण्वाश्रमिणः |
| मातलिः | इन्द्रसारथिः |
| मारीचः | कण्वसगोत्रः इन्द्रस्य पिता कश्यपः |

[स्त्रियः]

| पात्रम् | परिचयः |
|---|---|
| नटी | |
| शकुन्तला | नायिका |
| अनसूया, प्रियम्वदा | नायिकासख्यौ |
| गौतमी | कण्वाश्रमस्य वृद्धा तपस्विनी |
| चतुरिका, परभृतिका, मधुकरिका, प्रतीहारी, यवन्यः | राजसेविकाः |
| सानुमती | मेनकासखः अप्सरोविशेषः |
| अदितिः | मरीचस्य दाराः, इन्द्रस्य प्रसूः |

# अभिज्ञानशाकुन्तलम्

[ [1]पूर्वरङ्गः : नान्दी ]

या सृष्टिः स्रष्टुराद्या, वहति विधिहुतं या हविर्, या च होत्री,
ये द्वे कालं विधत्तः, श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्ववीजप्रकृतिरिति, यया प्राणिनः प्राणवन्तः,
प्रत्यक्षाभिः [2]प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः[3] ॥१॥

(नान्द्यन्ते)

॥ [4]अथ प्रस्तावना ॥

([5]प्रविशति सूत्रधारः)

सूत्र०—(नेपथ्याभिमुखमवलोक्य) आर्ये ! यदि[6] नेपथ्यविधानमवसितम्, इत आगम्यताम् ।

नटी—(प्रविश्य) अज्ज ! इयं म्हि । (आर्य ! इयमस्मि ।)

सूत्र०—आर्ये ! [7] अभिरूपभूयिष्ठा परिषदियम् । अत्र खलु कालिदास-ग्रथितवस्तुना अभिज्ञानशाकुन्तल[8]-नामधेयेन नवेन नाटके-नोपस्थातव्यमस्माभिः । तत् प्रतिपात्रम् आधीयतां यत्नः ।

---

१. इयमस्मद्योजना । अत्र नान्दीपदार्थाय द्र० अत्रैव २५७-८ पृ० टि० अद्यापि नाड़ीति पाञ्चापो मृदङ्गपर्यायः । सुकरोऽत्र चित्रनान्दीप्रयोगः ।

२. प्रसन्न० पा०

३. पञ्च महाभूतानि, सूर्याचन्द्रमसौ यजमानश्चेत्यष्टौ प्रत्यक्षाः ईश्वरमूर्त्तयः । द्र० र. ३।६६, ५।४, ९।२१, मा. १।१, कु. ६।७६. अस्माकं सीताचरिते ६।२०. ४-५. इमे अस्मद्योजने ।

६. अत्रेदं बोध्यम्—'यान्यत्र पादटिप्पणीषु पाठान्तराणि तानि मा. पि. सा. च. संस्करणेषु सुलभानीति न तेषामैकान्तिकोऽत्र निर्देशः ।

७. आर्ये इयं हि रसभावविशेषदीक्षागुरोर् विक्रमादित्यस्य अभिरूपभूयिष्ठा परिषत् । अस्यां च कालि०० यत्नः—च. । तत्र '०अभिरूपो बुधे रम्ये' रा. ।

८. ०शकुन्तल० मा. पि. । अत्राधिकरणल्युटाऽभिज्ञानशब्दम्, 'अधिकृत्य कृतं नाटकमि'ति शाकुन्तलशब्दं च व्युत्पाद्योभयोः कर्मधारयेण शक्यव्युत्पत्तिकः 'अभिज्ञानशाकुन्तल'-शब्दः इत्येके । शाकुन्तलः शाकुन्तलेयोऽपि, शकुन्तलायां-

नटी—सुविहिदप्पग्रोअदाए अज्जस्स ण किं वि परिहाइस्सदि ।
(सुविहितप्रयोगतयार्यस्य न किमपि परिहास्यते । )

सूत्र०—आर्ये कथयामि ते भूतार्थम्,—

आ परितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
वलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ।।२।।

नटी—अज्ज ! एवं णेदं । दाणिं अणंतरकरणिज्जं[1] आणवेदु ग्रज्जो ।
(आर्य ! एवं न्विदम् । अनन्तरकरणीयम्, इदानीमार्य आज्ञापयतु ।)

सूत्र०—किमन्यद्[2] अस्याः परिषदः श्रुतिप्रसादनतः ।

नटी—अध कदमं उण उदुं समास्सिअ गाइस्सं ।
(अथ कतमं पुनः ऋतुं समाश्रित्य गायानि)

सूत्र०—ननु इममेव तावत्, अचिरप्रवृत्तम् उपभोगक्षमं ग्रीष्मसमय-मधिकृत्य । संप्रति हि,—

सुभगसलिलावगाहाः[3] पाटलसंसर्गिसुरभिवनवाताः ।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ।।३।।

नटी—तह । (तथा ।) (गायति)

ईसीसिचुंविग्राइं[4] भमरेहिं[5] सुउमारकेसरसिहाइं ।
ओदंसयंति दग्रमाणा पमदाओ सिरीसकुसुमाइं ।।४।।

(ईषदीषच्चुम्बितानि भ्रमरैः सुकुमारकेसरशिखानि ।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ।।)

---

—जातत्वात्, मिथिलायां जातत्वान्मैथिलवत् (अ०सू० ४.३.२५, ५३) । एवं च शाकपार्थिवादित्वात् करण-ल्युण्णिष्पत्तिकाऽ'भिज्ञान'-पदग्राह्याङ्गुली-यकरक्षाकरण्डक-विशिष्टं यत्, 'शकुन्तलां, तस्यां जातं शाकुन्तलं चा'-धिकृत्य कृतं च यत्, तन्नाटकम् 'अभिज्ञानशाकुन्तलमि'-ति साधीयान् पन्थाः ।

१. णेदं अणंतरकरणिज्जं अज्जो आणवेदु नि.
२. ०नतः । तदिदमेव—०कृत्य गीयताम् नि. ३. सुलभ०.
४. खणचु०. ५. ०हिं उअह ( = ऊहत).

सूत्र०—आर्ये ! साधु गीतम् । अहो रागलिखितचित्तवृत्तिः, आलिखित इव सर्वतो रङ्गः। तत् इदानीं कतमं प्रयोगमाश्रित्य एनमाराधयाम ?

नटी—णं अज्जमिस्सेहिं पढमं जेव्व आणत्तं अहिण्णाणसाउंदलं[1] णाम अपुव्वं णाडअं पओए अहिकरीअदु त्ति। (नन्वार्यमिश्रैः प्रथममेवाज्ञप्तम् अभिज्ञानशाकुन्तलं नाम अपूर्वं नाटकं प्रयोगे अधिक्रियतामिति ।)

सूत्र०—आर्ये ! सम्यगनुबोधितोऽस्मि । ननु अस्मिन् क्षणे विस्मृतं खलु मया ।

तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः[2] सारङ्गेणातिरंहसा ॥५॥

(निष्क्रान्तौ)

॥ इति प्रस्तावना [3]पूर्वरङ्गश्च ॥

---

१. ०सउंदलं = ०शकुन्तलम् मा. पि.
२. दुःपन्तः । अग्रेऽप्येवमेव दुष्पन्त इत्येव पाठः ।
३. पूर्वरङ्गश्चेत्यस्माकं योजना ।

## [1]अथ प्रथमोऽङ्कः

(ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा रथेन सूतश्च)

सूतः—(राजानं मृगं चावलोक्य) आयुष्मन् !

कृष्णशारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके ।
मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम् ॥६॥

राजा—सूत ! दूरममुना सारङ्गेण वयमाकृष्टाः । अयं पुनरिदानी-मपि—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने [2]बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥७॥

तदेष कथमनुपतत एव प्रयत्नप्रेक्षणीयः संवृत्तः ?

सूतः—आयुष्मन् ! उद्घातिनी भूमिरिति मया रश्मिसंयमनाद्, रथस्य मन्दीकृतो वेगः । तेन मृग एष विप्रकृष्टान्तरः संवृत्तः । संप्रति समदेशवर्तिनस्ते न दुरासदो भविष्यति ।

राजा—तेन हि मुच्यन्तामभीषवः ।

सूतः—यदाज्ञापयत्यायुष्मान् (रथवेगं निरूप्य) आयुष्मन् ! पश्य पश्य,—

मुक्तेषु रश्मिषु निरायतपूर्वकाया
[3]निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः ।
आत्मोद्धतैरपि रजोभिरलङ्घनीया
धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥८॥

---

१. इयमस्मद्योजना २. दत्तदृष्टिः.

३. स्वैषामपि प्रसरतां रजसामलङ्घ्याः ।
निष्कम्पचामरशिखाश्च्युतकर्णभङ्गा
धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते ॥'

राजा—(सहर्षम्) सत्यम्, अतीत्य हरितोऽपि[1] हरीन् वर्तन्ते वाजिनः। तथा हि—

यदालोके सूक्ष्मं, व्रजति सहसा तद्, विपुलतां,
यदर्धे विच्छिन्नं, भवति कृतसंधानमिव तत्।
प्रकृत्या यद् वक्रं, तदपि, समरेखं, नयनयोर्,
न मे, दूरे किंचित्, क्षणमपि, न पार्श्वे, रथजवात्॥९॥

सूत ! पश्यैनं व्यापाद्यमानम्। (शरसंधानं नाटयति)

(नेपथ्ये)

भो भो राजन् ! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः।

सूतः—(आकर्ण्यावलोक्य च) आयुष्मन् ! अस्य खलु ते वाणपातवर्तिनः कृष्णशारस्यान्तरे, तपस्विन उपस्थिताः।

राजा—(ससंभ्रमम्) तेन हि प्रगृह्यन्तां वाजिनः[2]।

सूतः—तथा। (रथं स्थापयति)

(ततः प्रविशत्यात्मना तृतीयो वैखानसः)

वैखा०—(हस्तमुद्यम्य) राजन् ! आश्रम-मृगोऽयम्, न हन्तव्यः, न हन्तव्यः।

द्विती०—न खलु न खलु वाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे [3]तूलराशाविवाग्निः।

तृती०—क्व वत हरिणकानां जीवितं चातिलोलं
क्व च निशितनिपाता [4]वज्रसाराः शरास्ते॥१०॥

वैखा०— तत्, [5]साधु कृतसन्धानं प्रतिसंहर सायकम्।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि[6]॥११॥

---

१. कथमतीत्य हरिणं हरयो वर्तन्ते, हरितो हरींश्च नि.। हरितो हरिद्वर्णान् हरीन् सूर्यस्येन्द्रस्य चाश्वान्। द्र. र. ३।२२, ३०, ४३.।

२. निगृह्यन्तामभीषवः.

३. पुष्प०

४. सारपुङ्खाः पा०, पद्यमिदं पा० नि.

५. आशु.

६. विश्वसंबोधनमिदं यावत्सूष्टिकम्.

राजा—एष प्रतिसंहृतः। (यथोक्तं करोति)

वैखा०—सदृशमेतत् पुरुवंशप्रदीपस्य।

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव।
पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि[१] ॥१२॥

इत०—(बाहू उद्यम्य) सर्वथा चक्रवर्त्तिनं पुत्रमाप्नुहि[१]।

राजा—(सप्रणामम्) प्रतिगृहीतम्।

वैखा—राजन्! समिदाहरणाय प्रस्थिता वयम्। एष खलु कण्वस्य [२]कुलपतेः अनुमालिनीतीरमाश्रमो दृश्यते। न चेदन्यकार्यातिपातः, प्रविश्य प्रतिगृह्यताम् आतिथेयः सत्कारः। अपि च—

[३]रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य।
ज्ञास्यसि कियद् भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥१३॥

राजा—अपि संनिहितोऽत्र कुलपतिः?।

वैखा०—इदानीमेव दुहितरं शकुन्तलाम् अतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं[४] गतः।

राजा—भवतु। तां द्रक्ष्यामि। सा खलु विदितभक्ति मां महर्षेः करिष्यति।

वैखा०—साधयामस्तावत्। (सशिष्यो निष्क्रान्तः)

राजा—सूत! चोदयाश्वान्। पुण्याश्रमदर्शनेन तावदात्मानं पुनीमहि।

सूतः—यदाज्ञापयत्यायुष्मान्। (भूयो रथवेगं निरूपयति)

राजा—(समन्तादवलोक्य) सूत! अकथितोऽपि ज्ञायत एव यथा अयमाभोगस्तपोवनस्येति।

सूतः—कथमिव?।

१. एतदेव शाकुन्तलस्य प्रयोजनमिति वयम्, अभिनवभारत्यामभिनवगुप्तश्च।
२. महर्षेः मा.    ३. धर्म्याः पा०
४. सोमतीर्थमिदं दुष्यन्तोऽपि, सोमवंशीयत्वाद्, राजत्वाच्च। द्र. शा. ४।१२, आश्रममृगोऽपि कण्व एव कच्चित्।

राजा—किं न पश्यति भवान्? इह हि,—

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः[1] ॥१४॥

सूतः—सर्वमुपपन्नम्।

राजा—(स्तोकमन्तरं गत्वा) तपोवननिवासिनामुपरोधो मा भूत्। एताव-त्येव रथं स्थापय। यावदवतरामि।

सूतः—धृताः प्रग्रहाः। अवतरत्वायुष्मान्।

राजा—(अवतीर्य) सूत! विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम। इदं तावद् गृह्यताम् (सूतस्याभरणानि धनुश्चोपनीय) सूत! यावदा-श्रमवासिनः प्रत्यवेक्ष्य, अहमुपावर्ते तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः।

सूतः—तथा। (निष्क्रान्तः)

राजा—(परिक्रम्यावलोक्य च) इदमाश्रमद्वारम्। यावत् प्रविशामि। (प्रविश्य, निमित्तं सूचयन्)

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥१५॥

(नेपथ्ये)

इदो इदो सहिओ!। (इत इतः सख्यौ!)

राजा—(कर्णं दत्त्वा) अये! दक्षिणेन वृक्षवाटिकाम् आलाप इव श्रूयते। यावदत्र गच्छामि। (परिक्रम्यावलोक्य च) अये! एतास्तपस्वि-कन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते। (निपुणं निरूप्य) अहो! मधुरमासां दर्शनम्,—

---

१. 'अपि च—कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूला भिन्नो रागः किस-लयरुचामाज्यधूमोद्गमेन। एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां नष्टात-(श)-ङ्का हरिणशिशवो मन्दमन्दं चरन्ति'। अत्र प्रसृतिचपलैरिति पा०

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥१६॥

[1]यावदिमां छायामाश्रित्य प्रतिपालयामि । (विलोकयन् स्थितः)

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला)

शकु०—इदो इदो सहीओ ! ।(इत इतः सख्यौ !)

अनसूया—हला सउंदले ! तुवत्तो वि तादकस्सवस्स अस्समरुक्खआ पिअदरेत्ति तक्केमि, जेण णोमालिआकुसुमपेलवा तुमं वि एदाणं आलवालपूरणे णिउत्ता । (हला शकुन्तले ! त्वत्तोऽपि तातकाश्यपस्य आश्रमवृक्षकाः प्रियतरा इति तर्कयामि, येन नवमालिका-कुसुमपेलवा त्वमपि एतेषामालवालपूरणे नियुक्ता ।)

शकु०—ण केअलं [2]तादणिओओ एव्व, अत्थि मे सोदरसिणेहो एदेसु । (न केवलं तातनियोग एव, अस्ति मे सोदरस्नेह एतेषु ।) (वृक्षसेचनं रूपयति)

राजा—(आत्मगतम्) कथमियं सा कण्वदुहिता ? असाधुदर्शी खलु तत्रभवान् काश्यपः, य इमामाश्रमधर्मे[3] नियुङ्क्ते ।

इदं किलाव्याजमनोहरं वपुः,
तपःक्षमं[4] साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
[5]समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥१७॥

भवतु; पादपान्तर्हित एव विस्रब्धं तावदेनां पश्यामि । (तथा करोति)

शकु०—हला अणसूए ! अदिपिणद्धेण वक्कलेण पिअंवदाए दिढं णिअंतिद म्हि । सिढिलेहि दाव णं । (हला अनसूये ! अतिपिनद्धेन वल्कलेन प्रियंवदया दृढं नियन्त्रितास्मि । शिथिलय तावदेतत् ।)

अन०—तह (तथा) । (शिथिलयति)

---

१. यावदेताश्छायामाश्रितास्तावत्.
२. तादस्स णिओगो ममावि सहोअरसि० ३. वल्कलधारणे नि०
४. तपःक्लमं. ५. शमी०.

प्रियं०—(सहासम्) एत्थ पओहरवित्थारइत्तअं अत्तणो जोव्वणं उवालह[1]। (अत्र पयोधरविस्तारयितृ आत्मनो यौवनमुपालभस्व।)

राजा[2]—कामम् अननुरूपमप्यस्य वयसः[3], वल्कलम्, न पुनरलङ्कारश्रियं न पुष्यति। कुतः—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥१८॥

शकु०—(अग्रतोऽवलोक्य) सहिओ! एसो वादेरिदपल्लवंगुलीहिं तुवरेदि विअ मं केसररुक्खओ। जाव णं संभावेमि। (सख्यौ! एष वातेरितपल्लवाङ्गुलीभिस्त्वरयतीव मां केसरवृक्षकः। यावदेनं संभावयामि। (परिक्रामति)

प्रियं०—हला सउंदले! एत्थ एव्व दाव मुहुत्तअं चिट्ठ।

शकु०—किं णिमित्तं? (किं निमित्तम्?)

प्रियं०—जाव तुए उवगदाए लदासणाहो विअ अअं केसररुक्खओ पडिभादि। (हला शकुन्तले! अत्रैव तावन्मुहूर्तं तिष्ठ, यावत् त्वयोपगतया लतासनाथ इवायं केसरवृक्षकः प्रतिभाति।)

शकु०—अदो खु पिअंवदा सि तुमं (अतः खलु प्रियंवदाऽसि त्वम्।

राजा—प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा। अस्याः खलु,—

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥१९॥

---

१. उद्दालहसु, मं किं उवालंभेसि.

२. सम्यगियमाह—'इदमुपहितसूक्ष्मग्रन्थिना स्कंधदेशे स्तनयुगपरिणाहाच्छादिना वल्कलेन। वपुरभिनवमस्याः पुष्यति स्वां न शोभां कुसुममिव पिनद्धं पाण्डुपत्रोदरेण॥' अथवा

३. वपुषः.

अन०—[1]हला सउंदले ! इअं सअंवरवहू सहआरस्स तुए किदणामहेआ वणजोसिणित्ति णोमालिआ। णं विसुमरिदा सि ? (हला शकुन्तले ! इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नवमालिका। एनां विस्मृतवत्यसि ?)

शकु०—तदा अत्ताणं वि विसुमरिस्सं। (लतामुपेत्यावलोक्य च) हला ! रमणीए खु काले इमस्स लदापाअवमिहुणस्स वइअरो संवुत्तो। णवकुसुमजोव्वणा वणजोसिणी, सिणिद्धपल्लवदाए अ उवभोअक्खमो सहआरो। (तदात्मानमपि विस्मरिष्यामि (लतामुपेत्यावलोक्य च) हला ! रमणीये खलु काले एतस्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः। नवकुसुमयौवना वनज्योत्स्ना, स्निग्धपल्लवतया च उपभोगक्षमः सहकारः। (पश्यन्ती तिष्ठति ।)

प्रियं०—अणसूए ! जाणासि किंणिमित्तं सउंदला वणजोसिणीं अदिमेत्तं पेक्खदित्ति ? । (अनसूये ! जानासि किंनिमित्तं शकुन्तला वनज्योत्स्नामतिमात्रं पश्यति ? ।)

अन०—ण क्खु विभावेमि। कहेहि। (न खलु विभावयामि। कथय।)

प्रियं०—जह वणजोसिणी अणुरूवेण पाअवेण संगदा, अवि णाम एव्वं अहं वि अत्तणो अणुरूवं वरं लहेअत्ति। (यथा वनज्योत्स्ना अनुरूपेण पादपेन संगता, अपि नाम एवमहमप्यात्मनोऽनुरूपं वरं लभेयेति ।)

शकु०—एसो णूणं तुह अत्तगदो मणोरहो। (एष नूनं तवात्मगतो मनोरथः ।) (कलशमावर्जयति)

राजा—अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात् ? अथवा कृतं संदेहेन,—

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥२०॥

तथापि तत्त्वत एवैनामुपलप्स्ये।

---

१. अनुसूया—हला सउंतले, इअं तादकण्णेण तुमं विअ सहत्थसंवड्ढिदा माहवीलदा। इमं विसुमरिदासि ।.

शकु०—(ससंभ्रमम्) अम्मश्रो ! सलिलसेअसंभमुग्गदो णोमालिअं उज्झिअ वअणं मे महुअरो अहिवट्टइ । (अहो ! सलिलसेकसंभ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते ।) (भ्रमबाधां रूपयति)

राजा—(सस्पृहं विलोक्य)[१]

चलापाङ्गां दृष्टिं[२] स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती[३] ॥२१॥

शकु०—ण एसो धिट्ठो विरमदि । अण्णदो गमिस्सं । (पदान्तरे स्थित्वा, सदृष्टिक्षेपम्) कहं इदो वि आअच्छदि? । हला ! परित्ताअह मं इमिणा दुव्विणीदेण दुट्ठमहुअरेण अहिभूअमाणं । (न एष धृष्टो विरमति । अन्यतो गमिष्यामि । (पदान्तरे स्थित्वा सदृष्टिक्षेपम्) कथमितोऽप्यागच्छति ? । हला ! परित्रायेथां माम् अनेन दुर्विनीतेन दुष्टमधुकरेण अभिभूयमानाम् ।)

उभे—(सस्मितम् ।) का अम्हे परित्तादुं ? । दुस्संदं आक्कंद । राअरक्खिदव्वाइं तेवोवणाइं णाम । (के आवां परित्रातुम् ? । दुष्यन्तमाक्रन्द । राजरक्षितव्यानि तपोवनानि नाम ।)

राजा—अवसरोऽयमात्मानं प्रकाशयितुम् । न भेतव्यं न भेतव्यम्—(अर्धोक्ते स्वगतम्) राजभावस्त्वभिज्ञातो भवेत् । भवतु । एवं तावदभिधास्ये ।

शकु०—(पदान्तरे स्थित्वा, सदृष्टिक्षेपम्) कहं इदो वि मं अणुसरदि ? । (कथमितोऽपि मामनुसरति ? ।)

राजा—(सत्वरमुपसृत्य)

कः पौरवे वसुमतीं शासति, शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥२२॥

(सर्वा राजानं दृष्ट्वा किंचिदिव संभ्रान्ताः)

---

१. 'यतो यतः षट्चरणोऽभिवर्तते ततस्ततः प्रेरितवामलोचना । विवर्तितभ्रूरियमद्य शिक्षते भयादकामापि हि दृष्टिविभ्रमम्' ॥ अपि च.

२. चलापाङ्गं दृष्टः च., अन्ये च विदग्धाः ।

३. भ्रमरस्वभावोक्त्या स्वभावोक्तिरलंकारः ध्व०.

अन०—अज्ज ! ण खु किंवि अच्चाहिदं । इअं णो पिअसही महुअरेण अहिहूअमाणा कादरीभूदा । (आर्य ! न खलु किमप्यत्याहितम् । इयं नो प्रियसखी मधुकरेणाभिभूयमाना कातरीभूता ।) (शकुन्तलां दर्शयति)

राजा—(शकुन्तलाभिमुखो भूत्वा) अपि तपो वर्धते ? ।

(शकुन्तला साध्वसादवचना तिष्ठति)

अन०—दाणिं अदिहिविसेसलाहेण । (शकुन्तलामुद्दिश्य) हला सउंदले ! गच्छ उडअं; फलमिस्सं अग्घं उवहर । इदं पादोदअं भविस्सदि । (इदानीमतिथिविशेषलाभेन । [शकुन्तलामुद्दिश्य] हला शकुन्तले ! गच्छोटजम्; फलमिश्रमर्घमुपहर । इदं पादोदकं भविष्यति ।)

राजा—[1]भवतीनां सूनृतयैव[2] गिरा कृतमातिथ्यम् ।

प्रियं०—तेण हि इमस्सिं पच्छाअसीअलाए सत्तवण्णवेदिआए मुहुत्तअं उवविसिअ परिस्समविणोदं करेदु अज्जो । (तेन ह्यस्यां प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोत्वार्यः ।)

राजा—नूनं यूयमप्यनेन कर्मणा परिश्रान्ताः ।

अन०—हला सउंदले ! उइदं णो पज्जुवासणं अदिहीणं; एत्थ उवविसम्ह । (हला शकुन्तले ! उचितं नः पर्युपासनमतिथीनाम्; अत्रोपविशामः ।) (सर्वे उपविशन्ति)

शकु०—(आत्मगतम्) किं णु खु इमं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणीअ म्हि संवुत्ता ? । (किं नु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता ?।)

राजा—(सर्वा विलोक्य) अहो ! समानवयोरूपरमणीयं[3] भवतीनां सौहार्दम् ।

---

१. भवति ! सूनृतयैव वाचा कृत०

२. र० १।९३, ६।२९

३. शा. ६।१४-१५ ग

प्रियं०—(जनान्तिकम्) अणसूए ! को णु क्खु एसो चउरगंभीराकिदी चउरं पिअं आलवंतो पहाववंदो विअ लक्खीअदि ? । (अनसूये ! को नु खल्वेष चतुरगम्भीराकृतिश्चतुरंप्रियमालपन् प्रभाववानिव लक्ष्यते ? ।)

अन०—सहि ! मम वि अत्थि कोदूहलं । पुच्छिस्सं दाव णं । (प्रकाशम्) अज्जस्स महुरालावजणिदो वीसंभो मं मंतावेदि—कदमो अज्जेण राएसिणो वंसो अलंकरीअदि ? कदमो वा विरहपज्जुस्सुअजणो किदो देसो ? किंणिमित्तं वा सुउमारदरो वि तवोवणगमण-परिस्समस्स अत्ता पदं उवणोदो ? (सखि ! ममाप्यस्ति कौतूहलम् । पृच्छामि तावदेनम् । (प्रकाशम्) आर्यस्य मधुरालापजनितो विस्रम्भो मां मन्त्रयते—कतम आर्येण राजर्षेर्वंशोऽलंक्रियते ? कतमो वा विरह-पर्युत्सुकजनः कृतो देशः ? किंनिमित्तं वा सुकुमारतरोऽपि तपोवनगमन-परिश्रमस्य आत्मा पदमुपनोतः ? ।)

शकु०—(आत्मगतम्) हिअअ मा उत्तम्म । एसा तुए चिंतिदाइं अणसूआ मंतेदि ! (हृदय ! मा उत्ताम्य । एपा त्वया चिन्तितानि अनसूया मन्त्रयते ।)

राजा—(आत्मगतम्) कथमिदानीमात्मानं निवेदयामि ? कथं [१]वा परिहारं करोमि ? भवतु; एवं तावदेनां वक्ष्ये । (प्रकाशम्) भवति ! यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहम-विघ्नक्रियोपलम्भाय पुण्याश्रमदर्शनप्रसङ्गेन धर्मारण्यमिदमा-यातः ।

अन०—सणाहा दाणिं धम्मआरिणो । (सनाथा इदानीं धर्मचारिणः ।)

(शकुन्तला शृङ्गारलज्जां रूपयति)

सख्यौ—(उभयोराकारं विदित्वा, जनान्तिकम्) हला सउंदले ! जइ एत्थ अज्ज तादो संणिहिदो भवे । (हला शकुन्तले ! यदि अत्र अद्य तातः संनिहितो भवेत् ।)

शकु०—(सरोषमिव) तदो किं भवे ? । (ततः किं भवेत् ? ।)

---

१. वात्मनः परिहारं.

सख्यौ—इमं जीविदसव्वस्सेण वि अदिहिविसेसं किदत्थं करिस्सदि !
(इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिष्यति ।)

शकु०—(सकृतककोपम्) तुम्हे अवेध । किं वि हिअए करिअ मंतेध । ण वो वअणं सुणिस्सं । (युवामपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । न युवयोर्वचनं श्रोष्यामि ।)

राजा—वयमपि तावद् भवत्योः सखीगतं किमपि पृच्छामः ।

सख्यौ—अज्ज ! अणुग्गहो विअ इअं अब्भत्थणा ।
(आर्य ! अनुग्रह इव इयमभ्यर्थना ।)

राजा—भगवान् काश्यपः शाश्वते ब्रह्मणि स्थित इति प्रकाशः । इयं च वः सखी तदात्मजेति कथमेतत् ? ।

अन०—सुणादु अज्जो । अत्थि को वि कोसिओत्ति गोत्तणामहेओ महाप्पहावो राएसी । (शृणोत्वार्यः । अस्ति कोऽपि कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः ।)

राजा—अस्ति, श्रूयते ।

अन०—तं णो पिअसहीए पहवं अवगच्छ । उज्झिआए सरीरसंवड्ढणादीहिं तादकस्सवो से पिदा । (तमावयोः प्रियसख्याः प्रभवमवगच्छ । उज्झितायाः शरीरसंवर्धनादिभिस्तातकाश्यपोऽस्याः पिता ।)

राजा—'उज्झित'-शब्देन जनितं मे कौतूहलम् । आ मूलाच्छ्रोतुमिच्छामि ।

अन०—सुणादु अज्जो; गोदमीतीरे पुरा किल तस्स राएसिणो उग्गे तवसि वट्टमाणस्स किंवि जादसंकेहिं देवेहिं मेणआ णाम अच्छरा पेसिदा णिअमविग्घकालिणी । (शृणोत्वार्यः; गौतमीतीरे पुरा किल तस्य राजर्षेः उग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर् मेनका नामाप्सराः प्रेपिता नियमविघ्नकारिणी ।)

राजा—अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् ।

अन०—तदो वसंतोदाररमणीए समए से उम्मादइत्तअं रूवं पेक्खिअ,—
(ततो वसन्तोदाररमणीये समये तस्या उन्मादयितृ रूपं प्रेक्ष्य,—)
(अर्धोक्ते लज्जया विरमति ।)

राजा—[३]परस्ताज्ज्ञायत एव । सर्वथा अप्सरः००संभवैषा ।

अन०—अह इं ? । (अथ किम् ? ।)

राजा—उपपद्यते,—

मानुषीषु[१] कथं वा स्यादस्य रूपस्य संभवः ? ।
न प्रभातरलं [२]ज्योतिरुदेति वसुधातलात् ।।२३।।

(शकुन्तलाऽधोमुखी तिष्ठति)

राजा—(आत्मगतम् ।) लब्धावकाशो मे मनोरथः । किंतु सख्याः परिहासोदाहृतां वरप्रार्थनां श्रुत्वा [३]द्वैधीभावकातरं मे मनः ।

प्रियं०— (सस्मितं शकुन्तलां विलोक्य नायकाभिमुखी भूत्वा) पुणो वि वत्तुकामो विअ अज्जो । (पुनरपि वक्तुकाम इवार्यः ।)

(शकुन्तला सखीमङ्गुल्या तर्जयति)

राजा—सम्यगुपलक्षितं भवत्या । अस्ति नः सच्चरितश्रवणलोभादन्यदपि प्रष्टव्यम् ।

प्रियं०—अलं विआरिअ । अणिअंतणाणुओओ तवस्सिअणो णाम । (अलं विचार्य । अनियन्त्रणानुयोगस्तपस्विजनो नाम)

राजा—[४]एतत् पृच्छामि —

वैखानसं किमनया व्रतमा प्रदानाद्
व्यापाररोधि मदनस्य निषेवितव्यम् ।
अत्यन्तमेव[५] सदृशेक्षणवल्लभाभि[६]-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ।।२४।।

प्रियं०—अज्ज ! धम्मचरणे वि परवसो अअं जणो । गुरुणो उण से अणरूववरप्पदाणे संकप्पो । (आर्य ! धर्माचरणेऽपि[७] परवशोऽयं जनः । गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः ।)

---

१. 'मानुषीभ्यः कथं नु स्या० २. ज्योतिस्तारका, द्र. मे. २।४, कु० ८।८४
३. धृतद्वै०. ४. इति सखीं ते ज्ञातुमिच्छामि ।
५. ०मात्मसदृशे०, ० मेव मदिरे च. नि.
६. कु. ५।१३,२५, र. १।४०, ८।५९, मे. २।४१
७. अपिशब्दान्मदनव्यापारेऽपि ।

राजा—(आत्मगतम्) न दुरवापा इयं खलु प्रार्थना ।

भव हृदय ! साभिलाषं संप्रति संदेहनिर्णयो जातः ।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥२५॥

शकु०—(सरोपमिव) अणसूए ! गमिस्सं अहं । (अनसूये ! गमिष्याम्यहम् ।)

अन०—किंणिमित्तं ? । (किंनिमित्तम् ? ।)

शकु०—इमं असंवद्धप्पलाविणि पिअंवदं अज्जाए गोदमीए णिवेदइस्सं । (इमामसंवद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि ।)

अन०—सहि ! ण जुत्तं ते अकिदसक्कारं अदिहिविसेसं विसज्जिअ सच्छंददो गमणं । (सखि ! न युक्तं ते अकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम् ।)

(शकुन्तला न किंचिदुक्त्वा प्रस्थितैव)

राजा—कथं गच्छति ? (ग्रहीतुमिच्छन्निगृह्यात्मानम्, आत्मगतम्) अहो ! चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः । अहं हि,—

अनुयास्यन् मुनितनयां सहसा विनयेन वारितप्रसरः ।
[1]स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥२६॥

प्रियं०—(शकुन्तलां निरुध्य) हला ! ण दे जुत्तं गंतुं । (हला ! न ते युक्तं गन्तुम् ।)

शकु०—(सभ्रूभङ्गम्) किंणिमित्तं ? । (किंनिमित्तम् ? । )

प्रियं०—रुक्खसेअणे दुवे धारेसि मे । एहि जाव; अत्ताणं मोचिअ तदो गमिस्ससि । (वृक्षसेचने द्वे धारयसि मे । एहि तावत्; आत्मानं मोचयित्वा ततो गमिष्यसि ।) (वलादेनां निवर्तयति)

राजा—भद्रे ! वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये । तथाहि अस्याः,—

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
स्रस्तं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
वन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः[2] ॥२७॥

तदहमेनामनृणां करोमि । (अङ्गुलीयं दातुमिच्छति)

---

१. स्थानादचलन्नपि

२. कुमारसंभवब्रह्मचारिणं विडम्बयत्यत्र नायकः । ब्रह्मचार्यपि पार्वत्यास्तानि तानि अङ्गानि निर्वर्णयति ।

(उभे नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः)

राजा—अलमन्यथा[1] संभाव्य । राज्ञः [2]परिग्रहोऽयम् ।

प्रियं०—तेण हि णारिहदि एदं [3]अंगुलीअअं अंगुलीविओअं । अज्जस्स [4]वअणेण ज्जेव अणिरिणा एसा । (किंचिद् विहस्य) हला सउंदले ! मोइदासि अणुअंपिणा अज्जेण, अहवा महाराएण; गच्छ दाणिं । (तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलीवियोगम् । आर्यस्य वचनेनैव अनृणा एषा । (किञ्चिद् विहस्य) हला शकुन्तले ! मोचितासि अनुकम्पिना आर्येण, अथवा महाराजेन; गच्छेदानीम् ।)

शकु०— (आत्मगतम्) गमिस्सं जइ अत्तणो पहविस्सं । (प्रकाशम्) का तुमं विसज्जिदव्वस्स रुंधिदव्वस्स वा ? । (गमिष्यामि, यद्यात्मनः प्रभविष्यामि । (प्रकाशम्) का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा ? ।)

राजा—(शकुन्तलां विलोक्य, आत्मगतम्) किं नु खलु यथा वयम् अस्याम्, एवम् इयमपि अस्मान् प्रति स्यात् । अथवा लब्धावकाशा मे प्रार्थना । कुतः—

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यवहिता[5] मयि भाषमाणे ।
कामं न तिष्ठति मदानन[6]-संमुखीयं
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥२८॥

(नेपथ्ये)

भो भोस्तपस्विनः ! संनिहितास्तपोवनसत्त्वरक्षायै भवत । प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः ।

तुरगखुरहतस्तथा हि रेणु-
विटप-विषक्त-जलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु ॥२९॥

---

१. अलमस्मानन्यथा. —२. ०परिग्रहोऽयम् इति राजपुरुषं मामवगच्छथ ।
३. अंगुरीअविओअं कादुं अज्जो.
४. वअणादो ज्जेव अरिणा दाणिं एसा भोदु.
५. ददात्यभिमुखं. ६. ०संमुखीना.

अपि च[1]—

तीव्राघातादभिमुख[2]तरुस्कन्धभ[3]ग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसंजातपाशः ।
मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं [4]विरुजति गजः स्यन्दनालोकभीतः ॥३०॥

(सर्वाः कर्णं दत्त्वा किंचिदिव संभ्रान्ताः)

राजा—(आत्मगतम्) अहो धिक् । [5]पौरा अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति । भवतु; प्रतिगमिष्यामस्तावत् ।

सख्यौ—अज्ज ! इमिणा आरण्णअवुत्तंतेण पज्जाउल म्ह । अणुजाणीहि णो उडअगमणस्स । (आर्य ! अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीहि नः उटजगमनाय । )

राजा[6]—(ससंभ्रमम्) गच्छन्तु भवत्यः । वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे ।

(सर्व उत्तिष्ठन्ति)

सख्यौ—अज्ज [7]असंभाविदअदिहिसक्कारं भूओ वि पेक्खणणिमित्तं लज्जेमो अज्जं विण्णवेदुं । (आर्य असंभावितातिथिसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जावहे आर्यं विज्ञापयितुम् ।)

राजा—मा मैवम्; दर्शनेनैवात्रभवतीनां पुरस्कृतोऽस्मि[8] ।

---

१. राजा—(स्वगतम्) अहो धिक्००००रुन्धन्ति ?। (पुनर्नेपथ्ये) भोस्तपस्विनः ! पर्याकुलीकुर्वन्वृद्धस्त्रीकुमारकानेष दुष्यन्तः प्राप्तः,—तीव्राघातप्रतिहततरुः०. २. ०तरुस्कन्ध०, नि. च. ३. ०लग्नै० नि. च.

४. प्रविशति.

५. कथमपराद्धस्तपस्विनामस्मि ? भवतु ; तावत्प्रतिगच्छामि.

६. अनु०—हला संउतले, आउला अज्जा गोदमी भविस्सदि । ता एहि, सिग्घं एक्कत्थाओ होम्ह । शकु०—(गतिसंरोधं रूपयित्वा) हद्धी हद्धी, ऊरुत्थंभविअल म्हि संवृत्ता । राजा—स्वैरं स्वैरं गच्छंतु.

७. विदिदभूइट्ठो सि । णं संपदं जं उवआरमज्झत्थदाए अवरद्धाओ म्ह तं मरिसेसि.

८. अहमपि गच्छामि । शकुन्तलादर्शनादेव मन्दौत्सुक्यो०.

शकु०—अहिणवकुससूइपरिक्खदं मे चलणं। कुरुवअसाहापरिलग्गं च मे वक्कलं। ता पडिवालेध.मं जाव णं मोआवेमि। (अभिनव-कुशसूचि-परिक्षतौ मे चरणौ कुरवकशाखापरिलग्नं च मे वल्कलम्। तत् प्रतिपालयतं माम्, यावदेतत् मोचयामि।)

(शकुन्तला राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता)

राजा—(निश्श्वस्य) हन्त। गताः सर्वाः। अहं पुनः मन्दौत्सुक्योऽस्मि [१]गमनं प्रति। यावदानुयात्रिकान् समेत्य नातिदूरे तपोवनस्य निवेशयेयम्। (द्विपदिकया[२]) न खलु शक्नोमि शकुन्तलाव्यापा-रादात्मानं निवर्तयितुम्। मम हि,—

गच्छति पुरः शरीरं धावति पश्चा[३]दसंस्तुतं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥३१॥

(निष्क्रान्ताः सर्वे)

॥ [४]इति प्रथमोऽङ्कः ॥

---

१. नगरागमनं.
२. इयमस्मत्कृता योजना.
३. ०दसंस्थितं.
४. इत्याखेटको नाम.

## द्वितीयोऽङ्कः

(ततः प्रविशति विषण्णो विदूषकः)

विदू०—(निःश्वस्य) भो कट्ठं। एदस्स मअग्रासीलस्स रण्णो वग्रस्स-भावेण णिव्विण्णो म्हि। अग्रं मओ अग्रं वराहो ग्रग्रं सद्दूलो त्ति मज्झण्णे वि गिम्हविरलपाग्रवच्छाआसु वणराईसु आहिंडीग्रदि अडवीदो अडवी। पत्तसंकरकसाआइं कडुआइं गिरिणई-जलाइं पीग्रंति अणिअदवेलं सुल्लमंसभूइट्ठो आहारो अण्हीग्रदि। तुरगाणुधावणकंडिदसंधिणो रत्तिम्मि वि णिकामं सइदव्वं णत्थि। तदो महंते एव्व पच्चूसे दासीए-पुत्तेहिं सउणिलुद्धएहिं वणग्गहणकोलाहलेण पडिवोधिदो म्हि। एत्तएण दाणिं वि पीडा ण णिक्कमदि। तदो [1]गंडस्स उवरि पिडओ संवुत्तो। हिओ किल ग्रम्हेसु ओहीणेसु तत्तहोदो मआणुसारेण अस्समपदं पविट्ठस्स तावसकण्णग्रा सउंदला मम अधण्णदाए दंसिदा। संपदं णअरगमणस्स मणं कहं वि ण करेदि। अज्ज वि से तं एव्व चिंतग्रंतस्स अक्खीसु पभादं आसि। का गदी? जाव णं किदाचारपरिक्कमं पेक्खामि। (परिक्रम्यावलोक्य च) एसो वाणासणहत्थाहिं जवणीहिं वण-पुप्फमालाधारिणीहिं पडिवुदो इदो एव्व ग्राअच्छदि पिअव-अस्सो। होदु; ग्रंगभंगविअलो वि भविअ चिट्ठिस्सं जइ एव्वं वि णाम विस्समं लहेअं। (निश्श्वस्य) (भोः! कष्टम्। एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोस्मि। अयं मृगः, अयं वराहः, अयं शार्दूल इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजी-ष्वाहिण्ड्यतेऽटवीतोऽटवी। पत्रसंकरकषायाणि कटूनि गिरीनदीजलानि पीयन्ते। अनियतवेलं शूल्यमांसभूयिष्ठ आहारो भुज्यते। तुरगानु-धावनकण्डितसंधे रात्रावपि निकामं शयितव्यं नास्ति। ततो महत्येव प्रत्यूपे दास्याः पुत्रैः शकुनिलुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितोऽस्मि। इयतेदानीमपि पीडा न निष्क्रामति। ततो गण्डस्योपरि पिटकः संवृत्तः।

---

[1] गंडस्स उवरि पिंडिआ संवुत्ता.

ह्यः किलास्मास्ववहीनेषु तत्रभवतो मृगानुसारेणाश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला ममाधन्यतया दर्शिता। सांप्रतं नगरगमनस्य मनः कथमपि न करोति। अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत्। का गतिः ? यावत् तं कृताचारपरिक्रमं पश्यामि। (परिक्रम्यावलोक्य च) एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृतः इत एवागच्छति प्रियवयस्यः। भवतु; अङ्गभङ्गविकल इव भूत्वा स्थास्यामि। यद्येवमपि नाम विश्रमं लभेय। (दण्डकाष्ठमवलम्ब्य स्थितः)

(ततः प्रविशति यथानिर्दिष्टपरिवारो राजा)

राजा—(आत्मगतम्)

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि[1]।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना[2] कुरुते[3] ॥१॥

(स्मितं कृत्वा) एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते[4]—

स्निग्धं वीक्षितमन्यतोऽपि नयने यत् [5]प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।
मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत् किल मत्परायणमहो [6]कामः स्वतां पश्यति। २॥

विदू०—(तथास्थित एव) भो वअस्स ! ण मे हत्थपाआ पसरंति। वाआमेत्तएण जीआपइस्सं। (भो वयस्य ! न मे हस्तपादं, प्रसरति। वाङ्मात्रेण जापयिष्यामि।)

राजा—(सस्मितम्) कुतोऽयं गात्रोपघातः ?।

विदू०—कहं कुदो किल ? सअं अच्छी आउलीकरिअ अस्सुकारण पुच्छेसि ?। (कथं ? कुतः किल ? स्वयमेव अक्षि अकुलीकृत्य अश्रुकारणं पृच्छसि ?।)

राजा—न खल्ववगच्छामि ?

---

१. दर्शनायासि. २. उभयप्रार्थना—व्याख्या वि. २।१५.
३. माल. ३।१५, वैपरीत्ये च वि. २।२१, माल. ३।३. ४. विप्रलभ्यते.
५. प्रेषय०. ६. कामी

विदू०—भो वग्रस्स ! जं वेदसो खुज्जलीलं विडंवेदि तं किं अत्तणो पहावेण उद णईवेअस्स ? । (भो वयस्य ! यद् वेतसः कुब्जलीलां विडम्बयति, तत् किमात्मनः प्रभावेण, उत नदीवेगस्य ? ।)

राजा—नदीवेगस्तत्र कारणम् ।

विदू०—मम वि भवं । (ममापि भवान् ।)

राजा—कथमिव ? ।

विदू०—एव्वं राग्रकज्जाणि उज्झिग्र तारिसे ग्राउलप्पदेसे वणचर-वुत्तिणा तुए होदव्वं जंसच्चं पच्चहं सावद-समुच्छारणेहिं संखोहिग्रसंधिवंधाणं मम गत्ताणं ग्रणीसो म्हि संवुत्तो । ता पसादइस्सं विसज्जिदुं मं एक्काहं वि दाव विस्समिदुं । (एवं राज-कार्याणि उज्झित्वा तादृश आकुलप्रदेशे वनचरवृत्तिना त्वया भवितव्यम् ? यत्सत्यम्, प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसंधिवन्धानां मम गात्राणा-मनीशोऽस्मि संवृत्तः । तत् प्रसादयिष्यामि विसर्जितुं मामेकाहमपि तावद् विश्रमितुम् ।)

राजा—(आत्मगतम्) अयं चैवमाह, ममापि काश्यपसुतामनुस्मृत्य [1]मृगयां प्रति निरुत्सुकं चेतः । तथाहि—

न नमयितुमधिज्यमस्मि शक्तो
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव मुग्धविलोकितोपदेशः[2] ॥३॥

विदू०—(राज्ञो मुखं विलोक्य) ग्रत्तभवं किं वि हिग्रए करिग्र मंतेदि । ग्ररण्णे मए रुदिअं ग्रासि । (अत्रभवान् किमपि हृदये कृत्वा मन्त्रयते । अरण्ये मया रुदितमासीत् ।)

राजा—(सस्मितम्) किमन्यत् ? ग्रनतिक्रमणीयं मे सुहृद्वाक्यमिति स्थितोऽस्मि ।

---

१. मृगयाविक्लवं चेतः । कुतः—

२. इव लोचनकान्तिसंविभागः, कु. १।४६, र. १।४०.

विदू०—चिरं जीअ। (चिरं जीव।) (गन्तुमिच्छति)

राजा—वयस्य! तिष्ठ; सावशेषं मे वचः।

विदू०—आणवेदु भवं। (आज्ञापयतु भवान्।)

राजा—विश्रान्तेन भवता ममाप्यनायासे कर्मणि सहायेन भवितव्यम्।

विदू०—किं मोदअखंडिआए? तेण हि अअं सुगहीदो खणो[1]।
(किं मोदकखण्डिकायाम्? तेन ह्ययं सुगृहीतः क्षणः[1]।)

राजा—यत्र वक्ष्यामि। कस्कोऽत्र भोः?।

(प्रविश्य)

दौवा०—(प्रणम्य) आणवेदु भट्टा। (आज्ञापयतु भर्ता।)

राजा—रैवतक! सेनापतिस्तावदाहूयताम्।

दौवा०—तह। (तथा।) (निष्क्रम्य सेनापतिना सह पुनः प्रविश्य) एसो अण्णावअणुक्कंठो भट्टा इदो दिण्णदिट्ठी एव्व चिट्ठदि उवसप्पदु अज्जो। (निष्क्रम्य सेनापतिना सह पुनः प्रविश्य) (एष आज्ञावचनोत्कण्ठो भर्ता इतो दत्तदृष्टिरेव तिष्ठति। उपसर्पत्वार्यः।)

सेना०—(राजानमवलोक्य) कथं दृष्टदोषापि स्वामिनि मृगया केवलं गुण एव संवृत्ता। तथा हि देवः—

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु स्वेदलेशैरभिन्नम्।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥४॥

(उपेत्य) [2]जयतु स्वामी; गृहीतश्वापदमरण्यम्। किमन्यदनुष्ठीयताम्?।

राजा—भद्रसेन! मन्दोत्साहः कृतोऽस्मि मृगयापवादिना माधव्येन।

---

१. क्षणः अवकाशः द्र. २६३ पृष्ठान्ते गणदास-वचः। २. 'जयति जयति स्वामी! गृहीतमृगप्रचारसूचितश्वापदमरण्यम्। तत्किमन्यत्रावस्थीयते?'

सेना०—(जनन्तिकम्) सखे ! स्थिरप्रतिबन्धो भव। अहं तावत् स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये। (प्रकाशम्) प्रलपत्वेष वैधेयः[1]। ननु प्रभुरेव निदर्शनम्,—

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं[2] वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः ? ॥५॥

विदू०—अवेहि रे [3]उच्छाहहेतुअ ! अत्तभवं पकिदिं आपण्णो। तुमं दाव अडवीदो अडवीं आहिंडंतो णरणासिआ-लोलुवस्स जिण्णरिच्छस्स कस्स वि मुहे पडिस्ससि। (अपेहि रे उत्साह-हेतुक ! अत्रभवान् प्रकृतिमापन्नः। त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य जीर्णऋक्षस्य कस्यापि मुखे पतिष्यसि।)

राजा—[4]भद्रसेन ! आश्रमसंनिकृष्टे स्थिताः स्मः। अतस्ते वचो नाभिनन्दामि। अद्य तावत्,—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विस्रब्धं[5] क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥६॥

सेना०—यत् प्रभविष्णवे रोचते।

राजा—तेन हि निवर्तय पूर्वगतान् वनग्राहिणः। यथा न मे सैनिकास्त-पोवनमुपरुन्धन्ति तथा निषेद्धव्याः। पश्य—

शमप्रधानेषु तपोधनेषु[6]
गूढं हि दाहात्मकमस्ति तेजः।
स्पर्शानुकूला अपि[7] सूर्यकान्ता-
स्तेजोऽन्यतेजोभिभवाद् वमन्ति[8] ॥७॥

---

१. वैधवेयः. २. ०त्युत्साह०
३. तथा च कुटलस्य तोकमर्थशास्त्रे ८।३।५०, र. ९।४९.
४. 'भद्र सेनापते. ५. 'विस्रब्धैः'. ६. वनेषु
७. इव. ८. तदन्यते ००दहन्ति.

सेना०—यदाज्ञापयति स्वामी ।

भो[1] उच्छाहइत्थआ णिकम्म णिकम्म । (भो उत्साहयितः, निष्क्राम निष्क्राम)

(निष्क्रान्तः सेनापतिः)

राजा—(परिजनं विलोक्य) अपनयन्तु भवन्तो मृगयावेशम् । रैवतक ! त्वमपि स्वं नियोगमशून्यं कुरु ।

परि०—जं [2]देवो आणवेदि । (यद् देव आज्ञापयति ।)

(निष्क्रान्तः)

विदू०—किदं भवदा णिम्मच्छिअं । संपदं एदस्सि पादवच्छाआए विरइदलदाविदाणदंसणीआए[3] आसणे णिसीददु भवं, जाव अहं वि सुहासीणो होमि । (कृतं भवता निर्मक्षिकम् । सांप्रतमेतस्यां पादपच्छायायां विरचितलतावितानदर्शनीयायामासने निषीदतु भवान्, यावदहमपि सुखासीनो भवामि ।)

राजा—गच्छाग्रतः ।

विदू०—एदु भवं । (एतु भवान् ।)

(उभौ परिक्रम्योपविष्टौ)

राजा—माधव्य ! अनवाप्तचक्षुःफलोऽसि, येन त्वया [4]द्रष्टव्यानां परं न दृष्टम् ।

विदू—णं भवं अग्गदो मे वट्टदि । (ननु भवानग्रतो मे वर्तते ।)

राजा—सर्वः खलु [5]कान्तमात्मीयं पश्यति । [6]तामाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

विदू०—(आत्मगतम्) होदु[7], से ओसरं ण दाइस्सं (प्रकाशम्) भो [8]वअस्स ! जदो सा तावसकण्णआ अणब्भत्थणीआ तदो ताए किं दिठ्ठाए ?

---

१. धंसदु दे उच्छाहवुत्तंतो. २. महाराओ. ३. आविरइदविदाणसणा०.

४. दर्शनीयं न. ५. कान्तमात्मानं

६. अहं तु तामेवाश्रम० ७. भोदु ण से पसरं वड्ढाइस्सं ।

८. ते तावसकण्णआ अब्भत्थणीआ दीसदि ? राजा—सखे न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते । सुरयुवतिसंभवं०० कुसुमम् ।

(भवतु, अस्यावसरं न दास्यामि (प्रकाशम्) भो वयस्य यतः सा तापसकन्यका अनभ्यर्थनीया ततः किं तया दृष्टया ?)

राजा—सखे !

निराकृतनिमेषाभिः पक्ष्मपङ्क्तिभिरुन्मुखः ।
नवामिन्दुकलां लोकः केन भावेन पश्यति[1] ॥८॥

न च परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्त्तते ।

विदू०—[2]ता कहेधि (तत् कथय) ।

राजा— सुर-युवति-संभवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥९॥

विदू०—(विहस्य) जह कस्स वि पिंडखज्जूरेहिं उव्वेजिदस्स तिंतिणीए अहिलासो भवे, तह अंतेउर-[3]इत्थिआ-रअण-परिभोइणो भवदो इअं अब्भत्थणा । (यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्, तथा अन्तःपुर-स्त्रीरत्नपरिभोगिनो भवत इयमभ्यर्थना ।

राजा—न तावदेनां पश्यसि येन त्वमेवंवादी[4] ।

विदू०—तं क्खु रमणिज्जं जं भवतो वि विम्हअं उप्पादेदि । (तत् खलु रमणीयं यद् भवतोऽपि विस्मयमुत्पादयति ।

राजा—वयस्य ! किं बहुना,—

चित्रे[5] निवेश्य परिकल्पित-[6]सत्त्वयोगा,
रूपोच्चयेन [7]मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥१०॥

---

१. र. १।७३, ४।३ अत्र पुरुहूतध्वजस्यचन्द्रः-हे०, ६।३१, ८।६५. अत एव पद्यमिदं मूलतया पठितम् ।

२. तां कहेधि । राजा ललिताप्सरोभवं किल । सुरयुवतिसंभव ००कुसुमम् ।

३. इत्थिआ-रअण-परिभाविणा ४. येनैवमवादीः

५. चित्ते इत्यपपाठः । तथा च विष्णुधर्मोत्तरस्य चित्रसूत्रप्रकरणीये ३५-तमेऽध्याये-'अतः परं प्रवक्ष्यामि चित्रसूत्रं तवानघ । उर्वशीं सृजता प्रोक्तं चित्रसूत्रं नृपात्मज । नारायणेन मुनिना लोकानां हितकाम्यया सहकाररसं गृह्य उर्व्यां चक्रे वरस्त्रियम् । चित्रेण, सा ततो जाता रूपयुक्ता वराप्सराः । यथा नृत्ते तथा चित्रे त्रैलोक्यानुकृतिः स्मृता ॥

६. ०सर्वयोगाद् ७. महता मनसा ।

विदू०—[1]जइ एव्वं पञ्चादेसो [2]क्ख सा रूववदीणं। (यद्येवं, प्रत्यादेशः खलु सा रूपवतीनाम्।)

राजा—इदं च मे मनसि वर्तते,—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं[3] रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥११॥

विदू०—तेण हि लहु लहु परित्ताअदु णं भवं। मा कस्स वि तवस्सिणो इंगुदीतेल्लमिस्सचिक्कणसीसस्स हत्थे पडिस्सदि। (तेन हि लघु लघु परित्रायतामेनां भवान्। मा कस्यापि तपस्विन इङ्गुदीतैलमिश्रचिक्कणशीर्षस्य हस्ते पतिष्यति।)

राजा—परवती खलु तत्रभवती। न च संनिहितो गुरुजनः[4]।

विदू०—अध [5]अत्तभवंतं अंतरेण कीदिसो से दिट्ठिराओ? (अत्रभवन्तमन्तरेण कीदृशस्तस्या दृष्टिरागः?।)

राजा—[6]निसर्गादप्रगल्भास्तपस्विकन्यकाः। तथापि तु,—

अभिमुखे मयि [7]संहृतमीक्षणं
हसितमन्यनिमित्त-[8]कृतोदयम्।
विनयवारितवृत्तिरतस्तया
न[9] मदनो विवृतो न च संवृतः ॥१२॥

---

१. सव्वधा पच्चादेसो क्खु सा.। द्र. पच्चादेसो रूपगव्विदाए सिरिगोरिए. वि०-आरम्भे। २. दाणि।

३. अनाभुक्तं। अत्र प्रथमविशेषणेनैव कन्यकात्वं स्पष्टभूयिष्ठमिति विशेषणान्तराणि दुष्यन्तस्य शकुन्तलाकर्मिकां मानसीं क्रियानिर्वृतिमेव प्रकाशयन्तीत्युदात्तत्वविसंवादीनि। नास्ति च प्रयोजनं श्लोकपूर्तेः। तदुक्तमानन्देन 'नातिनिर्वहणैपिते,-ति। 'आविद्धं कुटिलमि'-त्यमरोऽपि नात्र रोद्धा प्रतीयमानसंपत्स्यन्दस्य। उपस्थानं पूजनमित्यन्ये। तत्र पुष्पादीनामुल्लेखः उद्बोधकः। द्र. तु र. ४।६.

४. संनिहितोऽत्र गुरुजनः.

५. तुह उवरि कीदिशो उण से चित्तराओ.

६. 'स्वभावादप्रगल्भास्तपस्विकन्यकाः'. ७. संवृतमीक्षितं.

८. '०कथोदयम्'. ९. 'न विवृतो मदनो न च संवृतः' नि.

विदू०—ण[1] खु दिट्ठमेत्तस्स तुह अंकं समारोहदि । (न खलु दृष्टमात्रस्य तवाङ्कं समारोहति ।)

राजा—[2]मिथःप्रस्थाने पुनः [3]शालीनतयापि काममाविष्कृतो भावः तत्रभवत्या । तथा हि—

> दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
> तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
> आसीद् विवृत्तवदना च विमोचयन्ती
> शाखासु वल्कलमसक्तमपि द्रुमाणाम्[4] ॥१३॥

विदू०—[5]गहीदपाथेओ किदोसि ताए । किदं तुए उववणं तवोवणं त्ति पेक्खामि । (तेन हि गृहीतपाथेयः कृतोऽसि तया । कृतं त्वयोपवनं तपोवनमिति पश्यामि ।)

राजा—सखे ! [6]तपस्विभिः कैश्चित् परिज्ञातोऽस्मि । चिन्तय तावत् केनापदेशेन सकृदप्याश्रमे गच्छाम ।

विदू०—णं भवं राआ (ननु भवान् राजा) ।

राजा—ततः किम् ?

विदू०—को अवरो अवदेसो । णीवारछट्ठभाअं अम्हाणं उवहरंतु त्ति । (कः अपरोऽपदेशः ? नीवारषष्ठभागमस्माकमुपहरन्त्विति ।)

राजा—मूर्ख ! [7]अन्यमेव भागमेते तपस्विनो निर्वपन्ति यो रत्नराशीनपि विहायाभिनन्द्यते । पश्य,—

> यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि [8]तद् धनम् ।
> तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥१४॥

---

१. किं णु खु दिट्ठमेत्तस्स जेव भवदो अङ्कं आरोहदु. २. सखीभ्यां मिथःप्रस्थाने.
३. तत्रभवत्या मयि भूयिष्ठमाविष्कृतो भावः ।. ४. वि. १।१७-१८ मध्य-संवादवस्तु.
५. तेण हि गहीदपाहेओ होहि । ता अणुरत्तं तवोवणे तुमं तक्केमि.
६. सखे ! चिन्तय०० वसाम. ७. अन्यद् भागधेयमेतेषां रक्षणे निपतति.
८. तत् फलम्.

(नेपथ्ये)

हन्त, सिद्धार्थौ स्वः ।

राजा—(कर्णं दत्त्वा) अये! [1]धीरप्रशान्तः स्वरः । तपस्विभिर्भवितव्यम् ।

(प्रविश्य)

दौवा०—जेदु भट्टा । एदे दुवे इसिकुमारआ पडिहारभूमिं उवट्ठिदा । (जयतु भर्ता । एतौ द्वौ ऋषिकुमारकौ प्रतीहारभूमिमुपस्थितौ ।)

राजा—[2]अविलम्बितं प्रवेशय ।

दौवा०—एसो पवेसेमि । (निष्क्रम्य, ऋषिकुमाराभ्यां सह प्रविश्य) इदो इदो भवंतौ । (एष प्रवेशयामि ।) (निष्क्रम्य, ऋषिकुमारकाभ्यां सह प्रविश्य) (इत इतो भवन्तौ ।)

(उभौ राजानं विलोकयतः)

प्रथमः—अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः । अथवोपपन्नमेतद् [3]मुनिभ्यो नातिभिन्ने राजनि । कुतः

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये,
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ।।१५।।

द्वितीयः—[4]गौतम ! अयं स वलभित्सखो दुष्यन्तः ।

प्रथमः—अथ किम् ? ।

द्वितीयः— तेन हि,—

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीमेकः कृत्स्नां नगरपरिघ[5]प्रांशुबाहुर्भुनक्ति[6] ।
आशंसन्ते[7] सुरयुवतयो[8] बद्धवैरा हि दैत्यैरस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ।।१६।।

---

१. ०प्रशान्तस्वरैस्तप नि. २. तेन हि अविलम्बितं प्रवेशय तौ नि०
३. ०दृपिकल्पे राजनि, ऋषिभ्यो. सर्वे. ४. सखे ! अयं ००दुष्यंतः.
५. माल. ५।२, प्राचीरः कश्चित्, प्रांशुत्वस्य तत्रैव संगतत्वात् । ६. रक्षति.
७. रं १४।५०, 'आङः शसि इच्छायाम्'. ८. समितिषु सुराः सक्तवैराः.

उभौ—(उपगम्य) विजयस्व राजन् ! ।

राजा—(आसनादुत्थाय) अभिवादये भवन्तौ ।

उभौ—स्वस्ति भवते । (फलान्युपहरतः)

राजा—(सप्रणामं परिगृह्य) [1]आज्ञापयितुमिच्छामि ।

उभौ—विदितो [2]भवानाश्रमसदामिहस्थः । ते भवन्तं प्रार्थयन्ते ।

राजा—किमाज्ञापयन्ति ?

उभौ—तत्रभवतः [3]कुलपतेरसांनिध्याद् रक्षांसि नः इष्टिविघ्नमुत्पादयन्ति । तत् कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

राजा—अनुगृहीतोऽस्मि ।

विदू०—(अपवार्य) [4]अअं दाणिं अणुऊलो दे गलहत्थो । (अयमिदानीम् अनुकूलस्ते गलहस्तः ।)

राजा—(स्मितं कृत्वा) रैवतक ! मद्वचनादुच्यतां सारथिः सबाणासनं रथमुपस्थापयेति ।

दौवा०—जं देवो आणवेदि । (यद्देव आज्ञापयति ।)

(निष्क्रान्तः)

उभौ—(सहर्षम्)

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ।।१७।।

राजा—(सप्रणामम्) गच्छतं भवन्तौ । अहमप्यनुपदमागत एव ।

उभौ—विजयस्व । (निष्क्रान्तौ)

राजा—माधव्य ! अप्यस्ति शकुन्तलादर्शने कुतूहलम् ? ।

विदू०—पढमं सपरीवाहं आसि । दाणिं रक्खसवुत्तंतेण विंदु वि णावसेसिदा । (प्रथमं सपरीवाहमासीत् । इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेपितः ।)

---

१. आगमनप्रयोजनं ज्ञातुमिच्छामि. २. भवानिह स्थितो०० स्तपस्विभिस्ते च भवन्तमभ्यर्थयन्ते. ३. कण्वस्य महर्षेरसान्निध्याद्रक्षांसि नस्तपोविघ्न०.
४. एषा दाणिं अणुऊला ते अब्भत्थणा.

राजा—मा भैषीः, ननु मत्समीपे वर्तिष्यसे ।

विदू०—एसो[1] रक्खसादो रक्खिदो म्हि । (एष राक्षसाद् रक्षितोऽस्मि ।)

(प्रविश्य)

दौवा०—सज्जो रधो भट्टिणो विजअप्पत्थाणं अवेक्खदि । एस उण णअरादो देवीणं[2] आणत्तिहरओ करभओ आअदो । (सज्जो रथः भर्तुर्विजयप्रस्थानमपेक्षते । एष पुनर्नगराद् देवीनामाज्ञप्तिहरः करभक आगतः ।)

राजा—(सादरम्) किम् अम्बाभिः प्रेपितः ? ।

दौवा०—अध इं । (अथ किम् ? ।)

राजा—ननु प्रवेश्यताम् ।

दौवा०—तह । (निष्क्रम्य करभकेण सह प्रविश्य) एसो भट्टा, उवसप्प । (तथा) । (निष्क्रम्य करभकेण सह प्रविश्य) एष भर्ता; उपसर्प ।)

कर०—जेदु भट्टा । देवीओ आणवेंदि । (जयतु भर्ता । देव्य आज्ञापयन्ति)

राजा—किमाज्ञापयन्ति ?

कर०—आगामि-चदुत्थदिअसे पुत्तपिंडपालणो णाम पउत्थपारणो मे उववासो भविस्सदि । तहिं दीहाउणा अवस्सं संभाविदव्वा-त्ति । (आगामिचतुर्थदिवसे पुत्रपिण्डपालनो नाम प्रवृत्तपारणो मे उपवासो भविष्यति । तत्र दीर्घायुपा अवश्यं संभावनीया-इति ।)

राजा—इतस्तपस्विकार्यम्, इतो गुरुजनाज्ञा । द्वयमप्यनतिक्रमणीयम् । किमत्र प्रतिविधेयम् ? ।

विदू०—तिसंकू विअ अंतराले चिट्ठ । (त्रिशङ्कुरिव अन्तराले तिष्ठ ।)

राजा—सत्यमाकुलीभूतोऽस्मि—

कृत्ययोर्भिन्नदेशत्वाद् द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ।।१८।।

---

१. एसो खु तुह चक्करक्खी भूदो म्हि. २. किमार्याभिः.

(विचिन्त्य) सखे ! त्वमम्बाभिः पुत्र इति प्रतिगृहीतः[1] । अतो भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रमानसं मामावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति ।

विदू०—ण खु मं रक्खोभीरुअं गणेसि । (न खलु मां रक्षोभीरुकं गणय ।)

राजा—(सस्मितम्) कथमेतद् भवति संभाव्यते ?

विदू०—तेण हि जह राआणुएण गंतव्वं तह गच्छामि । (यथा राजानुजेन गन्तव्यं तथा गच्छामि ।)

राजा—ननु तपोवनोपरोधः परिहरणीय इति सर्वानानुयात्रिकांस्त्वयैव सह [2]प्रस्थापयामि ।

विदू०—ही ही, जुवराओ म्हि दाणिं संवुत्तो । (ही ही, युवराजोऽस्मि इदानीं संवृत्तः ।)

राजा—(आत्मगतम्) चपलोऽयं वटुः । कदाचिदस्मत्प्रार्थनाम् अन्तःपुरेभ्यः कथयेत् । भवतु; एनमेवं वक्ष्ये । (विदूषकं हस्ते गृहीत्वा, प्रकाशम्) वयस्य ! ऋषिगौरवादाश्रमं गच्छामि । न खलु सत्यमेव तापसकन्यायां ममाभिलाषः । पश्य,—

क्व वयम्, क्व परोक्षमन्मथो
मृगशावैः[3] सममेधितो जनः ।
परिहासविजल्पितं[4] सखे !
परमार्थेन न गृह्यतां वचः ॥१६॥

(निष्क्रान्ताः सर्वे)

॥ [5]इति द्वितीयोऽङ्कः ॥

---

१. त्वमार्याभिः पुत्र इव गृहीतः. २. प्रेषयामि.
३. मृगशावैः सह वर्धितो. ४. ०विकल्पितं. ५. इत्याख्यानगुप्तिर्नाम

## ।।[a]अथ विष्कम्भकः।।

(ततः प्रविशति कुशानादाय यजमानशिष्यः)

शिष्यः—अहो ! महानुभावो[1] राजा दुष्यन्तः। प्रविष्टमात्र एव आश्रमं तत्रभवति[2] निरुपप्लवानि नः कर्माणि।

का कथा बाणसंधाने ज्याशब्देनैव दूरतः।
हुंकारेणेव धनुषः स हि विघ्नानपोहति[3] ।।१।।

यावदिमान् वेदिसंस्तरणार्थं दर्भान् ऋत्विग्भ्य उपनयामि[4]।
(परिक्रम्यावलोक्य च, आकाशे)

प्रियंवदे ! कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते ?।

(आकर्ण्य)

किं ब्रवीषि ? आतपलङ्घनाद् बलवसुस्था शकुन्तला; तस्याः शरीरनिर्वापणायेति ?

तर्हि[5], त्वरितं गम्यताम्। सखि ! सा खलु भगवतः कण्वस्य कुलपतेरुच्छ्वसितम्। अहमपि तावद् वैतानिकं[6] शान्त्युदकम्, अस्यै, गौतमीहस्ते विसर्जयिष्यामि।

(निष्क्रान्तः)

।। इति विष्कम्भकः ।।

---

१. पार्थिवो दुःपन्तः। येन.   a इयमस्मद्योजना

२. एव तत्रभवति निरुपद्रवाणि नः कर्माणि प्रवृत्तानि भवन्ति नि.

३. विघ्नान्व्यपोहति.

४. उपहरामि मा.

५. प्रियंवदे ! यत्नादुपचर्यताम्। सा हि तत्र भगवतः.

६. यज्ञीयम् इत्यर्थः।

## अथ तृतीयोऽङ्कः

(ततः प्रविशति [1]कामयानावस्थो राजा)

राजा—(निःश्वस्य)

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
[2]न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम् ॥२॥

(मदनबाधां निरूप्य) भगवन् कुसुमायुध ! त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः । कुतः

तव कुसुमशरत्वं शीतरश्मित्वमिन्दोर्,
द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैस्,
त्वमपि कुसुमबाणान् वज्रसारीकरोषि[3] ॥३॥

अथवा,

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मयि संभृतहृदयां तामधिकृत्य प्रहरतीति[4] ॥

(परिक्रम्य) क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि ? । (निःश्वस्य) किं नु खलु मे प्रियादर्शनादृते शरणमन्यत् ? यावदेनामन्विष्यामि । (सूर्यमवलोक्य) इमामुग्राम् आतपवेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति । तत्रैव

---

१. द्र. २८३ पृ. पादटि०—२.

२. अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् । द्र. कु. ५।५३.

३. भगवन्मन्मथ ! कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यमेतत् ? (स्मृत्वा) आं ज्ञातम्,—अद्यापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ ।
त्वमन्यथा मन्मथ मद्विधानां भस्मावशेषः कथमेवमुष्णः ? ॥

४. भगवन् ! 'वृथैव संकल्पशतैरजस्रमनङ्ग ! नीतोऽसि मयातिवृद्धिम् ।
आकृष्य चापं श्रवणोपकण्ठे मय्येव युक्तस्तव बाणमोक्षः ॥'
क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञातः खिन्नमात्मानं विनोदयामि.

तावद् गच्छामि[1]। अनया वालपादपवीथ्या सुतनुरचिरगतेति तर्कयामि। कुतः—

संमीलन्ति न तावद् बन्धनकोशास्तयाऽवचितपुष्पाः।
क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः ॥४॥

(परिक्रम्य संस्पर्शं रूपयित्वा) अहो, प्रवातसुभगोऽयमुद्देशः।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम्।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥५॥

(परिक्रम्यावलोक्य च) अस्मिन् वेतसपरिक्षिप्ते लतामण्डपे भवितव्यं तया। तथा हि (अधो विलोक्य)—

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा[3] ॥६॥

यावद् विटपान्तरेण अवलोकयामि। (परिक्रम्य, तथा कृत्वा, सहर्षम्) अये, लब्धं नेत्रनिर्वाणम्। एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामन्वास्यते। भवतु। श्रोष्यामि आसां विस्रम्भकथितानि। (विलोकयन् स्थितः)

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला)

सख्यौ—(उपवीज्य सस्नेहम्) हला सउंदले! अवि सुहेदि दे णलिणीपत्तवादो?। (हला शकुन्तले! अपि सुखयति ते नलिनीपत्रवातः?।)

शकु०—किं वीअअंति मं सहीओ?। (किं वीजयतो मां सख्यौ?।)

(सख्यौ विषादं नाटयित्वा परस्परमवलोकयतः)

राजा—बलवदसुस्थशरीरा शकुन्तला दृश्यते (सवितर्कम्) तत् किमयमातपदोषः स्यात्, उत यथा मे मनसि वर्तते?। (साभिलाषं निर्वर्ण्य) अथवा कृतं संदेहेन,—

स्तनन्यस्तोशीरं शिथिलितमृणालैकवलयं
प्रियायाः साबाधं किमपि[4] कमनीयं वपुरिदम्।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं [5]सुभगमपराद्धं युवतिषु ॥७॥

---

१. निर्दयमालि. २. अस्मिन्नेव वेतसलतामण्डपे भवितव्यं शकुन्तलया.
३. वि. ४।६ श्लोकः। ४. 'तदपि',
५. सुलभमिति पाठे रक्ष्येत सारवत्त्वं चक्रवर्त्तिजननीत्वौपयिकम्। द्र. कु. ५।१९।

प्रियं०—(जनान्तिकम्) अणसूए ! तस्स राएसिणो पढमदंसणादो आरहिय [1]पज्जुस्सुआ विअ सउंदला । किं णु खु से [2]तण्णिमित्तो अअं भवे ? । (अनसूये ! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला । किं नु खलु तस्यास्तन्निमित्तोऽयमातङ्को भवेत् ? ।)

अन०—सहि ! मम वि[3] ईदिसी आसंका हिअअस्स । होदु; पुच्छिस्सं दाव णं (प्रकाशम्) सहि ! पुच्छिदव्वासि किंपि । वलवं[4] खु दे संदावो[5] । (सखि ! ममापीदृशी आशङ्का हृदयस्य । भवतु, प्रक्ष्यामि तावदेनाम् । (प्रकाशम्) सखि ! प्रष्टव्यासि किमपि । बलवान् खलु ते संतापः ।)

शकु०—(पूर्वार्धेन शयनादुत्थाय) हला ! किं[6] वत्तुकामासि ? । (हला ! किं वक्तुकामासि ? ।)

अन०—हला सउंदले ! अणब्भंतरा खु अम्हे मदणगदस्स वुत्तंतस्स । किंदु जादिसो इदिहासणिबंधेसु कामअमाणाणं अवत्था सुणीअदि [7]तादिसीं दे पेक्खामि; कहेहि किंणिमित्तं दे[8] संदावो । विआरं खु परमत्थदो अजाणिअ अणारंभो पडिआरस्स । (हला शकुन्तले ! अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य । किंतु यादृशी इतिहासनिबन्धेषु कामयमानानामवस्था श्रूयते तादृशीं तव पश्यामि; कथय किंनिमित्तस्ते संतापः । विकारं खलु परमार्थतः अज्ञात्वा अनारम्भः प्रतीकारस्य ।)

राजा—[9]अनसूयामप्यनुगतो, मदीयस्तर्कः । नहि स्वाभिप्रायेण मे दर्शनम् ।

शकु०—(आत्मगतम्) बलवं खु मे अहिणिवेसो । दाणिं वि सहसा एदाणं ण सक्कणोमि णिवेदिदुं । (बलवान् खलु मेऽभिनिवेशः । इदानीमपि सहसा एतयोर्न शक्नोमि निवेदयितुम् ।)

---

१. पज्जस्सुअमणा सउंतला. २. अण्णणिमित्तो.

३. ममावि एरिसी आसंका । भोदु, पुच्छिस्सं । सहि. ४. बलीओ खु.

५. 'राजा—वक्तव्यमेव,-शशिकरविशदान्यस्यास्तथा हि दुःसहनिदाघशंसीनि । भिन्नानि श्यामिकया मृणालनिर्माणवलयानि ॥

६. भण जं वत्तुकामासि. ७. तादिसी तुहत्ति तक्केमि. ८. दे आआसो.

९. अनुसूययापि मदीयस्तर्कोऽनुगतः, अनु००वगतः मा. । शकुं०—बलीओ खु मे आआसो । ण सहसा सक्कणोमि.

प्रियं०—सहि सउंदले ! सुट्ठु एसा भणादि। किं अत्तणो आतंकं[1] उवेक्खसि ?। अणुदिअहं खु परिहीअसि अंगेहिं। केवलं लावण्णमई छाआ तुमं ण मुंचदि। (सखि शकुन्तले ! सुष्ठु एषा भणति। किमात्मन आतङ्कमुपेक्षसे ?। अनुदिवसं खलु परिहीयसेऽङ्गैः। केवलं लावण्यमयी छाया त्वां न मुञ्चति।)

राजा—अवितथमाह प्रियंवदा। तथा हि,—

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा[2]।
शोच्या च प्रियदर्शना च मदन-[3]क्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥८॥

शकु०—सहि ! कस्स वा अण्णस्स कहइस्सं ? किदु आआसइत्तिआ दाणिं वो भविस्सं[2]। (सखि ! कस्य वा अन्यस्य कथयिष्यामि ?। किन्तु आयासयित्री इदानीं वां भविष्यामि।)

उभे—अदो एव्व क्खु णिव्वंधो। सिणिद्धजणसंविभत्तं[4] हि दुक्खं सज्झवेअणं भोदि। (अत एव खलु निर्बन्धः। स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति।)

राजा—

पृष्टा जनेन समदुःखसुखेन[5] बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम्।
दृष्टो विवृत्य[6] बहुशोऽप्यनया सतृष्ण-
मत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥९॥

शकु०—सहि[2] ! जदो पहुदि मम दंसणपहं आअदो सो तवोवणरक्खिदा राएसी, (अर्धोक्ते लज्जां नाटयति)। (सखि ! यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः (अर्धोक्ते लज्जां नाटयति)।

उभे—कहेदु पिअसहि। (कथयतु प्रियसखी)।

शकु०—तदो आरहिअ तग्गदेण अहिलासेण एतदवत्थम्हि संवुत्ता। (तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता[7]।)

---

१. उवदव्वं णिगूहसि. २. पाण्डरा. ३. ग्लाने०,
४. संविभत्तं ५. द्र. र ८।६५। ६. निवृत्य नि.
७. उभे—दिट्ठिआ इदाणिं दे अणुरूवे वरे अहिणिवेसो। अध वा, साअरं उज्झिअ कहिं वा महाणदीए पविसिदव्वं ?।

राजा—(सहर्षम्)[1] श्रुतं यत् श्रोतव्यम्;

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ।।१०।।

शकु०—तं जइ वो अणुमदं ता तह वट्टह जह तस्य राएसिणो अणुकंपणिज्जा होमि । अण्णहा अवस्सं सिंचध मे तिलोदग्रं । (तद् यदि वामनुमतम्, तदा, तथा वर्तेथाम्, यथा, तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथा अवश्यं सिञ्चतं मे तिलोदकम् ।)

राजा—[2]संशयच्छेदि वचनम् ।

प्रियं—(जनान्तिकम्) अणसूए ! दूरगअमम्महा अक्खमा इअं [3]कालहरणस्स । जस्सिं वद्धभावा एसा सो ललामभूदो पोरवाणं । ता जुत्तं से अहिलासो अहिणंदिदुं । (अनसूये ! दूरगतमन्मथा अक्षमेयं कालहरणस्य । यस्मिन् वद्धभावैषा स ललामभूतः पौरवाणाम् । तद् युक्तमस्या अभिलाषोऽभिनन्दितुम् ।)

अन०—सहि ! तह, जह भणसि । (सखि ! तथा, यथा भणसि ।)

प्रियं०—(प्रकाशम्) सहि ! दिट्ठिआ अणुरूवो दे अहिणिवेसो । साअरं उज्झिअ कहिं वा महाणई ओदरइ ? को दाणिं सहआरं अंतरेण अदिमुत्तलदं पल्लविदं सहेदि ?। (सखि ! दिष्ट्या अनुरूपस्तेऽभिनिवेशः[4] । सागरमुज्झित्वा कुत्र वा महानदी अवतरति ? क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते ? )

राजा—किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तते ? ।

अन०—को उण उवाओ भवे जेण अविलंविअं णिहुअं अ सहीए मणोरहं संपादेम्ह ? । (कः पुनरुपायो भवेद् येनाविलम्बितं निभृतं च सख्या मनोरथं संपादयावः ? । )

प्रियं०—णिहुअंत्ति चिंतणिज्जं भवे । सिग्घंत्ति सुअरं । (निभृतमिति चिन्तनीयं भवेत् । शीघ्रमिति सुकरम् । )

अन०—कहं विअ ? (कथमिव ? )

---

१. ०र्ध० । २. विमर्श०.
३. ०हरणस्स । अनु०—प्रिअंवदे ! को उवाओ भवे जेण अविलंविदं णिहुदं च सहीए मणोरधं संपादेमो । ४. कु. ५।७

प्रियं०—णं सो राएसी इमस्सिं सिणिद्धदिट्ठीए सूइदाहिलासो इमाइं दिअहाइं पज्जाअरकिसो लक्खीअदि। (ननु स राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलापः एतान् दिवसान् प्रजागरकृशो लक्ष्यते।)

राजा—सत्यमित्थंभूत एवास्मि तथा हि,—

इदमशिशिरैरन्तस्तापाद्[1] विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्ग[2]प्रसारिभिरश्रुभिः।
अनतिलुलितज्याघाताङ्कं[3] मुहुर्मणिबन्धनात्
कनकवलय[4] स्रस्तं स्रस्तं मया प्रतिसार्यते॥१०॥

प्रियं०—(विचिन्त्य) [5]हला! मअणलेहो से करीअदु। इमं देवता-सेसा[5]-वदेसेण सुमणोगोविदं करिअ से हत्थअं पावइस्सं। (हला! मदनलेखोऽस्य क्रियताम्। इमं देवता-शेषाऽपदेशेन सुमनोगोपितं कृत्वा तस्य हस्तं प्रापयिष्यामि।)

अन०—रोअइ[6] मे सुउमारो पओओ। किं वा सउंदला भणदि?। (रोचते मे सुकुमारः प्रयोगः। किं वा शकुन्तला भणति?।)

शकु०—को णिओओ विकप्पीअदि?। (को नियोगो विकल्प्यते?।)

प्रियं०—तेण हि अत्तणो [7]उवण्णासाणुरूवं चिंतेहि दाव ललिअपद-बंधणं। (तेन हि, आत्मनः उपन्यासानुरूपं चिन्तय तावल्ललितपदबन्धनम्।)

शकु०—हला! [8]चिंतेमि अहं। अवहीरणभीरुअं पुणो [9]वेवइ मे हिअअं। (हला! चिन्तयाम्यहम्। अवधीरणाभीरु पुनर् वेपते मे हृदयम्।)

---

१. अशिशिरतरैरन्तस्तापैर्वि०. २. ०वर्त्ति०, ०वृत्ति० सा.
३ अनभि००ङ्कान् ४. मे १।२. ५. हला अणसूए! मअणलेहो दाणिं से करीअदु। तं अहं सुमणोगोविदं कदुअ देवप्पासादावदेसेण तस्स रण्णो हत्थं०। शेषाशब्दाय कु. ३।२२, र १७।७९ अत्रैव ७।२
६. सहि! रोअदि. ७. उवण्णासपुव्वं चिंतेहि किं पि ललिदोवणिबंधणं.
८. चिंतइस्सं. ९. वेवदि.

राजा—(सहर्षम्)—

अयं स ते तिष्ठति संगमोत्सुको
विशङ्कसे भीरु ! यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा [1]श्रियं,
श्रिया दुरापः कथमीप्सितो भवेत्[2] ? ।।११।।

सख्यौ—अइ ! अत्तगुणावमाणिणि ! को णाम[3] सरीरणिव्वापइत्तिअं सारदिअं [4]जोसिणिं पडंतेण वारेदि ? । (आत्मगुणावमानिनि ! को नाम शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति ? ।)

शकु०—(सस्मितम्) णिओइआ दाणिं म्हि । (नियोजिता इदानीमस्मि ।)
(उपविष्टा चिन्तयति)

राजा—स्थाने खलु विस्मृत-[5]निमेषेण चक्षुषा प्रियामवलोकयामि । यतः,—

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन[6] प्रथयति मय्यनुरागं कपोलेन ।।१२।।

शकु०—[7]हला ! चिंतिदं मए गीदवत्थु, ण [8]सण्णिहिदाणि उण लेहसाहणाणि । (हला ! चिन्तितं मया गीतवस्तु । न संनिहितानि पुनर्लेखसाधनानि ।)

प्रियं—णं [9]इमस्सिं सुओदरसुउमारे णलिणीपत्ते पत्तच्छेदभत्तीए णहेहिं णिक्खित्तवण्णं करेहि । (ननु एतस्मिन् शुकोदरसुकुमारे नलिनीपत्रे पत्रच्छेदभक्त्या नखैर् निक्षिप्तवर्णं कुरु ।)

शकु०—(यथोक्तं रूपयित्वा) [10]हला ! सुणुह दाव संगदत्थं ण वे त्ति ।

---

१. श्रियो. २. अपि च—
अयं स यस्मात्प्रणयावधीरणामशङ्कनीयां करभोरु ! शङ्कसे ।
उपस्थितस्त्वां प्रणयोत्सुको जनो न रत्नमन्विष्यति मृग्यते हि तत् ।।
३. दाणिं. नि. ४. जोण्हं आदवत्तेण वारइस्सदि.
५. विस्मृति०. ६. पुलकाचितेन कथयति.
७. हला चिंतिदा मए गीदिआ. ८. ण खु, असंणिहि००लेहसाहणाइं.
९. णं इमस्सिं००णलिणीवत्ते पतच्छेदभत्तीए णहेहिं आलिहीअदु.
१०. सुणध दाणिं.

(हला ! शृणुतं तावत्, संगतार्थं न वेति ।)

उभे— अवहिदे[१]म्ह । (अवहिते स्वः ।)

शकु०—(वाचयति)

तुज्झ ण आणे हिअअं मम उण [२]मदनो दिवा वि रत्ति वि ।
णिग्घिण[३] ! तवइ वलीअं तुइ वुत्तमणोरहाइँ अंगाइं ॥१३॥

(तव न जाने हृदयं मम पुनः कामो दिवापि रात्रावपि ।
निर्घृण ! तपति वलीयस्त्वयि वृत्तमनोरथान्यङ्गानि ॥ )

राजा—(सहसोपसृत्य)

तपति तनुगात्रि ! मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥१४॥

सख्यौ—(सहर्षम्) साअदं [४]अविलंविणो मणोरहस्स ।
(स्वागतमविलम्बिनो मनोरथस्य ।) (शकुन्तलाऽभ्युत्थातुमिच्छति)

राजा—अलमलमायासेन

संदष्टकुसुमशयनान्याशु-[५]विवर्णितमृणालवलयानि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥१५॥

अन०—इदो सिलातलेक्कदेसं अलंकरेदु महाराओ ।[६] (इतः शिलातलैक-देशमलंकरोतु महाराजः)

(राजा उपविशति, शकुन्तला सलज्जा[७] किञ्चिदपसरति)

राजा—कच्चित् सखीं वो नातिवाधते शरीरतापः ?

---

१. अवहिदाओ.

२. कामो दिवा अ रत्ति च रत्तिम्मि-नि. दुष्यन्त-प्रतिवचने मदनशब्दस्यैव प्रयोगादत्रापि मदनशब्द एव युक्तः ।

३. णिक्किव ! दावइ वलिअं तुह हुत्तमणोरहाइ अंगाइ.

४. जधा समीहिदफलस्स अवि० द्र. र. ३।९ एवमन्यत्राप्यनेकशः ।

५. ०क्लान्तविसभङ्गसुरभीणि, ०विमर्दितमृ००नि०., ६. वअस्सो

७. तिष्ठति । प्रियं० दुवेणं णु वो अण्णोण्णाणुराओ पच्चक्खो । सहीसिणेहो उण मं पुणरुत्तवादिणिं करेदि । राजा-भद्रे०००जनयति । प्रियं०-आवण्णस्स०० होदव्वं त्ति वो धम्मो । राजा-नास्मात् परम्, अस्मात् परं किं तत् ।

प्रियं०—[1]संपदं उपसमं गमिस्सदि।

शकु०—(ससाध्वसमात्मगतम्) हिअअ! तथा उत्तम्मिअ दाणिं किं ण, ण किं पि पडिवज्जसि (हृदय! तथा उत्ताम्य इदानीं किं न, न किमपि प्रतिपद्यसे ?)

अन०—महाभाअ। अत्थि प्रियंवदा किं पि वत्तुकामा।
(महाभाग! अस्ति प्रियंवदा किमपि वक्तुकामा।

प्रियं०—महाराअ! ण किं वि। सखीसणेहो मं पुणरुत्तवादिणिं करिस्सदि। (महाराज! न किमपि, सखीस्नेहो मां पुनरुक्तवादिनीं करिष्यति)

राजा—भद्रे! नैतत् परिहार्यम्। विवक्षितं हि अनुक्तमनुतापं जनयति।

प्रियं—तेण हि सुणादु महाराओ (तेन हि शृणोतु महाराजः)

राजा—अवहितोऽस्मि।

प्रियं०—णणु आवण्णस्स [2]विसअवासिणो जणस्स अत्तिहरेण रण्णा होदव्वम्। (ननु आपन्नस्य विषयवासिनो जनस्य आर्त्तिहरेण राज्ञा भवितव्यम्)।

राजा—नन्वेष नो धर्मः।

प्रियं०—तेण हि इअं णो पिअसही तुमं उद्दिसिअ इमं अवत्थंतरं भअवता मअणेण आरोविदा। ता अरुहसि अब्भुववत्तीए जीविदं से अवलंविदुं। (तेन हि इयमावयोः प्रियसखी, त्वामुद्दिश्य इदमवस्थान्तरं भगवता मदनेनारोपिता। तत् अर्हसि अभ्युपपत्त्या जीवितमस्या अवलम्बितुम्।)

राजा—भद्रे! साधारणोऽयं[3] प्रणयः। सर्वथा अनुगृहीतोऽस्मि।

---

१. लद्धोसधो संपदं०  २. अस्सम०, । विषयो जनपदः, चित्तविक्रिया च।
३. वि. २।१

शकु०—([1]प्रियंवदामवलोक्य) हला ! किं अंतेउर-विरहपज्जुस्सुअस्स राएसिणो उवरोहेण ?। (हला ! किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन ?।)

राजा—

इदमनन्यपरायणमन्यथा हृदयसंनिहिते ! हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे! मदनबाणहतोऽस्मि[2] हतः पुनः ॥१६॥

अन०—[3]महाराअ ? वहुवल्लहा राआणो सुणीअंति । ता जहा इअं णो पिअसही बंधुअणसोअणिज्जा ण भोदि तह णिव्वत्तेहि । (वयस्य ! बहुवल्लभा राजानः श्रूयन्ते । यथा इयं नौ प्रियसखी बन्धुजन-शोचनीया न भवति तथा निर्वर्तय ।)

राजा—भद्रे ! किं वहुना,—

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्ररसना[4] चोर्वी सखी च युवयोरियम् ॥१७॥

उभे—णिव्वुदेम्ह । (निर्वृते स्वः ।)

---

## रूपान्तरम्

उभे—'णिव्वुदाओ म्ह । (शकुन्तला हर्षं सूचयति) प्रियं०—अणुसूए ! पेक्ख पेक्ख मेहवादाहदं विअ गिम्हमोरिं खणे खु पच्चाअदजीविदं पिअसहिं. शकु०—मरिसावेध लोअवालं जं अम्हेहिं वीसद्धपलाविणीहिं उवआरादिक्कमेण भणिदं । उभे—(सस्मितम्) जेण तं मंतिदं सो जेव मरिसावेदु; अण्णस्स को अच्चो । शकु०—अरिहदि खु महाराओ इमं पच्चक्खवणं विसोढुं । परोक्खं वा किं ण मंतीअदि । राजा (सस्मितम्)—अपराधमिमं ततः सहिष्ये यदि रम्भोरु ! तवाङ्ग-सङ्गसंसृष्टे । कुसुमास्तरणे क्लमापहं मे सुजनत्वादनुमन्यसेऽवकाशम् । प्रियं०—ण एत्तिएण उण तुट्ठीभविस्सदि । शकु०—विरम दुल्ललिदे !। एदावत्थं गदाए वि मए कीलसि अनु०—(बहिर्विलोक्य) प्रियंवदे । एसो तपस्सिमिअपोदओ इदो तदो दिण्णदिट्ठी णूणं मादरं पब्भट्ठं अणुसरेदि । ता संजोएमि दाव णं प्रियं०—हला, चवलो क्खु एसो । णं णिवारिदुं एकाकी ण पारेसि । ता अहं वि सहा—

---

१. सप्रणयकोपस्मितम्
२. अस्मीत्यहमर्थे विभक्तिप्रतिरूपकमव्ययम् ।
३. वअस्स.
४. ०रशना, ०वसना

प्रियं०—(सदृष्टिक्षेपम्) अणसूए ! जह एसो इदो दिण्णदिट्ठी उत्सुओ मिअपोदओ मादरं अण्णेसदि। एहि; संजोएम णं (अनसूये ! यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति, एहि; संयोजयाव एनम् ।) (उभे प्रस्थिते)

शकु०—हला ! असरण म्हि। अण्णदरा वो आअच्छदु।
(हला ! अशरणास्मि । अन्यतरा युवयोरागच्छतु ।)

उभे—पुहवीए जो सरणं सो तुह समीवे वट्टइ।
(पृथिव्या यः शरणं स तव समीपे वर्तते ।) (निष्क्रान्ते)

शकु०—कहं गदाओ एव्व ? । (कथं गते एव ?।)

राजा—अलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्तते ।

किं सीकरैः [1]क्लमविनोदिभिरार्द्रवातं
संचारयामि नलिनीदलतालवृन्तम् ? ।
अङ्के निधाय करभोरु ! यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥१८॥

---

—अत्तणं करइस्सं। (उभे प्रस्थिते।) शकु०—इदो अण्णदो ण वो गं अणुमण्णे जदो असहाइणि म्हि। उभे—(सस्मितम्) तुमं दाव असहाइणि जाए पुहिवीणाहो समीवे वट्टदि (निष्क्रान्ते।) शकु०—कधं गदाओ पिअसहीओ राजा—(दिशोऽवलोक्य) सुन्दरि! अलमावेगेन। ननु अयम् आराधयिता जनस्ते सखीभूमौ वर्त्तते। तदुच्यतां—'किं शीकरैः ००अङ्के नि० ०ताम्रौ संवा० ०करभोरु यथासुखं ते'। शकु०—ण माणणी एसु०

(धारयति)। शकुं०—मुंच मुंच ण खु अत्तणो पहवामि; अध वा सहीमेत्तसरणा किं दाणिं एत्थ करइस्सं? राजा—धिक्; व्रीडितोऽस्मि। शकुं०—ण खु महाराअं भणामि। देव्वं उवालहामि। राजा—अनुकूलकारि दैवं किमुपालभ्यते? शकुं०—कधं दाणिं उवालहिस्सं जं मं अत्तणो अणीसं परगुणेहिं लोहावेदि?। राजा—(स्वगतम्) 'अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः कांक्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने। आवाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वादाबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः॥' (शकुन्तला गच्छत्येव) राजा—कथमात्मनः प्रियं न करिष्ये? (उपसृत्य पटान्तरमवलम्बते)—

---

१. शीतलैः, ०वातान्, ०वृत्तैः—पा०

शकु०—ण माणणीएसु अत्ताणं अवराहइस्सं। (न मा.नीयेष्वात्मानम-
पराधयिष्ये।) (उत्थाय गन्तुमिच्छति)

राजा—सुन्दरि ! [1]अनिर्वाणो दिवसः। इयं च ते शरीरावस्था,

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणा।
कथमातपे गमिष्यसि परिबाधा-[2]पेलवैरङ्गैः ? ॥१९॥

(बलादेनां निवर्तयति)

शकु०—पोरव ! रक्ख विणअं। मअणसंतत्तावि ण हु अत्तणो पहवामि।
(पौरव ! रक्ष विनयम्। मदनसंतप्तापि न खल्वात्मनः प्रभवामि।)

---

शकुं०—पौरव रक्खाविणअं। इदो तदो इसीओ संचरंति। राजा—सुन्दरि ! अलं गुरुजनाद् भयेन ०००श्चानुमोदिताः।

(दिशोऽवलोक्य) कथं प्रकाशं निर्गतोऽस्मि॥ (शकुन्तलां हित्वा पुनस्तैरेव पदैः प्रतिनिवर्तते) शकुं०—(पदान्तरे प्रतिनिवृत्य साङ्गभङ्गं) पोरव ! अणिच्छा-पूरओ वि संभासणमेत्तएण परिचिदो अअं जणो ण विसुमरिदव्वो। राजा—सुन्दरि, 'त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे। दिनावसानच्छायेव पुरोमूलं वनस्पतेः॥' शकुं०—(स्तोकमन्तरं गत्वात्मगतम्) हद्धी हद्धी, इमं सुणिअ ण मे चलणा पुरोमुहा पसरंति। भोदु, इमेहिं पज्जंतकुरुवएहिं ओवारिदसरीरा पेक्खिस्सं दाव से भावाणुबंधं। (तथा कृत्वा स्थिता) राजा—कथमेवं प्रिये अनुरागैकरसं मामुत्सृज्य निरपेक्षैव गतासि। 'अनिर्दयोपभोग्यस्य रूपस्य मृदुनः कथम्। कठिनं खलु ते चेतः शिरीषस्येव बन्धनम्॥' शकुं०—एदं सुणिअ णत्थि मे विहवो गच्छिदुं। राजा—संप्रति प्रियाशून्ये किमस्मिन् करोमि। (अग्रतोऽवलोक्य) हन्त ! व्याहतं गमनम्। 'मणिबन्धनगलितमिदं संक्रान्तोशीरपरिमलं तस्याः। हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः॥' (सबहुमानमादत्ते) शकुं०—(हस्तं विलोक्य) अम्मो, दोब्बल्लसिढिलदाए परिब्भट्टं पि मुणालवलअं मए ण परिण्णादं। राजा—(मृणालवलयमुरसि निक्षिप्य) अहो स्पर्शः। 'अनेन लीलाभरणेन ते प्रिये विहाय कान्तं भुजमत्र तिष्ठता। जनः समाश्वासित एष दुःखभागचेतनेनापि सता न तु त्वया॥' शकुं०—अदो वरं असमत्थ म्हि विलंबिदुं। भोदु, एदेण जेव—

---

१. अपरिनिर्वाणो. २. कोमलैरङ्गैः

राजा—भीरु ! अलं गुरुजनभयेन । दृष्ट्वा ते विदितधर्मा तत्रभवान्न तत्र दोषं ग्रहीष्यति कुलपतिः । अपि च,—

गान्धर्वेण[1] विवाहेन बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ।।२०।।

शकु०—मुंच दाव मं । भूओ वि सहीजणं अणुमाणइस्सं । (मुञ्च तावन्माम् । भूयोऽपि सखीजनमनुमानयिष्ये ।)

---

—अवदेसेण अत्ताणअं दंसइस्सं । (उपसर्पति) राजा—(दृष्ट्वा सहर्षम्) अये, जीवितेश्वरी मे प्राप्ता । परिदेवितानन्तरं प्रसादेनोपकर्तव्योऽस्मि खलु दैवस्य । 'पिपासक्षामकण्ठेन याचितं चाम्बु पक्षिणा । नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥' शकुं०—(राज्ञः प्रमुखे स्थित्वा) अज्ज, अद्धपधे सुमरिअ एदस्स हत्थ-भंसिणो मुणालवलअस्स किदे पडिणिउत्त म्हि । आचक्खिदं विअ मे हिअएण तए गहिदं ति । ता णिक्खिव एदं । मा मं अत्ताणअं च मुणिअणेसुं पआसइस्ससि । राजा—एकेनाभिसंधिना प्रत्यर्पयामि । शकुं०—केण उण । राजा—यदिदमहमेव यथास्थानं निवेशयामि । शकुं०—(आत्मगतम्) का गदी । (उपसर्पति) राजा-इतः शिलापट्टकमेव संश्रयाव । (उभौ परिक्रम्योपविष्टौ) राजा—शकुंतलाया हस्तमादाय अहो स्पर्शः । 'हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा । प्ररोहः संभृतो भूयः किं स्वित् कामतरोरयम्' ॥ शकुं०—(स्पर्शं रूपयित्वा) तुवरदु तुवरदु अज्जउत्तो । राजा—(सहर्षमात्मगतम्) इदानीमपि विश्वस्तः । भर्तुराभापणपद-—मेतत् । (प्रकाशम्) सुन्दरि, नातिश्लिष्टः संधिरस्य मृणालवलयस्य । यदि तेऽभिप्रेतमन्यथा घटयिष्यामि । शकुं०—(स्मितं कृत्वा) जधा दे रोअदि । राजा—(सव्याजं विलम्ब्य प्रतिमुच्य) सुन्दरि, दृश्यताम् । 'अयं स ते श्यामलता-मनोहरं विशेषशोभार्थमिवोज्झिताम्बरः । मृणालरूपेण नवो निशाकरः करं समेत्योभयकोटिमाश्रितः ॥' शकुं०—ण दाव णं पेक्खामि । पवणुक्कंपिणा अण्णुप्पलरेणुणा कलुसीकिदा मे दिट्ठी । राजा—(सस्मितम्) यदि मन्यसे अहमेनां वदनमारुतेन विशदां करिष्ये । शकु०—तदो अणुकंपिता भवे । किं उण ण दे—

---

१. मनुः—इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसंभवः इति ॥ (३।३२)
याज्ञवल्क्यश्च 'गान्धर्वः समयान्मिथः' (१।६१)

राजा—भवतु; मोक्ष्यामि ।

शकु०—कदा ? (कदा ?।)

राजा—

अपरिक्षतकोमलस्य यावत् कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते सदयं सुन्दरि ! गृह्यते रसोऽस्य ।।२१।।

(मुखमस्याः समुन्नमयितुमिच्छति, शकुन्तला नाट्येन परिहरति)

(नेपथ्ये)

चक्कवाकवहुए ! आमंतेहि सहअरं। उवट्ठिआ रअणी।
(चक्रवाकवधूः ! आमन्त्रयस्व सहचरम् । उपस्थिता रजनी ।)

शकु०—(ससंभ्रमम्) पोरव ! असंसअं मम सरीरवुत्तंतोवलंभस्स अज्जा गोदमी इदो एव्व आअच्छदि । जाव विडवंतरिदो होहि । (पौरव ! असंशयं मम शरीरवृत्तान्तोपलम्भाय आर्या गौतमी इत एवागच्छति । यावद् विटपान्तरितो भव ।)

---

—वीससामि । राजा–मा मैवम्; नवो हि परिजनः सेव्यानामादेशात् परं न वर्तते । शकुं०—अअं जेव अच्चुवआरो अविस्सासजणओ । राजा—(स्वगतम्) नाहमेतं रमणीयं सेवावकाशमात्मनः शिथिलयिष्ये । (मुखमुन्नमयितुं प्रवृत्तः) । शकुं०—(प्रतिषेधं रूपयन्ती विरमति) राजा—अयि मदिरेक्षणे, अलमस्मदविनया-शङ्कया । शकुं०—(किंचिद् दृष्ट्वावनतमुखी तिष्ठति) राजा—(अङ्गुलीभ्यां मुख-मुन्नमय्यात्मगतम्) चारुणा स्फुरितेनायमपरिक्षतकोमलः । पिपासतो ममानुज्ञां ददातीव प्रियाधरः' ।। शकु०—पडिण्णादमंथरो विअ अज्जउत्तो । राजा—सुन्दरि, कर्णोत्पलसंनिकर्षादीक्षणसादृश्यमूढोऽस्मि । (मुखमारुतेन चक्षुः सेवते) शकुं०—भोदु, पइदित्थदंसण म्हि संवुत्ता । लज्जामि उण अणुवआरिणी पिअआरिणो अज्जउत्तस्स । राजा—सुन्दरि, किमन्यत् । 'इदमप्युपकृतिपक्षे सुरभिमुखं ते मया यदाघ्रातम् । ननु कमलस्य मधुकरः संतुष्यति गन्धमात्रेण' ।। शकुं०—असंतोसे उण किं करेदि । राजा—इदमिदम् । (व्यवसितो वक्त्रं ढौकते)[1] । (नेपथ्ये) चक्कवाअवहु ! ००।

---

१. वयन्त्वत्रैवंदर्शिनः 'रूपान्तरगताः श्लोका दूरं मूलानुहारिणः ।
अनिगृह्यास्तथाप्येते हन्त श्यालीस्तना इव

राजा—तथा । (आत्मानमावृत्य तिष्ठति)

(ततः प्रविशति पात्रहस्ता गौतमी सख्यौ च)

सख्यौ—इदो इदो अज्जा गोदमी । (इत इत आर्या गौतमी ।)

गौत०—(शकुन्तलामुपेत्य) जादे ! अवि लहुसंदावाइं दे अंगाइं ? । (जाते ! अपि लघुसंतापानि ते अङ्गानि ? ।)

शकु०—अत्थि मे विसेसो । (अस्ति मे विशेषः ।)

गौत०—इमिणा दब्भोदएण णिराबाधं एव्व दे सरीरं भविस्सदि (शिरसि शकुन्तलामभ्युक्ष्य) वच्छे ! परिणदो दिअहो । एहि, उडजं एव्व गच्छम्ह । (प्रस्थिताः) । (अनेन दर्भोदकेन निराबाधमेव ते शरीरं भविष्यति । (शकुन्तलामभ्युक्ष्य) वत्से ! परिणतो दिवसः । एहि, उटजमेव गच्छामः) (प्रस्थिताः)

शकु०—(आत्मगतम्) हिअअ ! पढमं एव सुहोवणदे मणोरहे कादरभावं ण मुंचसि । साणुसअ-विहडिअस्स कहं दे संपदं संदावो ? (पदान्तरे स्थित्वा, प्रकाशम् ) लदावलअ संदावहारअ ! आमंतेमि तुमं भूओ वि परिभोअस्स । (हृदय ! प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि । सानुशयविघटितस्य कथं ते सांप्रतं संतापः ? । (पदान्तरे स्थित्वा प्रकाशम्) लतावलय संतापहारक ! आमन्त्रये त्वां भूयोऽपि परिभोगाय ।) (दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः)

राजा—(पूर्वस्थानमुपेत्य, सनिःश्वासम् ) अहो, विघ्नवत्यः प्रार्थितार्थसिद्धयः ।

मया हि,—
मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु[1] ॥२२॥

क्व नु खलु संप्रति गच्छामि ? अथवा,—इहैव [2]प्रियापरिभुक्तमुक्ते लतामण्डपे मुहूर्तं स्थास्यामि[3] । (सर्वतोऽवलोक्य)

---

१. 'तु'-शब्दोऽत्र वाक्ये समुद्विभ्रत्कुर्वद्रूपताक इति ध्वनिकारः ।

२. ०भुक्ते लतावलये. ३. तिष्ठामि.

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्लान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।
हस्ताद् भ्रष्टमिदं विसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतस[1]गृहाच्छक्नोमि शून्यादपि[2] ।।२३।।

(नेपथ्ये)

भो भो राजन् !

सायंतने सवनकर्मणि संप्रवृत्ते
वेदीं हुताशनवतीं परितः प्रकीर्णाः[3] ।
छायाश्चरन्ति वहुधा भयमादधानाः
संध्यापयोदकपिशाः पिशिताशनानाम् ।।२४।।

राजा— (आकर्ण्य, सावष्टम्भम्) भो भोस्तपस्विनः ! मा भैष्ट [4]अयमहमा-
गतोऽस्मि । (निष्क्रान्तः)

।। इति तृतीयोऽङ्कः[5] ।।

---

१. वेतसगृहादीशोऽस्मि.

२. (विचिन्त्य) अहो, धिक् । असम्यक् चेष्टितं प्रियां समासाद्य कालहरणं कुर्वता मया । तदिदानीं—

रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुनर्
न कालं हास्यामि प्रकृतिदुरवापा हि विषयाः ।
इति क्लिष्टं विघ्नैर्गणयति च मे मूढहृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव ।।

३. प्रयस्ताः. ४. अयमयमागच्छामि. ५. इति शृङ्गारभोगो नाम०.

## ।। अथ मिश्रविष्कम्भकः ।।

[१]

(प्रविशतः कुसुमावचयं नाटयन्त्यौ सख्यौ)

अन०—पिअंवदे ! जइ वि गंधव्वेण विहिणा णिव्वुत्तकल्लाणा सउंदला अणुरूवभत्तुगामिणी संवुत्तेति निव्वुदं मे हिअअं, तह वि एत्तिअं चिंतणिज्जं। (प्रियंवदे ! यद्यपि गान्धर्वेण विधिना निर्वृत्त-कल्याणा शकुन्तला अनुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम्, तथाप्ये-तावच्चिन्तनीयम् ।)

प्रियं०—कहं विअ ? । (कथमिव ? ।)

अन०—अज्ज सो राएसी [2]इट्ठिं परिसमाविअ इसीहिं विसज्जिओ अत्तणो णअरं पविसिअ अंतेउरसमागदो इदोगदं वुत्तंतं सुमरदि वा ण वेत्ति ? (अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्य अन्तःपुरसमागतः इतोगतं वृत्तान्तं स्मरति वा न वेति ?)

प्रियं०—वीसद्धा होहि। ण तादिसा आकिदिविसेसा गुणविरोहिणो होंति । तादो दाणिं इमं वुत्तंतं सुणिअ, ण आणे किं पडिवज्जि-स्सदि त्ति । (विस्रब्धा भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति ।)

अन०—जह अहं पेक्खामि, तस्स अणुमदं भवे ।
(यथाहं पश्यामि, तस्यानुमतं भवेत् ।)

प्रियं०—कहं विअ ? । (कथमिव)

अन०—[3]गुणवदे कण्णआ पडिवादणिज्जे त्ति अअं दाव पढमो संकप्पो । तं जइ देव्वं एव्व संपादेदि णं अप्पआसेण किदत्थो गुरुअणो ।

---

१. इयमस्मत्कृता योजना । अत्र चतुर्थोऽङ्कः इति प्रवेशक एव, सोऽपि च शिष्यप्रवेशात् पूर्वं यावदेवेति च । मा.सा.नि.पि.खि.च. ।

२. इष्टिरियं चतुर्दिनावसानकः सोमयागः इति मीमांसकाः ।

३. किं अण्णं । वरस्स अणुरूवस्स कण्णआ पडिवादणीअअ त्ति अअं दाव पढमो संकप्पो तं जइ देव्वं जेव संपादेदि णं किदत्थो गुरुअणो.

(गुणवते कन्यका प्रतिपादनीयेत्ययं तावत् प्रथमः संकल्पः। तं यदि दैवमेव संपादयति ननु अप्रयासेन कृतार्थो गुरुजनः।)

प्रियं०—सहि एवं णेदं (पुष्पभाजनं विलोक्य) सहि ! अवइदाइं बलिकम्म-पज्जत्ताइं कुसुमाइं। (सखि ! एवं नन्विदं (? णेदं) (पुष्पभाजनं विलोक्य) अवचितानि बलिकर्मपर्याप्तानि कुसुमानि।)

अन०—णं सहीए सउंदलाए सोहग्गदेवआ अच्चणीआ।
(ननु सख्याः शकुन्तलायाः सौभाग्यदेवताऽर्चनीया।)

प्रियं०—जुज्जदि। (युज्यते।) (तदेव कर्मारभेते)

(नेपथ्ये)

अयमहं भोः !

अन०—(कर्णं दत्त्वा) सहि ! अदिथीणं विअ णिवेदिदं। (सखि ! अतिथीनामिव निवेदितम्।)

प्रियं०—णं उडजसंणिहिदा सउंदला। (आत्मगतम्) अज्ज उण हिअएण असंणिहिदा। (ननु उटजसंनिहिता शकुन्तला। आत्मगतम् अद्य पुनर्हृदयेनासंनिहिता।)

अन०—होदु; अलं एत्तिएहिं कुसुमेहिं। (भवतु; अलमेतावद्भिः कुसुमैः।)

(प्रस्थिते)

(नेपथ्ये) [1]आः, अतिथिपरिभाविनि !

विचिन्तयन्ती यमनन्यमानसा
तपोधनं[2] वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥१॥

प्रियं०—हद्धी। अप्पिअं जेव्व संवुत्तं। कस्सिं पि पुज्जारिहे अवरद्धा सुण्णहिअआ सउन्दला[3]।

---

१. आः ! कथमतिथिं मां परिभवसि !

२. तपोनिधिं ३. सुण्णहिअआ सउन्दला। (पुरोवलोक्य) णहु—हुदहादो दहिदुं पहवदि। अनु०—गच्छ पादयोः००नि. मा.खि. च.

(हा धिक्, अप्रियमेव संवृत्तम्। कस्मिंश्चित् पूजार्हे अपराद्धा शून्यहृदया शकुन्तला।)

अन०—(पुरोऽवलोक्य) णहु जस्सिं कस्सिं क्खु। एसो दुव्वासो सुलहकोवो महेसी। तह सविग्र वेअवलुप्फुल्लाए दुव्वाराए गईए पडिणिवुत्तो। (न हि यस्मिन् कस्मिन् खलु। एस दुर्वासाः सुलभकोपो महर्षिः। तथा शप्त्वा वेगवलोत्फुल्लया दुर्वारया गत्या प्रतिनिवृत्तः)।

प्रियं०—को अण्णो हुदवहादो दहिदुं पहवदि[1] ?

(कोऽन्यो हुतवहाद् दग्धुं प्रभवति !

अनु०—गच्छ, पायेसु पणमिग्र णिवत्तेहि णं, जाव अहं अग्घोदअं उवकंपेमि। (गच्छ, पादयोः प्रणम्य निवर्त्तय एनम्, यावदहम् अर्घोदकमुपकल्पयामि।)

प्रियं०[2]—तह। (तथा।) (निष्क्रान्ता)

अन०[3]—(पदान्तरे स्खलितं निरूप्य) अव्वो ! आवेगक्खलिदाए गईए पब्भट्टं मे ग्रग्गहत्थादो पुप्फभाग्रणं। (अहो ! आवेगस्खलितया गत्या प्रभ्रष्टं ममाग्रहस्तात् पुष्पभाजनम्।) (पुष्पोच्चयं रूपयति)

(प्रविश्य)

प्रियं०[4]—सहि ! पकिदिवक्को सो कस्स ग्रणुणग्रं पडिगेण्हदि ?। किं वि उण साणुक्कोसो किदो। (सखि ! प्रकृतिवक्रः स कस्यानुनयं प्रतिगृह्णाति ?। किमपि पुनः सानुक्रोशः कृतः।)

अन०[5]—(सस्मितम्) तस्सि बहु एदं वि। कहेहि। (तस्मिन् बह्वेतदपि कथय।)

प्रियं०[6]—जदा णिवत्तिदुं ण इच्छदि तदा विण्णविदो मए—भअवं ! पढम त्ति पेक्खिअ ग्रविण्णादतवप्पहावस्स दुहिदुजणस्स भअवदा एक्को ग्रवराहो मरिसिदव्वोत्ति। (यदा निर्वर्तितुं नेच्छति तदा विज्ञापितो मया—भगवन् ! प्रथम इति प्रेक्ष्य अविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवता एकोऽपराधो मर्षितव्य इति)

---

१. दहिदुं पहवदि। ता गच्छ। पायेसु णमिअ पसादेहि णं जाव०० । अन० तह (निष्क्रान्ता)-सा.। प्रसादने प्रियंवदाया एव व्यापार उचितः।
२. अनुसूया—. ३. प्रियंवदा—अम्मो.
४. अनुसूया—सहि, सरीरी विअ कोवो कस्स सो.
५. प्रियंवदा-एदं जेव तस्सि बहुदर ता कधेहि. ६. अनसूया—

अन०[1]—तदो तदो ? । (ततस्ततः ? ।)

प्रियं०[2]—तदो मे वअणं अण्णहाभविदुं णारिहदि । किदु अहिण्णाणाभरणदंसणेण सावो णिवत्तिस्सदि त्ति मंतअंतो सअं अंतरिहिदो । (ततो मे वचनमन्यथाभवितुं नार्हति, किन्त्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयन् स्वयमन्तर्हितः ।)

अन०[3]—सक्कं दाणिं अस्ससिदुं । अत्थि तेण राएसिणा सपत्थिदेण सणामहेअंकिअं अंगुलीअअं [4]सुमरणीअं त्ति सअं पिणद्धं । तस्सि साहीणोवाआ सउंदला भविस्सदि । (शक्यमिदानीमाश्वसितुम् । अस्ति तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम् । तस्मिन् स्वाधीनोपाया शकुन्तला भविष्यति ।)

प्रियं०[5]—सहि ! एहि; देवकज्जं दाव णिव्वत्तेम्ह ।
(सखि ! एहि; देवकार्यं तावन्निर्वर्तयावः ।)

(परिक्रामतः)

प्रियं०[6]—(विलोक्य) अणसूए ! पेक्ख दाव । वामहत्थोवहिदवअणा आलिहिदा विअ पिअसही । भत्तुगदाए चिंताए अत्ताणं वि एसा ण विभावेदि, किं उण आअंतुअं ? । (अनसूये ! पश्य तावत्; वामहस्तोपहितवदना आलिखितेव प्रियसखी । भर्तृगतया चिन्तया आत्मानमपि नैषा विभावयति, किं पुनरागन्तुकम् ? ।)

अन०[7]—पिअंवदे ! दुवेणं एव्व णं णो मुहे एसो वुत्तंतो चिट्ठदु । रक्खिदव्वा खु पकिदिपेलवा पिअसही । (प्रियंवदे ! द्वयोरेव ननु नौ मुखे एष वृत्तान्तस्तिष्ठतु । रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी ।)

प्रियं०[8]—को णाम उण्होदएण णोमालिअं सिंचेदि ? (को नामोष्णोदकेन नवमालिकां सिञ्चति ? ।) (उभे निष्क्रान्ते)[9]

---

१. प्रियंवदा—. २. अनु०—तदो सो ण....भविदुं अरिहदि ।
३. प्रियं०—. ४. सुमरावणीअं ति सउंतलाहत्थे सअं जेव पिणद्धाविदं । एसो जेव तस्सि साहीणो उवाओ भविस्सदि ।
५-८ अनु०—. ९. अत्रैव विष्कम्भकसमाप्तिरिति सर्वे । प्रवेशक इत्यन्ये ।—

[ २ ]

(ततः प्रविशति सुप्तोत्थितः शिष्यः)

शिष्यः—[१]वेलोपलक्षणार्थमादिष्टाऽस्मि तत्रभवता प्रभासप्रवासादुपावृत्तेन काश्यपेन। प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति। (परिक्रम्यावलोक्य च) हन्त प्रभातम्। तथा हि,—

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतोऽरुणपुरःसर एकतोऽर्कः।
तेजोद्वयस्य युगपद् व्यसनोदयाभ्यां
लोको नियम्यत [२]इवात्मदशान्तरेषु ॥२॥

अपि च,— अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्र[३]सुदुःसहानि ॥३॥[४]

यावदुपस्थितां होमवेलां गुरवे निवेदयामि।

(निष्क्रान्तः)

---

—वयं तु शकुन्तलाप्रवेशावधि सूच्यत्वस्याखण्डितत्वान्मध्ये संस्कृतोक्तेश्च मिश्रविष्कम्भकत्वमेवात्र तदवधिकं मन्यामहे। ननु सख्योः स्वैरालापोऽत्र सूच्येतर इति चेत् स इतः पूर्वमपीत्यदोषः।

१. वेलोपलक्षणायादिष्टोऽस्मि प्रभासात्प्रतिनिवृत्तेन तत्रभवता कण्वेन तत्प्रकाशं निर्गत्यावलोकयामि किमवशिष्टं०

२. इवैष दशान्तरेषु स्वस्व-विपत्ति-संपत्तिदशायां केनापि दुःखहर्षौ न कार्यौ इति भावः रा.

३. ०दुरुद्वहानि.

४. अपिच-'कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः। वेदिप्रान्तात्खुरविलिखितादुत्थितश्चैष सद्यः पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः ॥' अपि च'पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः क्रान्तं येन क्षयिततमसा मध्यमं धाम विष्णोः। सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखैर-त्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ॥ पा०

(प्रविश्यापटीक्षेपेण[1])

अन०—णं प्रभादा रमणी। ता लहु पदिवुद्धम्हि। अथवा पडिवुद्धा वि किं करिस्सं? ण मे उइदेसु वि णिअकरणिज्जेसु हत्थपाआ पसरंति। कामो दाणिं सकामो होदु। जेण असच्चसंधे जणे सुण्णहिअआ सही पदं कारिदा। विसअपरम्मुहस्स वि जणस्स एदं ण विदिअं जह तेण रण्णा सउंदलाए अणज्जं आअं-रिदं। अहवा, दुव्वाससो कोवो एसो विआरेदि। अण्णहा.कहं सो राएसी तारिसाणि मंतिअं एत्तिअस्स कालस्स लेहमेत्तं पि ण विसज्जेदि? ता इदो अहिण्णाणं अंगुलीअअं से विसज्जेम। दुक्खसीले तवस्सिजणे को अब्भत्थीअदु? णं सहीगामी दोसो त्ति व्ववसिदा वि ण पारेमि, पवासपडिणिउत्तस्स तादकस्स-वस्स दुस्संतपरिणीदं आवण्णसत्तं सउंदलं णिवेदिदुं एत्थगए अम्हेहिं किं करणिज्जं? (ननु प्रभाता रजनी तत् लघु प्रतिबुध्ये। अथवा प्रतिबुद्धापि किं करिष्ये? न मे उचितेष्वपि निजकार्येषु हस्तपादं प्रसरति। कामः इदानीं सकामो भवतु। येन असत्यसंधे जने शून्यहृदया सखी पदं कारिता। विषयपराङ्मुखस्यापि जनस्य, एतन्न विदितं यथा तेन राज्ञा शकुन्तलायामनार्यमाचरितम्। अथवा, दुर्वाससः कोप एष विकारयति। अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वा एतावत् कालस्य लेखमात्रमपि न विसृजति? तदितः अभिज्ञानमङ्गुलीयकं तस्य विसृजावः। दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम्? ननु सखीगामी दोष इति व्यवसितापि न पारयामि, प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीताम् आपन्नसत्त्वां शकुन्तलां निवेदयितुम्। इत्थंगते अस्माभिः किं करणीयम्?।)

प्रियं०—(सहर्षम्) सहि! तुवर सउंदलाए पत्थाण[2]कोदुअं णिव्वत्तिदुं। (सखि! त्वरस्व शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम्।)

---

१. ०सहानि ॥३॥ (प्रविश्यापटी (पटा) क्षेपेण) अन०—जइ वि (एवं) णाम विसअपरंमुहस्स वि जणस्स (ण) एदं ण (णि)विदिअं तह वि तेण रण्णा सकुंदलाए अणज्जं आचरिअं त्ति। शिष्यः—याव०० (निष्क्रान्तः) अन०—प्रतिबुद्धा०० कारिदा०० अथवा।'—एवंप्रायः सार्वत्रिकः पाठः। योजनेय-मस्मत्कृता।

२. ०कोदूहलाइं करीअंति.

(प्रविश्य)

अन०—(सविस्मयम्) [१]सहि ! कहं एदं ? । (सखि ! कथमेतत् ? ।)

प्रियं०—सुणाहि; दाहिं [२]सुहसइदपुच्छिश्रा सउंदलासग्रासं गदम्हि[३] । तदो जाव एणं लज्जावणदमुहिं परिस्सजिअ [४]तादकस्सवेण एव्वं अहिणंदिदं—[५]दिट्ठिआ धूमाउलिददिट्ठिणो वि जअमाणस्स [६]पाअए एव्व आहुदी पडिदा । वच्छे ! [७]सुसिस्सपरिदिण्णा विज्जा विअ असोअणिज्जा सि संवुत्ता । [८]अज्ज एव्व इसिरक्खिदं तुमं भत्तुणो सआसं वसज्जेमि—त्ति । (शृणु । इदानीं सुखशयितपृच्छिका शकुन्तलासकाशं गतास्मि । ततो यावदेनां लज्जावनतमुखीं परिष्वज्य तातकाश्यपेनैवमभिनन्दितम्-दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता । वत्से ! सुशिष्यपरिदत्ता विद्येव अशोचनीयाऽसि संवृत्ता । अद्यैव ऋषिरक्षितां त्वां भर्तुः सकाशं विसर्जयामि—इति ।)

अन०—अह केण सूइदो तादकस्सवस्स अअं वुत्तंतो ? । (अथ केन सूचितः तातकाश्यपस्य अयं वृत्तान्तः ? ।)

प्रियं०—अग्गिसरणं पविट्ठस्स सरीरं विणा छंदोमईए अणआ वाणिआए । (अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या अनया वाण्या—)

(संस्कृतमाश्रित्य)

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव[९] ॥४॥

अन०—(प्रियंवदामाश्लिष्य) सहि ! पिअं मे; किंदु अज्ज एव्व सउंदला णीअदित्ति उक्कंठासाधारणं परितोसं अणुहोमि । (सखि !

---

१. सहि, कधं विअ ।
२. सहसुत्तिआपुच्छणणिमित्तं०
३. अनु०—तदो तदो । प्रियं०—तदो जाव०
४. तादकण्णो०० अहिणंदेदि.
५. वच्छे दिट्ठिआ धूमोवरुद्धदिट्ठिणो०
६. मुहे ज्जेव णिवडिदा आहुदी०
७. सुसिस्सपरिग्गहीदा विअ.
८. ता अज्ज ज्जेव तुमं इसिपारग्गहीदं कदुआ.
९. र. ३।९.

प्रियं मे; किंतु अद्यैव शकुन्तला नीयत इति [1]उत्कण्ठासाधारणं परितोष-मनुभवामि ।)

प्रियं०—सहि ! अम्हं कधं वि उक्कंठं विणोदइस्सामो । सा तवस्सिणी णिव्वुदा होदु । (सखि ! आवां कथमपि उत्कण्ठां विनोदयिष्यावः । सा तपस्विनी निर्वृता भवतु ।)

अन०—तेण हि एदस्सि चूदसाहावलंविदे णारिएरसमुग्गए एतण्णिमित्तं जेव्व कालहरणक्खमा णिक्खित्ता मए केसरमालिआ । तुमं इमं हत्थसंणिहिदं[2] करेहि । अहंपि से [3]मिअलोअणं तित्थ-मिट्टिअं दुव्वाकिसलअणित्ति मंगलसमालंभणाणि [4]विरएमि । (तेन हि एतस्मिन् चूतशाखावलम्बिते नालिकेरसमुद्गके एतन्निमित्तमेव कालहरणक्षमा निक्षिप्ता मया केसरमालिका । त्वम्, इमां हस्तसंनिहितां कुरु, अहमपि तस्यै मृगरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानीति मङ्गल-समालम्भनानि विरचयामि ।)

प्रियं०—तह करीअदु । (तथा क्रियताम् ।)

(अनसूया निष्क्रान्ता; प्रियंवदा नाट्येन सुमनसो गृह्णाति)

(नेपथ्ये)

गौतमि ! आदिश्यन्तां शार्ङ्गरवमिश्राः[5] शकुन्तला-नयनाय ।

प्रियं०—(कर्णं दत्त्वा) अनसूए ! तुवरसु; एदे खु हत्थिणाउरगामिणो इसीओ आआरीअंति । (अनसूये ! त्वरस्व; एते खलु हस्तिनापुरगामिन ऋषय आकार्यन्ते ।) (प्रविश्य समालम्भनहस्ता)

अन०—सहि ! एहि; गच्छम्ह । (सखि ! एहि, गच्छाव ।) (परिक्रामतः)

प्रियं०—(विलोक्य) एसा सुज्जोदए एव्व सिहामज्जिदा पडिच्छिद-णीवारहत्थाहिं सोत्थि-वाअणकाहिं तावसोहिं अहिणंदीअमाणा सउंदला चिट्ठइ । उवसप्पम्ह णं । (एषा सूर्योदय एव शिखा-मज्जिता प्रतिच्छितनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्य-माना शकुन्तला तिष्ठति । उपसर्पाव एनाम् ।) (उपसर्पतः)

॥ [6]इति मिश्रविष्कम्भकः ॥

---

१. उत्कण्ठा नाम विरहपर्युत्सुकत्वम् मे. २।४०.
२. णलिणीवत्तसंगदे. ३. गोरोअणं तित्थमट्टिअं ४ विरअआमि.
५. शार्ङ्गरवशारद्वतमिश्राः. ६. इयमस्मत्कृता वस्तुयोजना ।

# [1] अथ चतुर्थोऽङ्कः

(ततः प्रविशति यथोद्दिष्टव्यापाराऽऽसनस्था शकुन्तला)

शकु०—भवदीओ ! वन्दामि ।  (भगवत्यः ! वन्दे ।)

एका— (शकुन्तलां प्रति) जादे ! भत्तुणो वहुमाणसूअअं देईसद्दं लहेहि । (जाते ! भर्तुः बहुमानसूचकं देवीशब्दं लभस्व)

द्विती०—वच्छे ! वीरप्पसविणी होहि । (वत्से ! वीरप्रसविनी भव ।)

तृती०—अच्छे ! भत्तुणो वहुमदा होहि । (वत्से ! भर्तुर्बहुमता भव ।)

(आशिषो दत्त्वा गौतमीवर्जं निष्क्रान्ताः)

सख्यौ—(उपसृत्य) सहि ! सुहमज्जणं दे होदु । (सखि ! सुखमज्जनं ते भवतु ।)

शकु०—साअयं मे पिअसहीणं । इदो णिसीदह । (स्वागतं मे प्रियसख्योः । इतो निषीदतम् ।)

उभे—(मङ्गलपात्राण्यादाय उपविश्य) हला ! [2] सज्जा होहि । जाव मंगलसमालंभणं विरएम । (हला ! सज्जा भव । यावन्मङ्गल-समालम्भनं विरचयाव ।)

शकु०—उइदं वि एदं अज्ज वहु मंदव्वं । दुल्लहं दाणिं मे सहीमंडणं भवस्सदि त्ति । ([3] उचितमपि इदमद्य वहु मन्तव्यम् । दुर्लभमिदानीं मे सखीमण्डनं भविष्यतीति ।) (वाष्पं विसृजति)

उभे—सहि ण जुत्तं मंगलकाले रोइदुं । (सखि ! न युक्तं मङ्गलकाले रोदितुम् ।) (अश्रूणि प्रमृज्य नाट्येन प्रसाधयतः)

प्रियं०—[4] आहरणोइदं रूवं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि । (आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते ।)

---

१. इयमस्मद्योजना  २. उज्जुआ ।

३. उचितं [illegible] ।  ४. अदो आहरणरिहं

(¹प्रविश्योपायनहस्तौ ऋषिकुमारकौ)

एकः²—इदमलंकरणम् । अलंक्रियतामत्रभवती ।

(सर्वा विलोक्य विस्मिताः)

गौत०—वच्छ ³णारअ ! कुदो एदं ? (वत्स नारद ! कुत एतत् ? ।

प्रथ०—तातकाश्यपप्रभावात् ।

गौत०—किं माणसी सिद्धी ? । (किं मानसी सिद्धिः ? ।)

द्विती०—न खलु । श्रूयताम् । तत्रभवता वयमाज्ञप्ताः—शकुन्तलाहेतो-र्वनस्पतिभ्यः कुसुमान्याहरत—इति । तत इदानीं,—

> क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
> निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
> अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
> र्दत्तान्याभरणानि तत्किसलयोद्भेद-⁴ प्रतिद्वन्द्विभिः ॥५॥

प्रियं०⁵—(शकुन्तलां विलोक्य) हला ! इमाए अब्भुववत्तीए सूइया दे भत्तुणो गेहे अणुहोदव्वा राअलच्छित्ति । (हला ! अनया अभ्युपपत्त्या सूचिता, ते भर्तुर्गेहे अनुभवितव्या राजलक्ष्मीरिति ।)

(शकुन्तला व्रीडां रूपयति)

प्रथमः⁶—गौतम ! एह्येहि; अभिषेकोत्तीर्णाय भगवते काश्यपाय निवेदयाव यावदिमां वनस्पतिसेवाम् ।

द्विती०—तथा । (निष्क्रान्तौ)

सख्यौ—अए ! ⁷अणुवजुत्तभूसणो अअं जणो । ता चित्तकम्मपरिअएण अङ्गेसु दे आहरणविणिओअं करेम्ह । (अये ! अनुपयुक्तभूषणोऽयं जनः । तत्, चित्रकर्मपरिचयेन, अङ्गेषु ते आभरणविनियोगं कुर्वः ।)

शकु०—जाणे वो णेउणं । (जाने वां नैपुणम् ।) (उभे नाट्येनालंकुरुतः)

(ततः प्रविशति स्नानोत्तीर्णः काश्यपः)

---

१. (प्रविश्याभरणहस्तो मुनिकुमारकः) इदमलंकारजातमलंक्रियतामायुष्मती.
२. हारीतः—. ३. हारीद. ४. व्यच्छायाप्रतिस्पर्धिभिः ।
५. प्रियं०—(शकुन्तलां विलोक्य) कोडरसंभवा वि महुअरी पोक्खरमहुं जेव अहिलसदि । गौतमी-इमाए अब्भुव०० लच्छी । ६. हारीतः-यावदिमां वनस्पतिसेवामभिषेकार्थं मालिनीतीरमवतीर्णाय भगवते कण्वाय निवेदयामि । (निष्क्रान्तः). ७. अणणुभूदभूसणो अअं जणो कधं तुमं अलंकरेदु (चिंतयित्वा विलोक्य च) चित्तपरिचएण दाणिं दे अंगेसुं आहरणविणिओअं करेम्ह.

काश्यपः— यास्यत्यद्य शकुन्तलेति हृदयं [1]संस्पृष्टमुत्कण्ठया
कण्ठः[2] स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमिदं[3] स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु[4] तनयाविश्लेषदुःखैर्नवैः[5] ॥६॥

(परिक्रामति)

सख्यौ हला सउंदले ! अवसिदमंडणासि । परिधेहि संपदं विचित्रं खोमजुअलं । (हला शकुन्तले ! अवसितमण्डनासि । परिधत्स्व सांप्रतं विचित्रं क्षौमयुगलम् ।) (शकुन्तलोत्थाय परिधत्ते)

गौतमी—जादे ! एसो दे आणंदपरिवाहिणा चक्खुणा परिस्सजंतो विअ गुरू उवट्ठिदो । [6]आआरं दाव पडिवज्जस्स । (जाते ! एष ते आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव, गुरुरुपस्थितः, आचारं तावत् प्रतिपद्यस्व ।)

शकु०—(सव्रीडम्) ताद ! वंदामि । (तात ! वन्दे ।) (वन्दते)

काश्यपः—वत्से !

ययातेरिव शर्मिष्ठा [7]भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥७॥

गौतमी—भअवं ! वरो खु एसो; ण आसिसा ।
(भगवन् ! वरः खल्वेषः, नाशिषः ।)

काश्यपः—वत्से ? इतः सद्याहुताग्नीन् प्रदक्षिणीकुरुष्व ।

(सर्वे परिक्रामन्ति)

काश्यपः—(ऋक्छन्दसाऽऽशास्ते)

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धैर्
वैतानास्त्वां वह्नयः पावयन्तु ॥८॥

---

१. स्पृष्टं समुत्कण्ठया.
२. अन्तर्बाष्पभरोपरोधि गदितं
३. ०महो
४. कियन्नु
५. 'काव्येषु नाटकं रम्यं तत्रापि च शकुन्तला । तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ॥' इति प्रसिद्धिः । तत्रायं प्रथमः श्लोकः ।
६. समुदाचारं ।
७. पत्युः । अत्र ययातिशर्मिष्ठौपम्येन भाविदुर्निमित्तमपि सूच्यते ।

प्रतिष्ठस्वेदानीम् । (सदृष्टिक्षेपम्) क्व ते शार्ङ्गरवमिश्राः ? ।

(प्रविश्य)

शिष्यौ – भगवन् ? इमौ स्वः ।

काश्यपः–भगिन्यास्ते मार्गमादेशय ।

शार्ङ्ग०—इत इतो भवती । (सर्वे परिक्रामन्ति)

काश्यपः–भो भोः संनिहितास्तपोवनतरवः[१] !

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु[२] या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये[३] यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्[४] ॥९॥

(कोकिलरवं सूचयित्वा)

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं [५]यथा प्रतिवचनीकृतमेभिरीदृशम् ॥१०॥

([६]आकाशे)

रम्यान्तरः कमलिनीहरितैः सरोभिश्,
छायाद्रुमैर्नियमितार्कमयूख[७]-तापः ।
भूयात् कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥११॥

(सर्वे सविस्मयमाकर्णयन्ति)

गौत०—जादे ! [८]ण्णादिजणसिणिद्धं अब्भणुण्णादासि तवोवणदेवदाहिं । पणम भअवदीणं (जाते ! ज्ञातिजनस्निग्धाभिरनुज्ञातासि तपोवन-देवताभिः । प्रणम भगवतीः ।)

शकु०—(सप्रणामं परिक्रम्य जनान्तिकम्) हला पिअंवदे ! णं अज्जउत्त-दंसणुस्सुआए वि अस्समपदं परिच्चअंतीए दुक्खदुक्खेण मे चलणा पुरदो पवट्टंति[९] । (हला प्रियंवदे ! ननु आर्यपुत्रदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्या दुःखदुःखेन मे चरणौ पुरतः प्रवर्तेते ।)

---

१. ०वनदेवतास्तपो० । २. ०सिक्तेषु । ३. ०प्रवृत्ति०, ४. इदं चतुर्षु पद्येषु द्वितीयम् । ५. यदासीत्००तमेभिरात्मनः. ६. (नेपथ्ये).
७. ०मरीचि०, र. ११।११
८. ण्णादि०० द्दाहिं अणुण्णादगमणासि. नि. ९. पुरोमुहा णिवडंति.

प्रियं०—ण क्केवलं तवोवणविरहकादरा सही जेव्व, तुए उवट्ठिदविओ-अस्स तवोवणस्स वि दाव समवत्था दीसइ। (न केवलं तपोवन-विरहकातरा सख्येव, त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत् समवस्था दृश्यते।)

उग्गलिअदब्भकवला मिआ परिच्चत्तणच्चणा मोरा।
ओसरिअपंडुपत्ता मुंअइ अस्सू विअ लदाओ ॥१२॥
(उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः[1] ॥)

शकु०—(स्मृत्वा) ताद ! लदावहिणिअं वणजोसिणिं दाव आमंतइस्सं। (तात ! लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये।)

काश्य०—अवैमि ते तस्यां [2]सोदरस्नेहम्। इयं सा दक्षिणेन।

शकु०—(लतामुपेत्यालिङ्ग्य) वणजोसिणि ! चूदसंगता वि मं पच्चालिंग इदोगदाहिं साहावाहाहिं। अज्जप्पहुदि दूरपरिवत्तिणी भविस्सम्हि[3]। (वनज्योत्स्ने ! चूतसंगतापि मां प्रत्यालिङ्ग इतोगताभिः शाखाबाहाभिः। अद्यप्रभृति दूरपरिवर्तिनी भविष्यामि।)

काश्यपः—

संकल्पितं प्रथममेव मया [4]त्वदर्थे
भर्तारमात्मसदृशं [5]सुकृतैर्गता त्वम्।
चूतेन संश्रितवती नवमालिकेय-
मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥१३॥

इतः पन्थानं प्रतिपद्यस्व।

शकु०—(सख्यौ प्रति) हला ! एसा दुवेणं वो हत्थे णिक्खेवो। (हला ! एषा, द्वयोर्युवयोर्ननु हस्ते निक्षेपः।)

सख्यौ—अअं जणो कस्स हत्थे समप्पिदो ?। (अयं जनः कस्य हस्ते समर्पितः ?।) (बाष्पं विहरतः)

काश्य०—अनसूये ! अलं रुदित्वा। ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला। (सर्वे परिक्रामन्ति)

---

१. द्र. र. १४।६९. २. सौहार्दम् ३. ताद, अहं विअ इअं तुए चिंतणीआ. ४. तवार्थे. ५. ०स्वगुणैर्गतासि। अस्यास्तु संप्रति वरं त्वयि वीतचिन्तः, कान्तं समीपसहकारमिमं करिष्ये।)

शकु०—ताद ! एसा उडजपज्जंतचारिणी [1]गब्भमंथरा मिअवहू जदा अणहप्पसवा[2] होइ, तदा मे कं पि पिअणिवेदइत्तअं विसज्जइस्सह । (तात ! एषा उटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूः यदा अनघप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ ।)

काश्य०—वत्से ! नेदं विस्मरिष्यामः ।

शकु०—(गतिभङ्गं रूपयित्वा) को णु खु एसो णिवसणे मे सज्जइ ? । (को नु खल्वेष निवसने मे सज्जते ?) (परावर्तते)

काश्य०—वत्से !

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥१४॥

शकु०—वच्छ ! किं सहवासपरिच्चाइणिं मं अणुसरसि ? । [3]अचिरप्पसूदाए जणणीए विणा वड्ढिदो । दाणिं पि मए विरहिदं तुमं तादो चिंतइस्सदि । णिवत्तेहि वच्छ, णिवत्तेहि । (वत्स ! किं सहवासपरित्यागिनीं मामनुसरसि ? । अचिरप्रसूतया जनन्या विना वर्धितोऽसि[3] । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्त्तस्व वत्स निवर्त्तस्व ।) (रुदती प्रस्थिता)

काश्यपः—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
वाष्पं कुरु स्थिरतया विरतानुवन्धम्[4] ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥१५॥

शार्ङ्ग०—भगवन् ! ओदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरम् । अत्र संदिश्य प्रतिगन्तुमर्हसि ।

काश्य०—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः । (सर्वे परिक्रम्य स्थिताः)

---

१. काब्भहार. २. सुहप्पसवा.

३. एष हि शकुन्तलायाः सोदरो भ्राता, समानव्यसनतया । दीर्घापाङ्गो नाम दीर्घदर्शन एष न ह्येव विशश्वास, न च विश्वसिति दुष्यन्तस्य, प्रतिरुणद्धि च त्वां स्वसारमृषिरिव । ४. शिथिलानु०, विहतानु०.

काश्य०—(आत्मगतम्) किं नु खलु तत्रभवतो [1]दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम् ?। (चिन्तयति)

शकु०—(जनान्तिकम्) हला ! पेक्ख; [2]णलिणीपत्तंतरिदं वि सहअरं अपेक्खंती आदुरा चक्कवाई आरडदि दुक्करं अहं करेमि त्ति तक्केमि। (हला ! पश्य; नलिनीपत्रान्तरितमपि सहचरमपश्यन्ती आतुरा चक्रवाकी आरौति। दुष्करमहं करोमीति तर्कयामि।)

अन०—सहि[3] ! मा एव्वं मंतेहि।

एसा वि पिएण विणा गमअइ रअणिं विसाअदीहअरं।
गरुअं पि विरहदुक्खं आसाबंधो[4] सहावेदि ॥१६॥

(सखि ! मैवं मन्त्रय।)

एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम्।
गुर्वपि विरहदुःखमाशाबन्धः[4] साहयति॥

काश्य०—शार्ङ्गरव ! इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः।

शार्ङ्ग०—आज्ञापयतु भवान्।

काश्यपः—अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मनस्-
त्वय्यस्यां कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्[5]।
सामान्य[6]प्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद् वाच्यं वधूबन्धुभिः[7] ॥१७॥

शार्ङ्ग०—गृहीतः संदेशः।

---

१. दुःपंतस्य   २. वि. ४।२० श्लो.

३. सही, ण णो अस्समपदे अत्थि को वि चित्तवंतो जो तए विरहीअन्तो अज्ज ण ऊसुओ किदो। पेक्ख,—पुडइणिवत्तंतरिअं वाहरिओ णाणुवाहरेइ पिअं।
मुहउव्वूढमुणालो तुइ दिट्ठिं देइ चक्काओ॥
कण्वः—वत्स शार्ङ्गरव ! इति त्वया मद्वच०

४. मे. १।१० वि. ३।७-८ ग.   ५. गर्भाधानक्षणपरिचयावधिकाम्।

६. सा मान्यप्र० इत्यपिच्छेदः। ततश्च शकुन्तलाबहुमानसूचनमप्यत्र।

७. दैवाधीनम ००तत् स्त्रीबन्धुभिर्याच्यते।

काश्य०—वत्से ! त्वमिदानीमनुशासनीयासि । वनौकसोऽपि सन्तो लौकिकज्ञा[1] वयम् ।

शार्ङ्ग०—न खलु धीमतां कश्चिदविषयो नाम ।

काश्य०—सा त्वमितः पतिकुलं[2] प्राप्य,—

शुश्रूषस्व[3] गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
[4]भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने [5]भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ।।१८।।

कथं वा गौतमी मन्यते ? ।

गौत०—एत्तिओ वहूजणस्स उवदेसो । जादे ! एदं खु सव्वं ओधारेहि । (एतावान् वधूजनस्योपदेशः । जाते ! एतत् खलु सर्वमवधारय ।)

काश्य०—एहि वत्से ! परिष्वजस्व मां सखीजनं च ।

शकु०—ताद ! इदो एव्व किं पिअंवदामिस्साओ सहीओ णिवत्तिस्संति ? । (तात ! इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ? ।)

काश्य०—वत्से ! इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी गमिष्यति ।

शकु०—(पितरमाश्लिष्य) कहं दाणिं तादस्स अङ्कादो परिब्भट्ठा मलअपव्वदुम्मूलिआ चंदणलदा विअ देसंतरे जीविअं धारइस्सं ? । (कथमिदानीं तातस्य आङ्कात् परिभ्रष्टा मलयपर्वतोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि ।)

काश्य०—वत्से ! किमेवं कातरासि ? ।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां वत्से ! न त्वं शुचं गणयिष्यसि ।।१९।।

---

१. लोकज्ञा एव. २. पतिगृहं ।
३. काम. ४।१।५, ३७,३८ । इदं त्र चतुर्षु पद्येषु तृतीयम् ।
४. पत्युः । ५. भाग्येष्व.

शकु०—(पितुः पादयोः अवनम्य) ताद ! वंदामि (तात ! वन्दे)

काश्यपः—यदिच्छामि ते तदस्तु ।

शकु०—(सख्यावुपेत्य) सहीओ एत्थ दुवे वि मं समं जेव्व परिस्सजह ।
(हला ! द्वे अपि मां सममेव परिष्वजेथाम् ।)

सख्यौ—(तथा कृत्वा) सहि ! जइ णाम सो राआ पच्चहिण्णाणमंथरो भवे तदो से इमं अत्तणामहेअअंकिअं अंगुलीअअं दंसेहि । (सखि ! यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत् ततः तस्य इमाम् आत्मनामधेयाङ्कितमङ्गुलीयकं दर्शय ।)

शकु०—इमिणा संदेहेण वो आकंपिद म्हि । (अनेन संदेहेन वामाकम्पितास्मि ।)

सख्यौ—मा भाआहि; सिणेहो पावसंकी । (मा भैषीः, स्नेहः पापशङ्की ।)

शार्ङ्ग०—[1]अगान्तरमारूढः सविता ।, त्वरतामत्रभवती ।

शकु०—(आश्रमाभिमुखी स्थित्वा) ताद ! कदा णु भूओ तवोवणं पेक्खिस्सं ?
(तात ! कदा नु भूयस्तपोवनं प्रेक्षिष्ये ? ।)

काश्य०—वत्से ! श्रूयताम्—

> भूत्वा चिराय [2]चतुरन्तमहीसपत्नी
> [3]दौष्यन्तिमप्रतिरथं तनयं निवेश्य[4] ।
> [5]भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
> शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥२०॥

गौत०—जादे परिहीअदि गमणवेला । णिवत्तेहि पिदरं । अहवा चिरेण वि पुणो पुणो एसा एव्वं मंतइस्सदि । णिवत्तदु भवं ।
(जाते ! परिहीयते गमनवेला । निवर्तय पितरम् । अथवा चिरेणापि पुनः पुनरेषा एवं मन्त्रयिष्यते । निवर्ततां भवान् ।)

काश्य०—वत्से ! उपरुध्यते तपोऽनुष्ठानम् ।

---

१. युगा० २. सदिगन्त००.

३. दौःषन्ति०० प्रसूय.

४. निवेश्य विवाह्य्य । र. ११।५७. मनु. ४।२.

५. तत्संनिवेशितधुरेण सहैव भर्त्रा शान्त्यै

शकु०—(भूयः पितरमाश्लिष्य) तवच्चरणपीडिदं तादसरीरं। ता मा अदिमेत्तं मम किदे उक्कंठिदुं। (तपश्चरणपीडितं तातशरीरम्। तन्मातिमात्रं मम कृते उत्कण्ठितुम्।)

काश्य०[1]–(सनिःश्वासम्)

शममेष्यति मम शोकः कथं नु वत्से! त्वया रचितपूर्वम्?।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥२१॥

गच्छ, शिवास्ते पन्थानः सन्तु। (निष्क्रान्ता शकुन्तला सहयायिनश्च)

सख्यौ—(शकुन्तलां विलोक्य) हद्धी हद्धी। अंतरिदा सउंदला वणराईए। (हा धिक् हा धिक्। अन्तर्हिता शकुन्तला वनराज्या।)

काश्य०–(सनिःश्वासम्) अनसूये! प्रियम्वदे! गतवती वां सहधर्मचारिणी। निगृह्य शोकमनुगच्छतं मां प्रस्थितम्। (सर्वे प्रस्थिताः)

उभे—ताद! सउंदलाविरहिदं सुण्णं विअ तवोवणं कहं पविसावो?। (तात! शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः?।)

काश्य०–स्नेहप्रवृत्तिरेवंदर्शिनी। (सविमर्शं परिक्रम्य) हन्त भोः! शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम्। कुतः—

अर्थो हि कन्या परकीय एव
तामद्य[2] संप्रेष्य परिग्रहीतुः।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा[3] ॥२२॥

(निष्क्रान्ताः सर्वे)

॥ इति चतुर्थोऽङ्कः[4] ॥

---

१. कण्वः—अयि, किं मामेवं जडीकरोपि (निःश्वस्य) अपयास्यति मे शोकः०० त्वयाव०० द्वारि००। २. ०मेव.

३. जातोऽस्मि सद्यो विशदान्तरात्मा चिरस्य निक्षेप इवार्पयित्वा ॥ इदं च चतुर्षु श्लोकरत्नेषु चतुर्थम्।

४. शकुन्तलाप्रस्थानं नाम चतुर्थोऽङ्कः।

## विज्ञाप्यम्

पञ्चमस्यास्याङ्कस्यारम्भेऽत्रेयं द्विधा वस्तुयोजना—

| मा. नि. खि. च. | पि. सा. |
| --- | --- |
| १. सविदूषकराजप्रवेशः | १. प्रविष्टस्य कञ्चुकिनश्चतुश्श्लोकी एष राजेति निर्देशश्च |
| २. वर्णपरिचये हंसपदिकोपालम्भः | २. सविदूषकराजप्रवेशः |
| ३. हंसप०सान्त्वनाय विदू०-विसर्जनम् | ३. राज्ञः स्वाधिकार-खेदोक्तिः |
| ४. राज्ञोऽहेतु विरहपर्युत्सुकत्वम् | ४. वैतालिकोक्त्या राजखेदापनोदः |
| ५. कञ्चुकिप्रवेशस्तत्त्रिश्लोकी एष राजेति निर्देशश्च | ५. वर्णपरिचये हंसपदिकोपालम्भः |
| ६. राज्ञोऽग्निशरणप्रस्थानम् | ६. हंसप०सान्त्वनाय विदू०विसर्जनम् |
| ७. राज्ञः स्वाधिकारखेदोक्तिः | ७. राज्ञोऽहेतु विरहपर्युत्सुकत्वम् |
| ८. वैतालिकोक्त्या राजखेदापनोदः | ८. पर्युत्सुकाय राज्ञे कञ्चुकिनः कण्व-शिष्यागमनसूचना |
| ९. राज्ञश्चित्तसौस्थ्योपपत्तिः | ९. राज्ञः पर्युत्सुकेनैव चेतसाऽग्निशरण-प्रस्थानम् |
| १०. अग्निशरणे कण्वशिष्यप्रवेशः | १०. अग्निशरणे कण्वशिष्यप्रवेशः |

अत्र पि. सा. पाठे चतुर्थाङ्कवस्तुसमनन्तरवस्तुकत्वमित्येको गुणः, अवगुणाः पुनरेते १. कञ्चुकिन 'एष राजे'-ति अप्रविष्टाय राज्ञे निर्देशस्य निराधारत्वम्, २. राज्ञोऽग्निशरणप्रस्थानावसरे वस्त्वभावः, (मा. आदिपाठे पुनर्वैतालिकोक्त्या तत्पूर्त्तिः,) ३. शकुन्तलाप्रत्याख्यान-निर्णयेऽभ्यर्हितस्य चेतः—सौस्थ्यस्य विरहपर्युत्सुकत्वौपयिकं शैथिल्यं, शैथिल्यं च ततः प्रखरतायाः। (मा. आदिपाठे कञ्चुकिनः श्लोकत्रयोक्ति यावद् राज्ञः पर्याकुलत्वाभिनयेनारिक्ताभिनयकत्वलाभः, एकश्लोकन्यूनतया लाघवं चापरौ गुणौ) ॥

## पञ्चमोऽङ्कः

(ततः प्रविशति आसनस्थो राजा विदूषकश्च)

विदू०—(कर्णं दत्वा) भो वअस्स ! संगीदसालंतरे अवधाणं देहि। [1]लअविशुद्धाए गीदीए सरसंजोओ सुणीअदि। जाणे तत्तहोदी हंसवदिआ [2]वण्णपरिअअं करेदि त्ति। (भो वयस्य ! संगीतशालान्तरे अवधानं देहि। [1]लयविशुद्धाया गीतेः स्वरसंयोगः श्रूयते। जाने तत्रभवती हंसपादिका [2]वर्णपरिचयं करोतीति।)

---

### रूपान्तरम्

(पञ्चमोऽङ्कः)

(ततः प्रविशति कञ्चुकी) कञ्चु०—(निश्वस्य) अहो बत। कीदृशीं वयोवस्थामापन्नोऽस्मि। आचार इ०० लम्बनाय ॥१॥। यावदभ्यन्तर गताय देवाय स्वमनुष्ठेयमकालक्षेपाहं निवेदयामि (स्तोकमन्तरं गत्वा) किं पुनस्तत् ? (विचिन्त्य) आं, ज्ञातम्। कण्वशिष्यास्तपस्विनो देवं द्रष्टुमिच्छन्ति। भोश्चित्रमेतत् 'क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥२॥ (परिक्रम्य दृष्ट्वा) एष देवः प्रजाः०० षेवते शान्त०० द्विपेन्द्रः ॥३॥ यत्सत्यं शङ्कितोऽस्मीदानीमेव धर्मासनादुत्थिताय देवाय कण्वशिष्यागमनं निवेदयितुम्। अथवा कुतो वा विश्रमो लोकपालानाम्। तथा हि—'भानुः सकृद्०० धर्म एषः ॥४॥ (परिक्रामति) (ततः प्रविशति राजा विदूषको विभवतश्च परिवारः) राजा—(अधिकारखेदं निरूप्य) सर्वः प्रार्थितमधिगम्य सुखी संपद्यते। राज्ञां तु चरितार्थतापि दुःखोत्तरैव। कुतः औत्सुक्यमात्र०० तपत्रम् ॥५॥ (नेपथ्ये वैतालिकौ) जयति जयति देवः। एकः—

---

१. लयविशुद्धा = कलविशुद्धा नि. मा., तालगतिविशुद्धा० सा.। लयोऽत्र मध्यमः शृङ्गारप्रस्तावात्। तथा च माल० २।१ संवादे का. लयश्च तालमानम् इति, 'तालवर्ती तु यः कालः स काललयनाल्लयः' इति च तत्रैव २।८ पद्यटिप्पणे।

२. वर्णो गानक्रिया 'गानक्रियोच्यते वर्णः' रा.। क्रिया च शिक्षा। तथा च च र. ३।२९, एवमेवार्थशास्त्रे कौटल्यः—क्रिया हि द्रव्यं विनयति नाद्रव्यं।

राजा—तूष्णीं भव यावदाकर्णयामि । (आकाशे गीयते)

अहिणव-महु-लोलुवो भवं तह परिचुंविअ चूअमंजरिं ।
कमलवसइमेत्तणिव्वुदो महुअर ! विम्हरिओ सि णं कहं ।।१।।

राजा—अहो रागपरिवाहिणी गीतिः ।

विदू०—किं दाव गीदीए अवगओ अक्खरत्थो ?
(किं तावत् गीतेरवगतः अक्षरार्थः ?)

राजा—(स्मितं कृत्वा) सकृत् कृतप्रणयोऽयं जनः । तस्याः देवीं वसुमती-मन्तरेण मदुपालम्भमवगतोऽस्मि । सखे ! माधव्य ? मद्-वचनादुच्यतां हंसपदिका 'निपुणमुपालब्धोऽस्मी'-ति ।

विदू०—जं भवं आणवेदि (उत्थाय) भो वअस्स ! गहीदस्स ताए परकीएहिं सिहण्णए ताडीअमाणस्स अच्छराए वीदराअस्स विअ णत्थि दाणिं मे मोक्खो । (यद् भवान् आज्ञापयति (उत्थाय) भो वयस्य ! गृहीतस्य तया परकीयैः हस्तैः शिखण्डके ताड्यमानस्य अप्सरसा वीतरागस्येव नास्ति इदानीं मे मोक्षः ।)

राजा—गच्छ नागरकवृत्त्या संज्ञापय एनाम् ।

---

—स्वसुःख०० संश्रितानाम् ।।६।। द्वितीयः—नियमयसि विमा०० जानानाम् ।।७।। राजा—(आकर्ण्य) आश्चर्यम् । एतेन कार्यानुशासन-परिश्रान्ताः पुनर्नवीकृताः स्मः । विदूषकः—भो गोविन्दारओ त्ति भणिदस्स रिसभस्स परिस्समो णस्सदि । राजा—ननु क्रियतामासन-परिग्रहः । (उभावुपविष्टौ परिजनश्च यथास्थानं स्थितः, नेपथ्ये वीणाशब्दः) विदूषकः—(कर्णं दत्वा) भो वअस्स सं०० कर्णं देहि । लय०० कर्णयामि (पृ० ४९५) । कञ्चुकी—(विलोक्य) अये अन्यासक्तचित्तो देवः । तदवसरं प्रतिपालयामि (एकान्ते स्थितः) (नेपथ्ये गीयते) अ०० कहं ।।८।। राजा—अहो०० गीतिः । विदू०—भो वअस्स०० देवीं हंसवतीमन्तरेण०० स्मीति०० गहिदो ताए सिहण्डए अच्छभत्तो । ता अवीदराअस्स००० शान्त्यैनाम्०० जन्मान्तर०० सौहृदानि ।।९।। (अस्मृतिनिमित्तमुन्म-नस्कत्वं रूपयति) कञ्चु०—(उपसृत्य) जयति जयति देवः । एते खलु०० प्रतीहारी—इदो इदो देवः (परिक्रम्य) भट्टा एसो अहिणवसंमज्जणरमणीओ००० देवो०० कण्वेन०० तपस्विनः०० मे मनः ।।१०।। प्रतीहारी—देवस्स भु असद्दणिव्वुदे असस्मे कुदो इदं ।—

विदू०—क्का गई ? । (का गतिः ? ।) (निष्क्रान्तः)

राजा—(आत्मगतम्) किं नु खलु [1]गीतमेवंविधमाकर्ण्य इष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथवा,—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥२॥

(पर्याकुलस्तिष्ठति)

(ततः प्रविशति कञ्चुकी)

कञ्चु०—अहो नु खल्वीदृशीमवस्थां प्रतिपन्नोऽस्मि ।

आचार इत्यवहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेर-वलम्बनार्था ॥३॥

भोः ! कामं धर्मकार्यमनतिपात्यं देवस्य, तथापीदानीमेव धर्मासनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदयितुम् । अथवा अविश्रमोऽयं लोकतन्त्राधिकारः । कुतः—

भानुः सकृद् युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः ॥४॥

यावन्नियोगमनुतिष्ठामि । (परिक्रम्यावलोक्य च) एष देवः—

---

—किं तु सुचरिदाहि०० तक्केमि (ततः प्रविशतो गौतमीसहितौ शकुन्तलामादाय कण्वशिष्यौ पुरतश्चैषां पुरोहितकञ्चुकिनौ) कञ्चु०—इत इतो भवन्तः । शार्ङ्गरवः—सखे शारद्वत ! महाभागः०० गृहमिव ॥११॥

---

१. गीतार्थमाक०

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवते[1]ऽशान्तमना विविक्तम् ।
यूथानि संचार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥५॥

(उपगम्य) जयतु जयतु देवः । एते खलु हिमगिरेरुपत्यकारण्य-वासिनः काश्यपसंदेशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः । श्रुत्वा देवः प्रमाणम् ।

राजा—(सादरम्) किं काश्यपसंदेशहारिणः ? ।

कञ्चु०—अथ किम् ? ।

राजा—तेन हि मद्वचनाद् विज्ञाप्यतामुपाध्यायः सोमरातः—अमूना-श्रमवासिनः, श्रौतेन विधिना सत्कृत्य, स्वयमेव प्रवेशयितुमर्हति—इति । अहमप्यत्र तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि ।

कञ्चु०—यदाज्ञापयति देवः । (निष्क्रान्तः)

रजा—(उत्थाय) वेत्रवति ! अग्निशरणमार्गमादेशय ।

प्रती०—इदो इदो देवो । (इत इतो देवः ।)

राजा—(परिक्रामति, अधिकारखेदं निरूप्य) सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः । राज्ञां तु चरितार्थता दुःखान्तरैव ।

औत्सुक्यमात्रमवसाययति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेनम् ।
नातिश्रमापनयनाय न[2] च श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥६॥

(नेपथ्ये वैतालिकौ)

विजयतां देवः ।

प्रथमः—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते [3]वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥७॥

---

१. ०ते शान्त०, ते श्रान्त०. २. यथा श्रमाय. ३. सृष्टिरे०

द्वितीयः—

नियमयसि [1]कुमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥८॥

राजा—[2]एते क्लान्तमनसः पुनर्नवीकृताः स्मः। (परिक्रामति)

प्रती०—एसो अहिणवसम्मज्जणसस्सिरीओ सण्णिहिदहोमधेणू अग्गि-
सरणालिंदो। आरुहदु देवो। (एषोऽभिनवसंमार्जनसश्रीकः
संनिहितहोमधेनुरग्निशरणालिन्दः। आरोहतु देवः।)

राजा—(आरुह्य परिजनांसावलम्बी तिष्ठति) वेत्रवति! किमुद्दिश्य भगवता
काश्यपेन मत्सकाशमृषयः प्रेषिताः स्युः?।

किं तावद् व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम्[3]।
आहोस्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा[4]-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥९॥

प्रती०—सुचरिदणंदिणो इसीओ देवं सभाजइदुं आअदेत्ति तक्केमि।
(सुचरितनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि।)

(ततः प्रविशन्ति गौतमीसहितौ शकुन्तलां पुरस्कृत्य
कण्वशिष्यौ पुरश्च कञ्चुकी पुरोहितश्च)

कञ्चु०—इत इतो भवन्तः। (शार्ङ्गरव-शारद्वतौ परस्परम्[5])

शार्ङ्ग०—शारद्वत!

महाभागः कामं नरपतिरभिन्नस्थितिरहो
न कश्चिद् वर्णानामपथमपकृष्टोऽपि भजते।
तथापीदं शश्वत् परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥१०॥

---

१. विमार्ग०.
२. (आकर्ण्य) आश्चर्यम्, एतेन कार्यानुशासनपरिश्रान्ताः पुन०।
३. रघु ५। आरम्भः। ४. कु ५।३४ ५. इयमस्मद्योजना।

शार०—[1]जाने भवान् पुरप्रवेशादित्थंभूत: संवृत्त: । अहमपि, —

अभ्यक्तमिव स्नात: शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगति[2]र्जनमिह सुखसङ्गिनमवैमि[3] ।।११।।

शकु०—(अनिमित्तं सूचयित्वा) अम्महे, किं मे वामेदरं णअणं विप्फुरदि ? । (अहो, किं मे वामेतरं नयनं विस्फुरति ? ।)

गौतमी—जादे ! पडिहदं अमंगलं । सुहाइं दे भत्तुकुलदेवदाओ वितरंदु ! (जाते ! प्रतिहतममङ्गलम् । सुखानि ते भर्तृकुलदेवता वितरन्तु ।) (परिक्रामति)

पुरो०—(राजानं निर्दिश्य) भो भोस्तपस्विन: ! असावत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो व: प्रतिपालयति । पश्यतैनम् ।

शार्ङ्ग०—[4]काममेतदभिनन्दनीयं तथापि वयमत्र मध्यस्था: । कुत:—

भवन्ति नम्रास्तरव: [5]फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो घना: ।
अनुद्धता: सत्पुरुषा: समृद्धिभि:
स्वभाव एवैष परोपकारिणाम् ।।१२।।

प्रती०—देव ! [6]पसण्णमुहवण्णा दीसंति । जाणामि विसद्धकज्जा इसीओ । (देव ! प्रसन्नमुखवर्णा दृश्यन्ते । जानामि विस्रब्धकार्या ऋषय: ।)

राजा—(शकुन्तलां दृष्ट्वा) अथात्रभवती,—

का स्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्येतपोधनानां किसलयमिव पाण्डुपत्राणाम् ।।१३।।

---

१. शार्ङ्गरव, स्थाने खलु पुरप्रवेशात्तवेदृश: संवेग: । अहमपि ।
२. ०र्जनमवश: संगिनमवैमि.
३. पुरोधा:—अत एव भवद्विधा महान्त: । शकुं—.
४. भो महाब्राह्मण ! काम०. नि.मा.सा.खि.च.
५. फलागमै: नि०
६. पसण्णमुहा सुत्थकप्पा विअ इसीओ दीसंति । राजा—अये, —कैयम.

प्रती०—देव[1] ! कुतूहलगब्भोपहिदो ण मे तक्को पसरदि । णं दंसणीआ उण से अकिदी लक्खीअदि । (देव ! कुतूहलगर्भोपहितो न मे तर्कः प्रसरति । ननु दर्शनीया पुनरस्या आकृतिर्लक्ष्यते ।)

राजा—([2]दोहदलक्षणं विभाव्य) भवतु, अनिर्वर्णनीयं परकलत्रम् ।

शकु०—(हस्तमुरसि कृत्वा, आत्मगतम्) हिअअ ! किं एव्वं वेवसि ? [3]अज्जउत्तस्स भाववंधं ओहारिअ धीरं दाव होहि । (हृदय ! किमेवं वेपसे ? । आर्यपुत्रस्य भावबन्धमवधार्य धीरं तावद् भव ।)

पुरो०—(पुरो गत्वा) एते विधिवदर्चितास्तपस्विनः । कश्चिदेषामुपाध्यायसंदेशः । तं देवः श्रोतुमर्हति ।

राजा—अवहितोऽस्मि ।

शिष्यौ–(हस्तानुद्यम्य) स्वस्ति भवते[4] ।

राजा—अभिवादये[5] वः ।

शिष्यौ–इष्टेन युज्यस्व ।

राजा—अपि [6]निर्विघ्नतपसो मुनयः ? ।

शिष्यौ— कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ?[7] ॥१४॥

राजा—(आत्मगतम्) [8]अर्थवान् खलु मे राजशब्दः । (प्रकाशम्) अथ भगवाँल्लोकानुग्रहाय कुशली काश्यपः ? ।

शिष्यौ—स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वकमिदमाह ।

राजा—किमाज्ञापयति भगवान् ? ।

शार्ङ्ग०—यन्मिथःसमयाद् इमां मदीयां दुहितरं भवानुपायंस्त, तन्मया प्रीतिमता युवनोरनुज्ञातम् । कुतः ?—

---

१. प्रती०–भट्टा, दंसणीआकिदी खु लक्खीअदि । २. इयमस्मद्योजया
३. भावाणुबंधं सुमरिअ धीरत्तणं दाव अवलंबसु.
४. ऋषयः विजयस्व राजन्. ५. सर्वानभि०
६. निर्विघ्नं तपः ?. ७. र. ५।१३. ८. सर्वथाऽर्थवान्०

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः[1]
शकुन्तला मूर्तिमती[2] च सत्क्रिया।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः[3] ॥१५॥

तदिदानीमापन्नसत्त्वा[4] प्रतिगृह्यतां सहधर्मचरणायेति।

गौत०—[5]भद्दमुह! किंपि वत्तुकाम म्हि। (भद्रमुख! किमपि वक्तुकामास्मि।)

राजा—आर्ये! कथ्यताम्।

गौत०—अहवा ण मे वअणावसरो अत्थि। जदो[6]
णावेक्खिओ गुरुअणो[7] इमाए ण तुमे वि पुच्छिआ वंधू।
एक्कक्कमेव्व चरिए भणामि किं एक्कमेक्कस्स ॥१६॥

(अथवा, न मे वचनावसरोऽस्ति। यतः—
नापेक्षितो गुरुजनोऽनया न त्वयापि पृष्टो बन्धुः।
एकैकस्मिन्नेव चरिते भणामि किमेकमेकस्य ॥)

शकु०—([8]आत्मगतम्) किं णु खु अज्जउत्तो भणादि?।
(किं नु खल्वार्यपुत्रो भणति?)

राजा—किमिदमुपन्यस्तम्?।

शकु०—(आत्मगतम्) हुं[9] सावलेवो से वअणावक्खेवो।
(हुं। सावलेपोऽस्य वचनोपक्षेपः)

शार्ङ्ग०—किं नाम किमिदमुपन्यस्तमिति।[10] ननु भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः।

---

१. कथंत्ति २. ०तीव. ३. र. ७।१४. ४. ०सत्त्वेयं गृह्यताम्
५. अज्ज किंपि वत्तु० ६. कधिदुं ति। राजा-आर्ये, कथ्यताम्। गौतमी-.
७. इमीअ ण हु पुच्छिदो अवंधुअणो। तुए पुच्छिदो ण वन्धुअणो च. एक्कक्क-मेण वरिए कीं भणउ एक्कमेक्कस्स. ८. (साशंकमाकुलमुपवर्ण्य)
९. पावओ खु वअणोवण्णासो। नि. मा. १०. ननु भवानेव ००निष्णातः।

सतीमपि [1]ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः ।।१७।।

राजा—किं ?[2] किमत्रभवती, मया परिणीतपूर्वा ? ।

शकु०—(सविषादम्; आत्मगतम्) हिअअ ! [3]संपदं दे आसंका ।
(हृदय ! सांप्रतं त आशङ्का ।)

शार्ङ्ग०—किं ? कृतकार्यद्वेषः ? धर्मं प्रति विमुखता ? कृतेऽवज्ञा[5] ?

राजा—कुतोऽयमसत्कल्पनाप्रसङ्गः[6] ? ।

शार्ङ्ग०—

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु[7] ।।१८।।

राजा—विशेषेणाधिक्षिप्तोऽस्मि ।

गौत०—जादे मुहुत्तअं मा लज्ज । अवणइस्सं दाव दे ओउंठणं ।
तदो तुमं भट्टा अहिजाणिस्सदि । (जाते ! मुहूर्तं मा लज्जस्व ।
अपनेष्यामि तावत् ते अवगुण्ठनम् । ततस्त्वां भर्ता अभिज्ञास्यति ।)

(यथोक्तं करोति)

राजा—(शकुन्तलां निर्वर्ण्य आत्मगतम्)

इदमुपनतमेवं रूपमक्लिष्टकान्ति,
प्रथमपरिगृहीतं स्यान्न वेत्यध्यवस्यन्[8] ।
भ्रमर इव [9]विभाते कुन्दमन्तस्तुषारं
न [10]च खलु परिभोक्तुं नापि शक्नोमि [11]मोक्तुम् ।।१९।।

प्रती०—(आत्मगतम्) अहो धम्मावेक्खिआ भट्टिणो । ईदिसं णाम सुहोवणदं
रूवं देक्खिअ को अण्णो विआरेदि ? (अहो धर्मापेक्षिता भर्तुः ।
ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति ? ।)

---

१. ज्ञातिः पिता. २. किं चात्र मा. नि. च. ३. संवुत्ता दे आसंका
४. राजन् किं कृतकार्यद्वेषाद् धर्मं प्रति विमुखतोचिता राज्ञः मा., अमीति
बहुत्वापेक्षया तु पाठ एषोऽश्रेष्ठः । ५. कृतावज्ञा सार्वत्रिकः पाठः ।
६. ०प्रश्नः ७. ०मत्तानाम् । ८. वेति व्यवस्यन्. ९. निशान्ते.
१०. न खलु सपदि भोक्तुं. ११. हातुम्—नि. मा.

शार्ङ्ग०–भो राजन् ! [1]किमिति जोषमास्यते ? ।

राजा—[2]भोस्तपोधनाः ! चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमाम् अभिव्यक्तसत्त्वलक्षणां प्रति आत्मानं [3]क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ? ।

शकु०—([4]आत्मगतम्) हद्धी हद्धी । कधं परिणए एव्व संदेहो । कुदो दाणिं मे दूराहिरोहिणी आसा ? । (हाधिक् हाधिक् । कथं परिणय एव संदेहः । कुत इदानीं मे दूराधिरोहिणी आशा ? ।)

शार्ङ्ग०–मा तावत्,—

[5]कृताभिमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।
[6]मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥२०॥

शार०—शार्ङ्गरव ! विरम त्वमिदानीम्; शकुन्तले! वक्तव्यम् उक्तमस्माभिः । सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रतिवचनम्[7] ।

शकु०—([8]आत्मगतम्) इमं अवत्थंतरं गदे तारिसे अणुराए किं वा सुमराविदेण ? । [9]अत्ता दाणिं मे सोअणीओ त्ति ववसिसं एदं । (प्रकाशम्) अज्जउत्त ! (अर्धोक्ते आत्मगतम्)[10] अहवा संसइदो दाणिं एसो णो समुदाहारो । (प्रकाशम्) पोरव ! ण जुत्तं णाम दे तह पुरा अस्समपदे [11]सहावुत्ताणहिअअं इमं जणं समअपुव्वं[12]प्पतारिअ ईदिसेहिं अक्खरेहिं पच्चाचक्खिदुं । (इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन ? । आत्मेदानीं मे शोचनीय इति व्यवसिप्याम्येतत् । (प्रकाशम्) आर्यपुत्र ! (अर्धोक्ते आत्मगतम्) अथवा संशयितः इदानीमेष नः समुदाहारः । (प्रकाशम्) पौरव ! न युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्य ईदृशैरक्षरैः प्रत्याख्यातुम् ।)

---

१. किमिदं. २. भोस्तपस्विन्. ३. क्षेत्रियमिव मन्यमानः, क्षेत्री बीजनिपेक्ता ।
४. (अपवार्य) अज्जस्स परिणए ज्जेव संदेहो । भग्गा०० आसालदा ।.
५. कृतावमर्शाम. ६. दुष्टं. ७. प्रत्ययप्रतिवचनम् नि. मा. च.
८. अपवार्य. ९. अप्पा दाणिं मे भोदु; ववसिस्सं.
१०. अधं वा संसइदो दाणिं एसो. ११. सब्भावुत्ताणहिअअं.
१२. संभाविअ संपदं ईदिसेहिं.

राजा—(कर्णौ पिधाय) शान्तं पापम् ।

व्यपदेशमाविलयितुं [1]समीहसे जनमिमं च पातयितुम् ?
कूलङ्कषेव सिन्धुः [2]प्रसन्नमम्भः, तटतरुं च ॥२१॥

शकु०—होदु; जइ परमत्थतो परपरिग्गहसंकिणा [3]तुए एव्वं वत्तं पउत्तं ता अहिण्णाणेण इमिणा तुह आसंकं अवणइस्सं । [भवतु; यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं वक्तुं प्रवृत्तं तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि ।)

राजा—[4]प्रथमः कल्पः ।

शकु०—(मुद्रास्थानं परामृश्य) हद्धी, अंगुली अअसुण्णा मे अंगुली । (हा धिक् अङ्गुलीयकशून्या मेऽङ्गुलिः ।) (सविषादं गौतमीवेक्षते)

गौत०—[5]णूणं दे सक्कावदारब्भंतरे सचीतित्थसलिलं वंदमाणाए पब्भट्टं अंगुलीअअं । (नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थे सलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।)

राजा—(सस्मितम्) इदं तत् प्रत्युत्पन्नमति [6]स्त्रैणमिति यदुच्यते ।

शकु०—एत्थ दाव विहिणा दंसिदं पहुत्तणं । अवरं दे [7]कहिस्सं । (अत्र तावद् विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि ।)

राजा—श्रोतव्यमिदानीं संवृत्तम् ।

शकु०—णं एक्कस्सिं दिअहे णोमालिआमंडवे णलिणीपत्तभाअणगअं उअअं तुह हत्थे संणिहिदं आसि । (ननु, एकस्मिन् दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं, तव हस्ते संनिहितमासीत् ।)

राजा—शृणुमस्तावत् ।

शकु०—तक्खणं सो मे पुत्तकिदओ दीहापंगो णाम मिअपोदओ उवट्ठिओ । तुए अअं दाव पढमं पिअउ त्ति अणुअंपिणा उवच्छंदिदो उअएण । ण उण दे अपरिचआदो हत्थब्भासं उवगदो ।

---

१. किमीहसे मां च पातयितुम्. २. प्रसन्नमोघं तट०.
३. तए एदं पउत्तं०० तुह संदेहं अवणइस्सं.
४. उदारः कल्पः । प्रथमशब्दार्थाय द्र. ४०९–पृष्ठगता ४–पादटि०.
५. णं दे सक्कावदारे सचीतित्थे उदअं वंदमाणाए गंगासोते०.
६. स्त्रीणाम् । शकु०—एत्थ. ७. कधइस्सं.

पच्छा तस्सिं एव्व मए गहिदे सलिले णेण किदो पणओ। तदा तुमं पहसिदो सि एत्थं—'सव्वो सगंधेसु[१] विस्ससिदि दुवे वि एत्थ आरण्णआ'—त्ति। (तत्क्षणे स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः। त्वयायं तावत् प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन। न पुनस्तेऽपरिचयाद् हस्ताभ्याशमुपगतः। पश्चात् तस्मिन्नेव मया गृहीते सलिले अनेन कृतः प्रणयः। तदा त्वमित्थं प्रहसितोऽसि—'सर्वः सगन्धेषु[१] विश्वसिति द्वावप्यत्रारण्यकौ' इति।)

राजा—एव[२]मादिभिरात्मकार्यनिर्वर्तिनीनाम् [३]अनृतवाङ्मधुभिराकृष्यन्ते विषयिणः।

गौत०—महाभाअ! ण[४] अरुहसि एव्वं मंतिदुं। तवोवणसंवड्ढिदो अणभिण्णो खु अअं जणो [५]कइदवस्स। (महाभाग! नार्हस्येवं मन्त्रयितुम्। तपोवनसंवर्धितः अनभिज्ञोऽयं जनः कैतवस्य।)

राजा—तापसवृद्धे!

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः।
प्रागन्तरिक्षगमनात् स्वमपत्यजात-
मन्यैर्[६] द्विजैः परभृताः खलु पोषयन्ति।।२२।।

शकु०—(सरोषम्) अणज्ज! अत्तणो हिअआणुमाणेण पेक्खसि। को दाणिं अण्णो धम्मकंचुअप्पवेसिणो तिणच्छण्णकूवोवमस्स तव अणुकिदिं पडिवदिस्सदि? (अनार्य! आत्मनो हृदयानुमानेन पश्यसि। क इदानीमन्यो धर्मकञ्चुकप्रवेशिनः तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते?)

राजा—(आत्मगतम्[७]) संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते। तथा ह्यनया,—

---

१. मे. ११९ २. आभिस्ताभिरात्म०

३. ०रनृतमयवा०, अमृतवाग्भिः. ४. णारिहसि. ५. केदवस्स.

६. अन्यद्विजैः। अत्र हि मेनकाव्यापारसमाधिरपि। तत्रान्ये द्विजाः शकुन्ताः तेभ्यः सद्योजाततत्यक्तां शकुन्तलामादाता कण्वपादश्च।

७. वनवासादविभ्रमः पुनरत्रभवत्याः कोपो लक्ष्यते—

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद् भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ।।२३।।

(प्रकाशम्) भद्रे ! प्रथितं दुष्यन्तस्य चरितम्[1] ।

शकु०—सुट्ठु दाव अत्त सच्छंदचारिणी किदम्हि, जा अहं इमस्स पुरुवंसप्पच्चएण मुहमहुओ [2]हिअअविसस्स हत्थब्भासं उवगदा । (सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि, याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयविषस्य हस्ताभ्याशमुपगता ।) (पटान्तेन मुखमावृत्य रोदिति ।)

शार्ङ्ग०— [3]इत्थमप्रतिहतं चापलं दहति ।

अतः [4]परीक्ष्य कर्तव्यं विशेषात् संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ।।२४।।

राजा—अयि भोः ! किमत्रभवतीप्रत्ययादेव अस्मान् [5]संवृतदोषाक्षरैरधिक्षिपथ ।

शार्ङ्ग०—(सासूयम्) श्रुतं भवद्भिरधरोत्तरम् ?

आ जन्मनः शाठ्यमशिक्षितो यः,
तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यैर्
विद्येति[6], ते सन्तु किलाप्तवाचः ।।२५।।

राजा—भोः सत्यवादिन् ! अभ्युपगतं तावदस्माभिरेवंविधा[7] एव वयम् । किं पुनरिमाम[8]तिसंधाय लभ्यते ? ।

---

—तथा हि—'न तिर्यगवलोकितं भवति चक्षुरालोहितं वचोऽपि परुषाक्षरं न च पदेषु संसज्जते । हिमार्त इव वेपते सकल एष बिम्बाधरः स्वभावविनते भ्रुवौ युगपदेव भेदं गते ।।' अथवा संदिग्ध०.

१. चरितम् । नापीदं दृश्यते, तथापीदं न लक्ष्ये-नि.

२. हिअअपत्थरस्स, हिअअट्ठिअविसस्स मा. नि. च. खि.

३. इत्थमात्मकृतमप्र० इत्थमात्मकृतं प्रतिहतं०. नि. खि. च.

४. समीक्ष्य ५. संभृतदोषाक्षरैरधिक्षिपथ मा. संवृतदोषाक्षरेण क्षिणुथ, संयुतदोषाक्षरैः क्षिणुथ नि. ६. द्र. अर्थशास्त्रस्यान्तिममधिकरणम्

७. ०भिरेवम् ८. ०मभि०

शार्ङ्ग०—विनिपातः ।

राजा—विनिपातः ? विनिपातः [1]पौरवैर्लभ्यत इति अश्रद्धेयमेतत् ।

शार०—[2]शार्ङ्गरव ! किमुत्तरेण ?। अनुष्ठितो गुरोर्निसंदेशः । प्रतिनिवर्तामहे वयम् । (राजानं प्रति)—

तदेषा भवतः [3]कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना[4] हिदारेषु प्रभुता सर्वतोमुखी ॥२६॥

गौतमि ! गच्छाग्रतः ।

(प्रस्थिताः)

शकु०—(शार्ङ्गरव-शारद्वतौ प्रति[5]) कहं इमिणा किदवेण विप्पलद्ध म्हि !। तुम्हे वि मं परिच्चअह ?। (कथमनेन कितवेन विप्रलब्धास्मि ?। युवमपि मां परित्यजथः ?।) (अनुप्रतिष्ठते)

गौत०—(स्थित्वा) वच्छ संगरव ! अणुगच्छदि इअं खु णो करुणपरिदेविणी सउंदला । [6]पच्चादेसपरुसे भत्तुणि, किं वा मे पुत्तिआ करेदु ?। (वत्स शार्ङ्गरव ! अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि, किं वा मे पुत्रिका करोतु ?।)

शार्ङ्ग०–(सरोषं निवृत्य) [7]किं पुरोभागे ! स्वातन्त्र्यमवलम्बसे ?

(शकुन्तला भीता वेपते)

शार्ङ्ग०–शकुन्तले !

यदि यथा वदति क्षितिपस्, तथा
त्वमसि, किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि, शुचि व्रतमात्मनः,
पतिकुले[8] तव दास्यमपि क्षमम् ॥२७॥

तिष्ठ; साधयामो [9]वयम् ।

---

१. पौरवैः प्रार्थ्यत इति न श्रद्धेयम् । अन्यानतिसन्धायाभ्युदयः, इमां पुनरतिसन्धाय विनिपात इत्यर्थः ।

२. भो राजन् किमत्रोत्तरोत्तरैः । अनुष्ठितो गुरोर्नियोगः । संप्रति निवर्त्तामहे वयम् । तदेषा० । ३. पत्नी. ४. उपयन्तुर्हि.

५. इदमस्माभिरयोजि ६. ०पिसुणे भत्तारे किं करेदु तवस्सिणी ।

७. आः पुरोभागिनी, किमिदं स्वातन्त्र्य०. ८. पतिगृहे.

९. र. ११।९१, नै. २।६२. अत्रैव ५४५ पा. टि.

राजा—भोस्तपस्विन् ! किमत्रभवतीं विप्रलभसे ? । पश्य—

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव[१] ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ।।२८।।

शार्ङ्ग०—[२]यदा तु पूर्ववृत्तमन्यसङ्गाद्, विस्मृतो भवान्, तदा कथमधर्म-भीरुः ? ।

राजा—(पुरोहितं प्रति) भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः[३] ।।२९।।

पुरो०—(विचार्य) [४]यदि तावदेवं क्रियताम् ।

राजा—अनुशास्तु [५]भवान् ।

पुरो०—अत्रभवती तावद् आप्रसवाद् अस्मद्गहे तिष्ठतु[६] ।

राजा—कुत इदम् ?

पुरो०—त्वं साधुनिमित्तकैरादिष्टः 'प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्य-सी'-ति । स चेन्मुनिदौहित्रः, तल्लक्षणोपपन्नो भविष्यति, [७]अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः [८]समीपनयनमवस्थितमेव ।

राजा—यथा गुरुभ्यो रोचते ।

पुरो०—वत्से ! अनुगच्छ[९]माम् ।

शकु०—भवअदि वसुहे! देहि मे [१०]विवरं (भगवति वसुधे ! देहि मे विवरम् ) ।

(रुदती प्रस्थिता, निष्क्रान्ता सह पुरोधसा तपस्विभिश्च)

(राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति)

(नेपथ्ये)

आश्चर्यम् ।

राजा—(आकर्ण्य) किं नु खलु स्यात् ? ।

---

१. र. ६।३६, ४४; वि ३।१६.
२. अथ पुनः पूर्ववृत्तं व्यासंगाद्विस्मृतं भवेत्तदा कथमधर्मभीरोर्दारपरित्यागः ।.
३. दारत्यागे लाघवं, गौरवं च परस्त्रीस्पर्शे इति भावः
४. यदि तावदेवं क्रियते ।
५. गुरुः । पा०पांसनः
६. कुत इदमुच्यत इति चेत् भवान् साधुभिरुद्दिष्टः प्रथममेवोभयचक्रवर्तिनं००
७. ततः प्रतिनन्द्य
८. समीपगमनमवस्थितमेव ।
९. इत इतोऽनुगच्छ
१०. अंदरं

(प्रविश्य)

पुरो०—(सविस्मयम्) देव ! अद्भुतं खलु संवृत्तम् !

राजा—किमिव ? ।

पुरो०—देव ! परावृत्तेषु कण्वशिष्येषु

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं [1]क्रन्दितुं च प्रवृत्ता।

राजा—किं च,

पुरो०—

स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-
[2]दुत्क्षिप्यैनां ज्योतिरेकं जगाम ॥३०॥

राजा—भगवन्[3] ! प्रागेव, सोऽस्माभिरर्थः प्रत्यादिष्ट एव । किं वृथा
तर्केणान्विष्यते ? । विश्राम्यतु भवान् ।

पुरो०—(विलोक्य) विजयस्व । (निष्क्रान्तः)

राजा—वेत्रवति ! [4]पर्याकुलोऽस्मि । शयनभूमिमार्गमादेशय ।

प्रती०—इदो इदो[5] देवो । (इत इतो देवः ।) (प्रस्थिता)

राजा—

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत् तु दूयमानं प्रत्याययतीव [6]मे हृदयम् ॥३१॥

(निष्क्रान्ताः सर्वे)

॥ इति [7]पञ्चमोऽङ्कः ॥

---

१. रोदितुं च. २. ०क्षिप्त्वैवाशु ज्योतिरेनां तिरोऽभूत् ॥
३. गुरो ! प्रथममेवास्माभिरर्थः स प्रत्यादिष्टः । किं मृषा तर्केणान्विष्यते, विश्रम्यताम् । ४. पर्याकुल इवास्मि । शयनीयगृह०
५. एदु ६. मां ७. शकुन्तलाप्रत्याख्यानं नाम०० ।

## ॥ [1]अथ मिश्रविष्कम्भकः ॥

[१]

(ततः प्रविशति नागरकः श्यालः पश्चाद्बद्धपुरुषमादाय रक्षिणौ च )

रक्षिणौ—(ताडयित्वा) [२]अले कुंभीलआ ! कहेहि कहिं तुए एशे [३]महालदणभाशुले उक्किण्ण-णामहेए लाअकीए अंगुलीअए [४]शमाशादिए? । (अरे कुम्भीलक! कथय कुत्र त्वयैतन्महारत्नभासुरम् उत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् ? ।)

पुरुषः—(भीतिनाटितकेन) पशीदंतु [५]भावमिश्शे । हगे णे[६] ईदिशकम्मकाली । (प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।)

प्रथमः—किं[७] सोहणे वम्हणेत्ति कलिअ रज्जा पडिग्गहे दिण्णे ? । (किं शोभनो ब्राह्मण इति कलयित्वा राज्ञा प्रतिग्रहो दत्तः ? ।)

पुरुषः—[८]सुणध दाणिं । हगे शक्कावदालब्भंतरालवाशी धीवले । (शृणुत इदानीम् । अहं शक्रावताराभ्यन्तरालवासी धीवरः ।)

द्विती०—पाडच्चला ! किं[९] अम्हेहिं जादी पुच्छिदा ? । (पाटच्चर ! किमस्माभिर्जातिः पृष्टा ? ।)

श्या०—[१०]सूअअ ! कहेदु शव्वं अणुक्कमेण । मा णं अंतरा पडिबंधह । (सूचक ! कथयतु सर्वमनुक्रमेण । मैनमन्तरे प्रतिबन्धय ।)

उभौ—जं आवुत्ते आणवेदि (धीवरं प्रति) कहेहि[११] । (यदावुत्त आज्ञापयति (धीवरं प्रति) कथय ।)

---

१. इयमस्मद्योजना । मा. पुनः 'अथ पञ्चमषष्ठाङ्कमध्ये प्रवेशक' इति.

२. हण्डे.

३. मणिबंधणुक्किण्ण-णामहेए.

४. शमाशादिदे.

५. भावमिश्शा.

६. ण हगे ईदिशश्श अकय्यश्श कालके.

७. किं णु खु शोहणे वम्हणे शित्ति कदुअ लञ्ञा.

८. शुणाध दाव । हगे खु शक्कावदालवाशी.

९. किं तुमं अस्मेहिं यादिं वशदिं पुश्चिदे.

१०. नागरकः—सूअअ॰॰सव्वं कमेण । मा णं पडिबंधेध.

११. लवेहि ले लवेहि.

पुरुषः—हगे[1] जालुग्गालादिहिं मच्छवंधणोवाएहिं कुडुंवभलणं कलेमि। (अहं जालोद्गालादिभिर् मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि।)

श्या०—(विहस्य) विसुद्ध दाणिं आजीवो। (विशुद्ध इदानीमाजीवः)

पुरुषः—भस्टके मा एव्वं भण। (भर्त्तः! मैवं भण)

शहए[2] किल[3] ये विणिंदिए ण हु से कम्म विवज्जणीअए[4]।
पशुमालणकम्मदालुणे अणुकंपामिदु जेव्व शोत्तिए[5] ॥१॥
(सहजं किल यद् विनिन्दितं न हि तत् कर्म विवर्जनीयकम्।
पशुमारणकर्मदारुणोऽप्यनुकम्पामृदुरेव श्रोत्रियः (वैदिकः) ॥)

श्या०—तदो तदो? । (ततस्ततः ? ।

पुरुषः—एक्कश्शिं दिअशे खंडशो लोहिअमच्छे मए कप्पिदे जाव, तश्श उदलब्भंतले एदं [6]लदणभाशुलं अंगुलीअअं पेस्कामि[7]। पच्छा अहके शे विक्कआअ दंशअंते गहिदे भावमिश्शेहिं। [8]मालेह वा मुंचेह वा। अअं शे आअमवुत्तंते। (एकस्मिन् दिवसे खण्डशो रोहितमत्स्यो मया कल्पितो यावत्, तस्योदराभ्यन्तर इदं रत्नभासुर-मङ्गुलीयकं पश्यामि। पश्चादहं तस्य विक्रयाय दर्शयन्, गृहीतो भावमिश्रैः। मारयत वा मुञ्चत वा। अयमस्यागमवृत्तान्तः।)

श्या०[9]–जाणुअ! विस्सगंधी गोहादी एसो मच्छवंधो एव्व णिस्संअअं। अंगुलीअअदंसणं शे विमरिसिदव्वं। राअउलं येव्व गच्छामो। (जानुक! विस्रगन्धी गोधादी एषः मत्स्यबन्ध एव निःसंशयम्। अङ्गुलीयक-दर्शनमस्य विमर्शयितव्यम्। [10]राजकुलमेव गच्छामः।)

---

१. शे हगे यालवडिशप्पहुदीहिं. २. शहए. ३. अ.
४. मनुः — वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः।
परधर्मेण जीवन् हि सद्यः पतति जातितः॥ (१०।९७) इति.
५. पशुमालि कलेदि दालुणं००मिदुले वि शोणिके।
६. महालदण० ७. देक्खिअ पच्छा इध.
८. एत्तिके दाव एदश्श आगमे। अधुणा मालेध वा कुस्टेध वा.
९. नागरिकः–(अङ्गुलीयकमाघ्राय) जाणुअ, मच्छोदरसंठिदं ति णत्थि संदेहो। तधा अअं से विस्सगंधो। आगमो दाणिं एदस्स विमरिसिदव्वो। ता एध। राअउलं जेव०. १०. राजनिवासदुर्गम् इत्यर्थः

रक्षि०—तह। गच्छ अले गंडभेदअ ! (तथा। गच्छ अरे गण्डभेदक ! ।)

(सर्वे परिक्रामन्ति)

श्या०—सूअअ ! इमं गोपुरदुआरे अप्पमत्ता पडिवालह जाव इमं अंगुलीअअं जहागमणं [1]भट्टिणो णिवेदिअ तदो सासणं पडिच्छिअ णिक्कयामि। (सूचक ! इमं गोपुरद्वारे अप्रमत्तौ प्रतिपालयतम्, यावदिदमङ्गुलीयकं यथागमनं भर्तुर्निवेद्य, ततः शासनं प्रतीष्य, निष्क्रामामि।)

उभौ—पविसदु आउत्ते शामिपशादश्श। (प्रविशत्वावुत्तः स्वामिप्रसादाय।)

(निष्क्रान्तः श्यालः)

सूच०—याणुअ ! चिलाअदि खु आवुत्ते। (जानुक ! चिरायते खल्वावुत्तः।)

जानु०—णं अवशलोवशप्पणीआ [2]लाआणो। (नन्ववसरोपसर्पणीया राजानः।)

सूच०—[3]याणुअ ! स्फुलंति मे अग्गहत्था (धीवरं निर्दिश्य) गठिश्चेदअश्श इमश्श वहशुमणा पिणद्धुं[4] (जानुक ! प्रस्फुरतो मम अग्रहस्तौ (धीवरं निर्दिश्य) अस्य ग्रन्थिच्छेदकस्य वधसुमनसः पिनद्धुम्।)

पुरु०—[5]ण अलुहदि भावे अकालण-मालणं भाविदुं।
(नार्हति भावः, अकारणमारणं भावयितुम्।)

जानु०—(विलोक्य) एशे [6]अम्हाणं शामी पत्तहत्थे लाअशाशणं पडिच्छिअ इदोमुहे देक्खीअदि। गिद्धवली भविश्शशि, शुणो मुहं वा पेक्खिश्शशि। (एष नः स्वामी पत्रहस्तो राजशासनं प्रतीष्य इतोमुखो दृश्यते। गृध्रबलिर्भविष्यसि, शुनो मुखं वा द्रक्ष्यसि।)

(प्रविश्य)

श्या०—सूअअ ! मुंचेदु एसो जालोअजीवी। उववण्णो खु अंगुलीअअस्स आअमो। (सूचक ! मुच्यतामेष जालोपजीवी। उपपन्नः खलु अङ्गुलीयकस्यागमः।)

---

१. राअउलं पविसिअ णिक्कमामि-।. २. लाआणो होंति।
३. याणुअ, स्फुलंति मे अग्गहत्था. ४. इमं गंठिश्चेदअं वावादेदुं।.
५. णालिहदि भावे अकालणमालके भविदुं।.
६. अस्माणं ईशले पत्ते गेण्हिअ लाअशाशणं। (धीवरं प्रति) ता शउलाणं मुहं पेस्कशि अथवा गिद्धशिआलाणं वली भविश्शशि।.

सूच०—जह आवुत्ते भणादि। (यथावुत्तो भणति।)

जानु०—एशे यमशदणं पविशिअ पडिणिवुत्ते। (एष यमसदनं प्रविश्य प्रतिनिवृत्तः।) ([1]पुरुषं परिमुक्तबन्धनं करोति)

पुरु०—(श्यालं प्रणम्य) [2]भस्टके! अह कहेअ कीलिशे मे आजीवे?। (भर्तः! अथ कथय कीदृशो मे आजीवः?।)

श्या०—एसो भट्टिणा[3] अंगुलीअअमुल्लसम्मिदो पसादो वि दाविदो। (एष भर्त्रा अङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः।)

(पुरुषाय स्वं प्रयच्छति)

पुरु०—(सप्रणामं प्रतिगृह्य) भस्टके! अणुग्गहीदे[4] म्हि। (भर्तः! अनुगृहीतोऽस्मि।)

सूच०—[5]एशे णाम अणुग्गहे जे शूलादो अवदालिअ हस्थिक्कंधे पडिट्ठाविदे। (एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः।)

[6]जानु०—आवुत्त! पलिदोशं कहेदि, तेण महालिह-लदणेण अगुलीअएण भट्टिणो शम्मदेण होदव्वं। (आवुत्त! परितोषः कथयति, महार्हरत्नेन तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यम्।)

श्या०—ण तस्सिं [7]महारुहं रदणं भट्टिणो वहुमदं त्ति तक्केमि। तस्स दंसणेण भट्टिणो अभिमदो जणो सुमराविदो। मुहुत्तअं पकिदि-गंभीरो वि पज्जुस्सुअणअणो आसि। (न तस्मिन् महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि[8]। तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः। मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकनयन आसीत्।)

सूच०—[9]शेविदो णाम भस्टा आवुत्तेण। (सेवितो नाम भर्त्ता आवुत्तेन।)

---

१. धीवरं. २. भस्टके, तव केलके मम यीविदे।.

३. पारिदोसिओ पसादीकिदो ता गेण्ह एदं।. ४. ०ग्गहीदे स्मि.

५. 'जानुकः—एशे सु लम्भा तधा णाम अणुग्गहीदे यं शूलादो ओदालिअ हस्तिस्कंधं शमालोविदे।'. हस्तिस्कन्धं त्रय एवारोहन्ति राजा, वरः, नगर-श्रेष्ठी चेतीतिहासविदः। धीवरो नगरश्रेष्ठी कृत इत्यत्राभिप्रायः।

६. सूचकः—लाउत्ते पालिदोशिए कधेदि महालिहलदणेण तेण अंगुलीएण.

७. महारिहरदणं तिण परिदोसो। एत्तिकं उण। उभौ—किं णाम। नागरकः—तक्केमि तस्स दंसणेण.

८. र. १६।७४, वि. ५।५. ९. तोशिदे दाणिं भस्टा लाउत्तेण।.

जानु०—णं भणाहि। इमश्श कए मच्छिआभत्तुणोत्ति। (ननु भण। अस्य कृते मात्स्यिकभर्तुरिति।) (पुरुषमसूयया पश्यति)

पुरु०[1]—भट्टालक! इदो अद्धं तुम्हाणं शुमणोमुल्लं होदु। (भट्टारक! इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु।)

जानु०—एत्तके जुज्जइ (एतावद् युज्यते।)

श्यालः—धीवर! महत्तरो तुमं पिअवअस्सओ दाणिं मे संवुत्तो। [2]कादंबरीसक्खिअं अम्हाणं पढमसोहिदं इच्छीअदि। ता सोंडिआपणं एव्व गच्छामो। (धीवर! महत्तरस्त्वं प्रियवयस्यकः इदानीं मे संवृत्तः। कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते। तच्छौण्डिकापणमेव गच्छामः।)

(निष्क्रान्ताः सर्वे)[3]

[२]

(ततः प्रविशत्याकाशयानेन सानुमती [4]नामाप्सराः)

[5]सानु०—णिव्वट्टिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसण्णिज्झं जाव साहुजणस्स अभिसेअकालो त्ति। संपदं इमस्स राएसिणो उदंतं पच्चक्खीकरिस्सं। मेणआसंबंधेण सरीरभूदा मे सउंदला। ताए अ दुहिदुणिमित्तं आदिट्ठपुव्व म्हि। (समन्तादवलोक्य) किं ण खु उदुच्छवे वि णिरुच्छवारंभं विअ राअउलं दीसइ। अत्थि मे विहवो पणिधाणेण सव्वं परिण्णादुं। किं दु सहीए आदरो मए माणइदव्वो। होदु, इमाणं एव्व उज्जाणिपालिआणं तिरक्खरिणीपडिच्छण्णा वस्सवत्तिणी भविअ उवलहिस्सं। (निर्वर्तितं मया पर्यायनिर्वर्तनीयम् अप्सरस्तीर्थसांनिध्यं

---

१. धीवरकः—भस्टका, ००तुस्माणं पि शुलामुल्लं. २. कादंबलिशक्खिके खु पढमं अस्माणं शोहिदे इच्छीअदि। ता शुंडिकागालं येव गच्छम्ह।

३. अत्रैव प्रवेशकरूपार्थोपक्षेपकसमाप्तिरिति मा. पि. नि. खि. च.—प्रभृतयः सर्वे। वयं पुनर्दुष्यन्तप्रवेशं यावत् सूच्यत्वस्याव्युच्छिन्नत्वात् तदवधिकत्वमत्र योजयामहे, मिश्रविष्कम्भकत्वं च, संस्कृतमिश्रितत्वात्। प्रवेशको मिश्रविष्कम्भकश्चेति द्वितीयमप्यत्र क्रमेण कृतस्थितिकमिति तु युक्तिहीनम्।

४-५. मिश्रकेशी. अप्सरःशब्द एकवचनान्तोऽपि.

यावत् साधुजनस्याभिषेककाल इति । सांप्रतमस्य राजर्षेरुदन्तं प्रत्यक्षी-करिष्यामि । मेनकासंबन्धेन शरीरभूता मे शकुन्तला । तया च दुहितृ-निमित्तमादिष्टपूर्वास्मि । (समन्तादवलोक्य) किं नु खलु ऋतूत्सवेऽपि निरुत्सवारम्भमिव राजकुलं दृश्यते । अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुम् । किं तु सख्या आदरो मया मानयितव्यः । भवतु, अनयोरेव उद्यानपालिकयोस्तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वा उपलप्स्ये ।)

(नाट्येनावतीर्य स्थिता)

(ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी, अपरा च पृष्ठतस्तस्याः)

प्रथमा—

आतम्महरिअपंडुर[1] जीविदसव्वं[2] वसंदमासस्स ।
दिट्ठो[3] सि चूअकोरअ ! उदुमंगल ! तुमं पसाएमि ।।२।।

(आताम्रहरितपाण्डुर जीवित-सर्वं वसन्तमासस्य ।
दृष्टोऽसि चूतकोरक ! ऋतुमङ्गल ! त्वां प्रसादयामि ।।)

द्वितीया—परहुदिए ! किं एआइणी मंतेसि ? । (परभृतिके ! किमेकाकिनी मन्त्रयसे ? ।)

पर०—महुअरिए[4] ! चूदकलिअं देक्खिअ उम्मत्तिआ परहुदिआ होदि । (मधुकरिके ! चूतकलिकां दृष्ट्वा उन्मत्ता परभृतिका भवति !)

मधु०—(सहर्षं त्वरयोपगम्य) कहं उवट्ठिदो महुमासो ? ।
(कथमुपस्थितो मधुमासः ? ।)

पर०—महुअरिए ! [5]तव दाणिं कालो एसो मदविब्भमगीदाणं ।
(मधुकरिके ! तवेदानीं काल एष मदविभ्रमगीतानाम् ।)

मधु०—सहि ! अवलंब मं जाव अग्गपादट्ठिआ [6]भविअ चूदकलिअं गेण्हिअ कामदेवच्चणं करेमि । (सखि ! अवलम्बस्व मां यावद-ग्रपादस्थिता भूत्वा चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि ।)

---

१. आअंबहरिअवेंटं ऊससिसं विअ वसंत० २. ०सत्तं
३. दिट्ठं चूअकरअं छणमंगलअं णिअच्छामि
४. सहि महुअरिए, चूदलदिअं००भोदि । ५. तुहावि.
६. भविअ इमिणा पसवेण संपादेमि कामदेवस्स वाअणं.

पर०—जइ मम वि खु अद्धं [१]अच्चणफलस्स ।
(यदि ममापि खलु अर्धमर्चनफलस्य ।)

मधु०—अकहिदे वि एदं संपज्जइ, जदो [२]एक्कं एव्व णो जीविदं, दुधा ट्ठिदं सरीरं । (सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति) अए, अप्पडिवुद्धो वि चूदप्पसवो एत्थ बंधणभंगसुरभी होदि ।
(कपोतहस्तकं [३]कृत्वा)

तुमं[४] सि मए चूदंकुर दिण्णो कामस्स गहीदचावस्स ।
पहिअजणजुवइलक्खो पंचब्भहिओ सरो होहि ।।३।।

(अकथितेऽप्येतत् संपद्यते । यतः एकमेव नो जीवितम्, द्विधा स्थितं शरीरम् । (सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति) अये, अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति) (कपोतहस्तकं[३] कृत्वा)

(त्वमसि मया चूताङ्कुर ! दत्तः कामाय गृहीतचापाय ।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव ।।)

(चूताङ्कुरं क्षिपति)

(प्रविश्यापटीक्षेपेण कुपितः)

कञ्चुकी—मा तावत् । अनात्मज्ञे ! [५]देवेन प्रतिषिद्धे वसन्तोत्सव त्व चूतकलिकाभङ्गम् आरभसे ?

उभे—(भीते) पसीददु अज्जो । अग्गहीदत्थाओ अम्हे[६] ।
(प्रसीदत्वार्यः । अग्रहीतार्थे आवाम् ।)

कञ्चु०—[७]हुं, न किल श्रुतं युवाभ्यां यद् वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिश्च । तथा हि,—

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः,
सन्नद्धं यदपि स्थितं कुरवकं तत्कोरकावस्थया ।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ।।४।।

---

१. वाअणफलस्स. २. एक्कं जेव णो एदं सरीरं.
३. 'कपोतोऽसौ करो यत्र श्लिष्टमूलाग्रपार्श्वकाः' रा.
४. 'अरिहसि मे चूअंकुर दिण्णो कामस्स गहिअचावस्स ।
सच्चविअजुअइलक्खो पंचब्भहिओ सरो होउं ।।'.
५. देवेनैवं निषिद्धेऽपि मधूत्सवे चूतकलिकाभङ्गमारभसे ।. ६. वअं.
७. हुं । न खलु श्रुतं भवतीभ्यां तावद्वासन्तैस्तरुभिरपि प्रमाणीकृतं देवस्य शासनं तदाश्रयिभिः पत्रिभिश्च ।.

उभे— णेत्थ संदेहो। महाप्पहाओ राएसी[1]।
(नात्र संदेहः। महाप्रभावो राजर्षिः।)

पर०—अज्ज! कदि दिअहाइं [2]अम्हाणं मित्तावसुणा रट्ठिएण भट्टिणीपाअमूलं पेसिदाणं? [3]दाणिं अ णो पमदवणस्स पालण-कम्म समप्पिदं। ता आअंतुअदाए अस्सुदपुव्वो अम्हेहिं एसो वुत्तंतो। (आर्य! कति दिवसानि आवयोर्मित्रावसुना राष्ट्रियेण भट्टिनी-पादमूलं प्रेषितयोः?। इदानीं च नौ प्रमदवनस्य पालनकर्म समर्पितम्। तत् आगन्तुकतया अश्रुतपूर्व आवाभ्यामेष वृत्तान्तः।)

कञ्चु०—[4]भवतु। पुनरेवं न प्रवर्तितव्यम्।

उभे— अज्ज! कोदूहलं णो। जइ इमिणा जणेण सोदव्वं कहेदु। अअं किंणिमित्तं भट्टिणा वसंतुस्सवो [5]पडिसिद्धो? (आर्य! कौतूहलं नौ। यद्यनेन श्रोतव्यं कथय, अयं किंनिमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः?)

सानु०—उस्सवप्पिआ खु [6]मणुस्सा। गुरुणा कारणेण होदव्वं। (उत्सवप्रियाः खलु मनुष्याः। गुरुणा कारणेन भवितव्यम्।)

कञ्चु०—[7]बहुलीभूतमेतत् किं न कथ्यते। किमत्रभवत्योः कर्णपथं नायातं शकुन्तलाप्रत्यादेशकौलीनम्?।

उभे०—सुदं रट्ठिअमुहादो जाव अंगुलीअदंसणं।
(श्रुतं राष्ट्रियमुखाद् यावदङ्गुलीयकदर्शनम्।),

कञ्चु०—(आत्मगतम्) तेन हि अल्पं कथयितव्यम्। (प्रकाशम्) यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन 'सत्यमूढपूर्वा [8]मे तत्रभवती रहसि शकुन्तला मोहात् प्रत्यादिष्टे'ति, [9]तदाप्रभृत्येव पश्चात्ता-पमुपगतो देवः। तथा हि,—

---

१. एत्थ संदेहो। महाप्पहावो खु एसो.
२. अम्हाणं इध पमदवणे चित्तकम्मं अप्पिदुं। अदो ण सुदपुव्वो.
३. एत्थं. ४. तेन हि पुनरेवं न. ५. णिसिद्धो.
६. राआणो होंति। ता गुरुणा. ७. (स्वगतम्) बहुलीभूतोऽप्यमर्थः किं न कथ्यते। (प्रकाशम्) अस्ति०० पथमागतं। र. १४।३६,३८.
८. रहसि मया. ९. तदैव. 'यदैव० ०तदाप्रभृत्येव'—कु. १।५३.

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्याप्रान्त[1]-विवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ।।५।।

सानु०—पिअं मे । (प्रियं मे ।)

कञ्चु०—अस्मात् प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः ।

उभे— जुज्जइ । (युज्यते ।)

(नेपथ्ये)

एदु एदु भवं । (एतु एतु भवान् ।)

कञ्चु०—(कर्णं दत्त्वा परिचारिके विलोक्य) अये ! इत एवाभिवर्तते देवः[2] । स्वकर्मानुष्ठीयताम् ।

उभे— तह । (तथा ।)

(निष्क्रान्ते)[3]

।। इति मिश्रविष्कम्भकः[4] ।।

---

१. शय्योपान्त०. २. तद् गच्छतम्. ३. (उभे निष्क्रान्ते).

४. इयमस्मत्कृतार्थसंघटना । विष्कम्भकत्वस्याहीनसंस्कृतोक्तिक-सूच्यवस्तुत्व-व्याप्यत्वात् तस्य च चतुर्थाङ्कारम्भ इवात्र यावदनुक्रान्तत्वादेषाऽस्माकं प्रतिपत्तिः । अन्ये पुनः सानुमतीप्रवेशावधिकत्वमेव सूच्यत्वेऽभिवीक्षमाणास्तत्रैव प्रवेशकसमाप्तिमुल्लिखन्ति । अस्मत्क्रमे द्राघीयस्त्वं दोष इति सत्यम्, तथापि लक्षणैकचक्षुष्का अत्र न ह्येव लभामहे मार्गान्तरमिति तत्राचार्या वा चोद्यास्तत्रभवान् कविरेव वा । अभिनयमिश्रत्वाभावं सूच्यतावच्छेदककोटौ निवेश्यापि न क्षेममुत्पश्यामः, चतुर्थाङ्कोपक्षेपकस्यासंग्रहप्रसक्तेः, अभिनयस्य उभयस्यापि समानत्वात् ।

# [1]अथ षष्ठोऽङ्कः

(ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च)

कञ्चु०—(राजानमवलोक्य) अहो सर्वास्ववस्थासु [2]रमणीयत्वमाकृति-विशेषाणाम् । [3]एवमुत्सुकोऽपि प्रियदर्शनो देवः । तथा हि,—

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं[4]
विभ्रत् काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः ।
चिन्ताजागरण[5]प्रताम्रनयनस्तेजोगुणैरात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥६॥

सानु०—(राजानं दृष्ट्वा) ठाणे खु पच्चादेसविमाणिदा वि इमस्स[6] किदे सउंदला किलम्मदि त्ति । (स्थाने खलु प्रत्यादेशविमानिताप्यस्य कृते शकुन्तला क्लाम्यतीति ।)

राजा—(ध्यानमन्दं परिक्रम्य)

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥७॥

सानु०—णं ईदिसाणि तवस्सिणीए भाअहेआणि ?
(नन्वीदृशानि तपस्विन्या भागधेयानि ?)

विदू०—(आत्मगतम्) लंघिदो [7]एसो भूओ वि सउंदलावाहिणा । ण आणे कहं चिकिच्छिदव्वो भविस्सदि त्ति । (लङ्घित एषः भूयोऽपि शकुन्तलाव्याधिना । न जाने कथं चिकित्सितव्यो भविष्यतीति ।)

कञ्चु०—(उपगम्य) [8]जयतु महाराजः । महाराज ! प्रत्यवेक्षिताः प्रमद-वनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि [9]महाराजः ।

---

१. इयमस्मत्कृता योजना २. रामणीयकम्
३. तथा ह्येयं वैमनस्यपरीतोऽपि प्रिय०
४. ०ष्ठार्पितं ५. ०प्रतान्त०० गुणादा०, द्र. माल. १।१२
६. कारणादो. ७. (स्वगतम्, अपवार्य) भूओ वि एसो सउंदलावादेण
८. जयति जयति महाराजः, देवः. ९. देवः.

राजा—वेत्रवति ! मद्वचना[1]दमात्यमार्यपिशुनं ब्रूहि । [2]चिरप्रबोधनान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत् प्रत्यवेक्षितं पौरकार्यमार्येण तत् [3]पत्रारूढं कृत्वा प्रस्थाप्यतामिति ।

प्रती०—जं देवो आणवेदि । (यद् देव आज्ञापयति) (निष्क्रान्ता)

राजा—[4]वातायन ! त्वमपि स्वं नियोगमशून्यं कुरु ।

कञ्चु०—[5]यदाज्ञापयति देवः । (निष्क्रान्तः)

विदू०—किदं भवदा णिम्मच्छिअं। संपदं [6]सिसिरातवच्छेअरमणीए इमस्सि पमदवणुद्देसे अत्ताणं रमइस्ससि । (कृतं भवता निर्मक्षिकम् । सांप्रतं शिशिरातपच्छेदरमणीये अस्मिन् प्रमदवनोद्देशे आत्मानं रमयिष्यसि ।)

राजा—वयस्य ! रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते [7]तदव्यभिचारि । कुतः

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः ।
मनसिजेन सखे ! प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ।।८।।[8]

विदू०—[9]चिट्ठ दाव; इमिणा दंडकट्ठेण कंदप्पवाणं णासइस्सं । (तिष्ठ तावत्; अनेन दण्डकाष्ठेन कन्दर्पबाणं नाशयिष्यामि ।)

(दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति)

---

१. ०दमात्यपिशुन. २. अद्य चिर०.
३. पत्रमारोप्य दीयतामिति नि. मा. च. खि. ४. पार्वतायन.
५. तथा. ६. सिसिरविच्छेदरमणीए इमस्सि उज्जाणे अत्ता०.
७. तदव्यभिचारि वचः नि. मा. च. खि. पश्य—.
८. अपि च—'उपहितस्मृतिरङ्गुलिमुद्रया प्रियतमाममनिमित्तनिराकृताम् ।
अनुशयादनुरोदिमि चोत्सुकः सुरभिमासमुखं समुपस्थितम् ।।'
९. भो वअस्स, चिट्ठ०० कंदप्पवाहि (व्याधिं) णासेमि.

राजा—(सस्मितम्) भवतु; दृष्टं ब्रह्मवर्चसम् । सखे ! [१]क्वोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि[२] ।

विदू०—[३]णं आसण्णपरिआरिआ चदुरिआ भवदा संदिट्ठा—माहवीमंडवे इमं वेलं अदिवाहिस्सं । तहिं मे चित्तफलअगदं सहत्थलिहिदं तत्तहोदीए सउंदलाए पडिकिदिं आणेहि त्ति । (ननु आसन्नपरिचारिका चतुरिका भवता संदिष्टा—माधवीमण्डपे इमां वेलामतिवाहयिष्ये । तत्र मे चित्रफलकगतां [४]स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः [५]प्रतिकृतिमानयेति ।)

राजा—[६]ईदृशं हृदयविनोदनस्थानम् । तत् तमेव मार्गमादेशय ।

विदू०—इदो इदो भवं । (इत इतो भवान् ।)

(उभौ परिक्रामतः, सानुमत्यनुगच्छति)

विदू०—एसो मणिसिलापट्टअसणाहो [७]माहवीमंडवो [८]उवहाररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिच्छदि । ता पविसिअ णिसीददु भवं । (एष मणिशिलापट्टकसनाथो माधवीमण्डपः उपहाररमणीयतया निःसंशयं स्वागतेनेव नौ प्रतीच्छति । तत् प्रविश्य निषीदतु भवान् ।)

(उभौ प्रवेशं कृत्वोपविष्टौ)

सानु०—लदासंस्सिदा पेक्खिस्सं दाव सहीए पडिकिदिं । तदो से भत्तुणो बहुमुहं अणुराअं णिवेदइस्सं । (लतासंश्रिता द्रक्ष्यामि तावत् सख्याः प्रतिकृतिम् । ततोऽस्या भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि ।)

(तथा कृत्वा स्थिता)

---

१. क्वेदानीमुप०० विनोदयामि.
२. र. ८।५९, १३।३२, कु० ५।१३, मे. २।४१, वि. ४।३८, ३९ श्लो.
३. णं भवदा०० लिविअरी मेधाविणी आविद्धा.
४. कु० ५।५८. ५. र. ८।९२, १८।५३.
६. ईदृशमेव मे हृदयप्रत्याश्वासनम् । तत्तदेवादेशय माधवीलतागृहम्.
७. माधवीलदामंडवो ८. उपहारो भूमिकुट्टिमे क्लृप्ता प्रसूनरचना र. ५।७४, कु. ६।४२

राजा—सखे ! सर्वमिदानीं स्मरामि शकुन्तलायाः [1]प्रथमवृत्तान्तम् । कथितवानस्मि भवते च । स भवान् [2]प्रत्यादेशवेलायां मत्समीपगतो[3] नासीत् । [4]पूर्वमपि न त्वया कदाचित् संकीर्तितं तत्रभवत्या नाम । कच्चिदहमिव विस्मृतवानसि त्वम् ?

विदू०—ण विसुमरामि । किंतु सव्वं कहिअ अवसाणे उण तुए परिहासविअप्पओ एसो, ण भूदत्थो त्ति आचक्खिदं । मए वि मिप्पिंडबुद्धिणा तह एव्व गहीदं । अहवा भविदव्वदा खु बलवदी । (न विस्मरामि । किंतु सर्वं कथयित्वा अवसाने पुनस्त्वया परिहासविजल्प एष, न भूतार्थ[5] इत्याख्यातम् । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता खलु बलवती ।)

सानु०—एव्वं णेदं । (एवं नन्वेतत् ।)

राजा—(ध्यात्वा) सखे ! [6]त्रायस्व माम् ।

विदू०—भो ! किं एदं ? अणुववण्णं खु ईदिसं तुइ । कदा वि सप्पुरिसा सोअपत्तप्पाणो ण होंति । णं पवादे वि[7] णिक्कंपा गिरीओ । (भोः ! किमेतत् ? अनुपपन्नं खल्वीदृशं त्वयि । कदापि सत्पुरुषाः शोकपात्रात्मानो[8] न भवन्ति । ननु प्रवातेऽपि निष्कम्पा गिरयः[9] ।)

राजा—वयस्य ! निराकरणविक्लवायाः प्रियायाः[10] समवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि,—

> इतः [11]प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता
> स्थिता [12]तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
> पुनर्दृष्टिं वाष्पप्रसरकलुषामर्पितवती
> मयि क्रूरे यत्, तत्, सविषमिव शल्यं दहति माम् ॥९॥

---

१. प्रथमदर्शन० २. प्रत्याख्यानकाले ३. ०गत एव नासीत्
४. प्रथममपि तत्रभवत्याः कीर्तितं नाम मया००त्वमपि । ५. र. १०।३३
६. परित्रायस्व ७. णिक्कंपा जेव गिरीओ
८. सोअवत्तव्वा–नि. च. खि. पि. । काटयवेमपाठं तु मा.वदाद्रियामहे.
९. र. २।३४, ८।९० १०. सख्यास्तामवस्था०
११. प्रत्यादेशात्–नि. च. मा. १२. मुहुस्तिष्ठे० नि. च. मा. खि.

सानु०—अम्महे[१], ईदिसी स्वकज्जपरदा। इमस्स संदावेण अहं रमामि।
(अहो, ईदृशी स्वकार्यपरता। अस्य संतापेनाहं रमे।)

विदू०—भो ! अत्थि मे तक्को—केण वि तत्तहोदी आआसचारिणा णीदे त्ति। (भोः! अस्ति मे तर्कः—केनापि तत्रभवती आकाशचारिणा नीतेति।)

राजा—[२]कः पतिदेवतामन्यः परामर्ष्टुमुत्सहेत[३] ? मेनका किल सख्यास्ते जन्मप्रतिष्ठेति[४] श्रुतवानस्मि। तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते।

सानु०—संमोहो खु विम्हअणिज्जो ण पडिवोहो।
(संमोहः खलु विस्मयनीयः, न प्रतिबोधः।)

विदू०—जइ एवं ता समस्ससदु भवं। अत्थि खु समाअमो तत्तहोदीए[५]।
(यद्येवम्, समाश्वसितु भवान् अस्ति खलु समागमः कालेन तत्रभवत्या।)

राजा—कथमिव ?।

विदू०—ण खु [६]मादापिदरा भत्तुविओअदुक्खिअं दुहिदरं चिरं [७]पेक्खिदुं पारेंति। (न खलु मातापितरौ भर्तृवियोगदुखितां दुहितरं चिरं द्रष्टुं पारयतः।)

राजा—वयस्य !

स्वप्नो नु, माया नु, मतिभ्रमो नु,
क्लृप्तं[८] नु तावत् फलमेव पुण्यम्।
असंनिवृत्त्यै तदतीतमेव[९]
मनोरथा नाम तटप्रपाताः[१०] ॥१०॥

---

१. इमस्स ईदिसी अकज्ज००संतावेदि। २ कः पतिव्रतां तामन्यः, र. १४।७४.
३. परिमार्ष्टुं-मा. ०मुत्सहते. ४. सखीजनादस्मि श्रुतवान्।०
५. जइ एव्वं अत्थि खु समाअमो कालेण नि. मा. च. खि. पिशेलपाठस्तु युक्तः.
६. मादा पिदा वाण भत्तविरहिदं चिरं दुहिदरं पेक्खिदुं पारेंदि। ७. पेक्खिदुं-नि.
८. क्लिष्टं नु तावत् फलमेव पुण्यम्—नि. च. खि. मा. सा.
क्लृप्तं नु ,, ,, पुण्यैः—पि. (क्लृप्तं व्यतीतम्।)
९. तदतीव मन्ये मनो००० प्रयातम्—पि.
तदतीतमेव मनोरथानामतटप्रपाताः—नि. मा.
तदतीतमेते ०००००००००ताः च. खि.
००००मनोरथा नाम तटप्रपाताः नि. सा.
१०. द्वितीये चरण एवकारस्य क्लृप्तमेवेत्यन्वयः।

विदू०—मा एव्वं; णं अंगुलीअअं एव्व णिदंसणं अवस्संभाविणो अचिंतणिज्जो समाअमो होदि त्ति। (मैवम्; नन्वङ्गुलीयकमेव निदर्शनम्, अवश्यंभाविनः अचिन्तनीयः समागमो भवतीति।)

राजा—(अङ्गुलीयकं विलोक्य) अये! इदं तावदसुलभस्थानभ्रंशि शोचनीयम्।

तव सुचरितमङ्गुलीय! नूनं
प्रतनु ममेव विभाव्यते फलेन।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥११॥

सानु०—जइ अण्णहत्थगदं भवे [1]सच्चं एव्व सोअणिज्जं भवे। (यदि अन्यहस्तगतं भवेत् सत्यमेव शोचनीयं भवेत्।)

विदू०—भो! इअं णाममुद्दा केण [2]उग्घादेण तत्तहोदीए [3]हत्थाब्भासं पाविदा?। (भोः! इयं नाममुद्रा केनोद्घातेन तत्रभवत्या हस्ताभ्याशं प्रापिता?)

सानु०—[4]मम विअ कोदूहलेण [5]आलाविदो एसो। (ममेव कौतूहलेनालापित एषः।)

राजा—[6]श्रूयताम्; स्वनगराय प्रस्थितं मां प्रिया [7]सबाष्पमाह—कियच्चिरेणार्यपुत्रः [8]प्रतिपत्तिं दास्यतीति।

विदू०—तदो तदो?। (ततस्ततः?।)

राजा—[9]पश्चादिमां मुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता,—

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय [10]यासि न यावदन्तम्।
तावत् प्रिये! [11]मदवरोधनिदेशवर्त्ती
नेता जनस्तव समीपमुपैष्यतीति ॥१२॥

[12]तच्च दारुणात्मना मया मोहान्नानुष्ठितम्।

---

१. सच्चं सोअणीअं भवे। सहि, दूरे वट्टसि। एआइणी जेव कण्णसुहाइं अणुभवामि पि. २. उवुग्घादेण पि. ३. हत्थसंसग्गं
४. मम वि ५. आआरिदो. ६. वयस्य, श्रूयताम्। यदा तपोवनात्स्वनगराय.
७. सवाष्पमिदमाह.
८. पुनरस्माकं स्मरिष्यतीति.
९. अथेमां नाममुद्रामंगुल्यां.
१०. गच्छसि यावदन्तम्. नि.
११. मदवरोधगृहप्रवेशं. नि.
१२. तच्च मोहाद्दारुणमनुष्ठितम्.

सानु०—रमणीओ खु अवही विहिणा विसंवादिदो ।
(रमणीयः खल्ववधिर् विधिना विसंवादितः ।)

विदू०—[1]कहं धीवलकप्पिअस्स लोहिअमच्छस्स उदलब्भंतले आसि ?
(कथं धीवरकल्पितस्य रोहितमत्स्यस्योदराभ्यन्तर आसीत् ?)

राजा—[2]शचीतीर्थं वन्दमानायाः[3] सख्यास्ते हस्ताद् गङ्गास्रोतसि परिभ्रष्टम् ।

विदू०—जुज्जइ । (युज्यते ।)

सानु०—अदो एव्व तवस्सिणीए सउंदलाए अधम्मभीरुणो[4] इमस्स राएसिणो परिणए [5]संदेहो आसि । अहवा, ईदिसो अणुराओ अहिण्णाणं अवेक्खदि । [6]कहं विअ एदं ? (अत एव तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये संदेह आसीत् । (aसविमर्शं) अथवा ईदृशोऽनुरागः अभिज्ञानमपेक्षते । (aसंवितर्कं) कथमिवैतत् ?)

राजा—[7]उपालप्स्ये तावदिदमङ्गुयकम् ।

विदू०—(आत्मगतम्[8]) गहीदो णेण पंथा उम्मत्तआणं । (सस्मितम्) अहं पि एदं दंडकट्ठं उवालहिस्सं कधं उजुअस्स मे कुडिलं तुमं सि त्ति । (कथं गृहीतोऽनेन पन्था उन्मत्तानाम् । (aप्रकाशं, सस्मितम्) अहमपि एतद् दण्डकाष्ठमुपालप्स्ये कथम् ऋजुकस्य मे कुटिलं त्वमसीति ।)

राजा—(अनाकर्णितनाटितकेन अङ्गुलीयकं विलोक्य) मुद्रिके !

कथं नु तं वन्धुरकोमलाङ्गुलिं
करं विहायासि निमग्नमम्भसि ?

अथवा

अचेतनं नाम गुणं न[9] लक्षये-
न्मयैव कस्मादवधीरिता प्रिया ॥१३॥

---

१. कधं रोहिदमच्छस्स मुहं वडिसं विअ एदं पविट्ठं आसि.
२. शचीतीर्थे सलिलं.
३. व्यास्तव सख्याः परिभ्रष्टम्.
४. ००भीरुणो राएसिणो.
५. संदेहो. अध वा
६. ता कधं विअ.
७. भवतु, उपालप्स्ये.
८. गहीदो००त्तआणं । राजा—(अना०००प्रिया । विदू०—नि.
९. न वीक्षते.
a. एता मम योजनाः

सानु०—सअं ज्जेव्व पडिवण्णो जं म्हि वत्तुकामा ।
(स्वयमेव प्रतिपन्नो यदस्मि वक्तुकामा)

विदू०—(आत्मगतम्) कहं बुभुक्खाए खादिव्वो म्हि ।
(कथं बुभुक्षया खादितव्योऽस्मि ।)

राजा—अकारणपरित्यागानुशय[1]दग्धहृदयस्तावदनुकम्प्यतामयं जन पुनर्दर्शनेन ।

(प्रविश्यापटीक्षेपेण [2]चित्रफलकहस्ता)

चतु०—इअं चित्तगदा भट्टिणी । (इयं चित्रगता भट्टिनी ।)
(चित्रफलकं दर्शयति)[3]

विदू०—(निर्वर्ण्य) साहु वअस्स ! । [4]महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो । क्खलदि विअ मे दिट्ठी णिण्णुण्णअप्पदेसेसु । (साधु वयस्य ! । मधुरावस्थानदर्शनीयो भावानुप्रवेशः । स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु ।)

सानु०—[5]अंमो, एसा राएसिणो णिउणदा । जाणे सही अग्गदो मे वट्टदि त्ति । (अहो, एषा राजर्षेर्निपुणता । जाने सखी अग्रतो मे वर्तत इति ।)

राजा—वयस्य !

यद् यत् साधु न चित्रे स्यात् क्रियते तत् तदन्यथा ।
तथापि तस्या लावण्यं रेखया[6] किंचिदन्वितम् ॥१४॥

---

१. ०तप्तहृदय नि.
२. 'अपटी काण्डपटिका प्रतिसीरा जवानिका तिरस्सरिणी' रा.
३. राजा-अहो, रूपमालेख्यस्य; दीर्घापाङ्गविसारिनेत्रयुगलं लीलाञ्चितभ्रूलतं
दन्तातःपरिकीर्णहासकिरणज्योत्स्नाभिषिक्ताधरम् ।
कर्कन्धूद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम् ॥' पि.
४. भावमहुरा रेहा । खलदि०००प्पदेसेसुं । किं बहुणा, सत्ताणुप्पवेससंकाए आलवणकोदूहलं मे जणेदि ।
५. अहो राएसिणो वत्तिआरेहाणिउणदा
६. रेखा शिरोनेत्रकरादीनामङ्गानां मेलने सति ।
कायस्थितिर्यतो नेत्रहरा रेखा प्रकीर्तिता ॥ रा.

सानु०—[1]सरिसं एदं पच्छादावगुरुणो सिणेहस्स अणवलेवस्स अ। (सदृशमेतत् पश्चात्तापगुरोः स्नेहस्य अनवलेपस्य च।)

विदू०—भो ! दाणिं[2] तिण्हिओ तत्तहोदीओ दीसंति। सव्वाओ अ दंसणीआओ। कदमा एत्थ तत्तहोदी सउंदला ?। (भोः ! इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते। सर्वाश्च दर्शनीयाः। कतमात्र तत्रभवती शकुन्तला ?।)

सानु०—[3]अणभिण्णो खु ईदिसस्स रूवस्स मोहदिट्ठी अअं जणो। (अनभिज्ञः खलु ईदृशस्य रूपस्य मोहदृष्टिरयं जनः।)

राजा—त्वं तावत् कतमां तर्कयसि ?।

विदू०—तक्केमि जा एसा सिढिलकेसबंधणुव्वंतकुसुमेण केसंतेण उब्भिण्णस्सेअविंदुणा वअणेण विसेसदो ओसरिआहिं वाहाहिं [4]अवसेअसिणिद्धतरुणपल्लवस्स चूअपाअवस्स पासे[5] ईसिपरिस्संता विअ आलिहिदा सा सउंदला। इदराओ सहीओ त्ति। (तर्कयामि यैषा शिथिलकेशबन्धनोद्वान्तकुसुमेन केशान्तेन, उद्भिन्नस्वेदविन्दुना वदनेन, विशेषतोऽपसृताभ्यां वाहुभ्याम्, अवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत् परिश्रान्तेव आलिखिता सा शकुन्तला, इतरे सख्याविति।)

राजा—निपुणो भवान्। अस्त्यत्र [6]मे भावचिह्नम्।

स्विन्ना[7]ङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः।
अश्रु च कपोलपतितं [8]दृश्यमिदं [9]वर्तिकोच्छ्वासात्॥१५॥

---

१. सरिसं पच्छा००सिणेहस्स। साक्षादिति ६।१६ पद्यमत्रैव प.

२. तिण्णि आइदीओ दीसंति।

३. अणहिण्णो एस तवस्सी सहीए रूवस्स। मोहचक्खुणो इअं ण गदा से पच्चक्खदं। ४. अवसेअसिणिद्धपल्लवं असोअलदिअं संसिदा सिढि.

५. वद्धसेदविंदुणा वअणेण विसेसणमिदसाहाहिं वाहालदिआहिं उससीदणीविणा वसणेण ईसिप्परिस्संता विअ आलिहिदा सा तत्तभोदी सउंतला सेसाओ सहीओ त्ति. ६. ममापि.

७. ०ङ्गुलीनिवेशाद्रेखाप्रान्तेपु दृश्यते मलिना। ८. लक्ष्यमिदं वर्णकोच्छ्वासात्.

९. वर्तिका चित्रपटे लेपविशेपः, 'पटलेपे पक्षिभेदे तूलिकायां च वर्तिका'. रा.

चतुरिके ! अर्धलिखितमेतद् विनोदस्थानम्[1] । गच्छ, वर्तिकां तावदानय ।

चतु०—अज्ज माढव्व ! अवलंब चित्तफलअं, जाव आअच्छामि ।
(आर्य माधव्य ! अवलम्बस्व चित्रफलकं, यावदागच्छामि ।)

राजा—अहमेवैतदवलम्बे । (यथोक्तं करोति)

(निष्क्रान्ता चेटी)

राजा—(निःश्वस्य) अहं हि,—

साक्षात् प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे! प्रणयवान् मृगतृष्णिकायाम् ।।१६।।

विदू०—(आत्मगतम्) एसो अत्तभवं णदिं अदिक्कमिअ मिअतिण्हिआं संकंतो । (प्रकाशम्) भो ! अवरं किं एत्थ आलिहिदव्वं[2] ? ।
(एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकां संक्रान्तः । (प्रकाशम्) भोः ! अपरं किमत्र आलेखितव्यम् ।)

सानु०—जो जो पदेशो सहीए मे अहिरूवो तं तं आलिहिदुकामो भवे ।
(यो यः प्रदेशः सख्या मे अभिरूपस्, तं तमालिखितुकामो भवेत् ।)

राजा—श्रूयताम्,—

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
[3]पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ।।१७।।

विदू०—(आत्मगतम्) [4]जह अहं पेक्खामि पूरिदव्वं णेण चित्तफलअं लंबकुच्चाणं तावसाणं कदंबेहिं । (यथाहं पश्यामि पूरयितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः ।)

---

१. ०स्थानस्माभिः तद्गच्छ वर्तिकास्तावदानय । चेटी—अज्ज००जाव गच्छामि.

२. विदू०—भो किं एत्थ अवरं आलिहिदव्वं । मिश्रकेशी—जो जो पिअसहीए अहिमदो पदेसो तं तं आलिहिदुकामो त्ति तक्केमि ।
राजा—सखे, श्रूयताम्—. ३. पादस्तामभितो निषण्णचमरो००पावनः.

४. जधा मंतेदि तधा तक्केमि पूरिदो अणेण चित्ताफलओ आइदीहिं कुच्चाणदाणं तावसाणं ति ।.

राजा—वयस्य ! अन्यच्च शकुन्तलायाः [1]प्रसाधनमभिप्रेतमस्माभिः ।

विदू०—किं विअ । (किमिव ? ।)

सानु०—[2]वणवासस्स सोउमारस्स अ जं सरिसं भविस्सदि ।
(वनवासस्य सौकुमार्यस्य च यत् सदृशं भविष्यति ।)

राजा—

कृतं न कर्णार्पितबन्धनं सखे !
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥१८॥

विदू०—भो ! किं णु तत्तहोदी [3]रत्तकुवलअपल्लवसोहिणा अग्गहत्थेण मुहं ओवारिअ चइदचइदा विअ ठिआ । (सावधानं निरूप्य) आ, एसो दासीएपुत्तो कुसुमरसपाडच्चरो तत्तहोदीए वअणं अहिलंघेदि [4]महुअरो । (भोः ! किं नु तत्रभवतां रक्तकुवलयपल्लव-शोभिना अग्रहस्तेन मुखमपवार्य चकितचकितेव स्थिता । (सावधानं निरूप्य) आः, एष दास्याः पुत्रः कुसुमरसपाटच्चरः तत्रभवत्या वदनमभिलङ्घति मधुकरः ।)

राजा—ननु वार्यतामेष धृष्टः ।

विदू०—[5]भवं एव्व अविणीदाणं सासिदा इमस्स वारणे पहविस्सदि ।
(भवानेव अविनीतानां शासिता अस्य वारणे प्रभविष्यति ।)

राजा—युज्यते । अयि भोः कुसुमलताप्रियातिथे! [6]किमत्र परिपतन-खेदमनुभवसि ?
एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति [7]मधुकरी न खलु [8]मधु त्वया विना पिबति[9]॥१९॥

---

१. प्रसाधनमभिप्रेतमत्रालिखितुं विस्मृतमस्माभिः ।.
२. कण्णआभावस्स विणअस्स अ सरिसं. ३. रत्तकुवलअसोहिणा.
४. घिट्ठमहुअरो००वअणकमलं अहिलसदि.
५. तुमं जेव अविणीदसासणे पहवसि. ६. किमितः. ७. भ्रमरी.
८. मधु त्वां विना पिबति. ९. कु. ३।५६.

सानु०—अज्ज [1]अभिजादं खु एसो वारिदो ।
(अद्य अभिजातं खल्वेष वारितः ।)

विदू०—पडिसिद्धा वि[2] वामा एसा जादी । (प्रतिपिद्धापि वामैषा जातिः ।)

राजा[3]-एवं भोः, न मे शासने तिष्ठसि ? । श्रूयतां तर्हि संप्रति,—

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं [4]स्पृशसि चेद् भ्रमर ! प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ।।२०।।

विदू०—[5]एव्वं तिक्खणदंडस्स किं ण भाइस्सदि ? । (प्रहस्य आत्मगतम्) एसो दाव उम्मत्तो । अहं पि एदस्स संगेण ईदिस[6]वअणो जेव्व संवुत्तो । (प्रकाशम्) भो ! चित्तं खु एदं । (एवं तीक्ष्णदण्डस्य किं न भेष्यति ? (प्रहस्य आत्मगतम्) । एष तावदुन्मत्तः । अहमप्येतस्य सङ्गेन ईदृशवचन एव संवृत्तः । (प्रकाशम्) भोः ! चित्रं खल्वेतत् ।)

राजा०—कथं चित्रम् ? ।

सानु०—अहं पि दाणिं अवगदत्था, किं उण [7]जहाचिंदिदाणुभावी एसो ।
(अहमपीदानीमवगतार्था, किं पुनर्यथाचिन्तितानुभाव्येषः ।)

राजा—वयस्य ! किमिदमनुष्ठितं पौरोभाग्यम्[8] ? ।

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ।।२१।।

(बाष्पं [9]विहरति)

---

१. अहिजादं खु वारिदो. २. ०सिद्धवामा खु एसा.
३. (सकोपम्) भोः. ४. दशसि.
५. भो एव्वं तिक्खदंडस्स दे कधंण.
६. इदिसो जेव्व पि. सा.,। ईदिसवण्णो विअ. नि. खि. च., ईदिसवअणो विअ. मा. राजा-कथं निवार्यमाणोऽपि स्थित एव । मिश्र०- धीरं पि जणं रसो विआरेदि । विदू०—भो, चित्तं खु एदं । राजा - कथं चित्रम् ।.
७. जधालिहिदाणुभावी. चिंदिआणुसारी ८. पौरोभाग्यं दोषदर्शित्वम् । 'दोषैकदृक्पुरोभागी' इत्यमरः रा. । ९. विसृजति ।

सानु०—पुव्वावरविरोही अपुव्वो एसो [1]विरहमग्गो। (पूर्वापरविरोधी अपूर्व एष विरहमार्गः।)

राजा—वयस्य! [2]कथमेवमविश्रान्तदुःखमनुभवामि?।

प्रजागरात् खिलीभूतस्तस्याः [3]स्वप्ने समागमः।
वाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥२२॥

सानु०—[4]सव्वहा पमज्जिदं तुए पच्चादेसदुक्खं सउंदलाए। (सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः।)

(प्रविश्य चतुरिका)

चतु०—जेदु जेदु भट्टा। वट्टिआकरंडअं गेण्हिअ [5]इदोमुहं पत्थिद म्हि। (जयतु जयतु भर्ता। वर्तिकाकरण्डकं गृहीत्वा इतोमुखं प्रस्थितास्मि।

राजा—किं[6] च?।

चतु०—सो मे हत्थादो अंतरा [7]तरलिआदुदीआए देवीए वसुमदीए अहं एव्व अज्जउत्तस्स उवणइस्सं त्ति सवलक्कारं गहीदो। (तत् मे हस्ताद् अन्तरा तरलिकाद्वितीयया देव्या वसुमत्या अहमेव आर्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः।)

विदू०—दिट्ठिआ [8]तुमं मुक्का। (दिष्ट्या त्वं मुक्ता।)

चतु०—जाव देवीए [9]विडवलग्गं उत्तरीअं तरलिआ मोचेदि ताव मए णिव्वाहिदो अत्ता। (यावद्देव्या विटपलग्नमुत्तरीयं तरलिका मोचयति तावन्मया निर्वाहित आत्मा।)

राजा—वयस्य! उपस्थिता देवी बहुमानगर्विता च। भवानिमां प्रतिकृतिं रक्षतु।

---

१. विहिणो मग्गो. २. कथमविश्रामं दुःख०.

३. स्वप्नसमागमः द्र. मे. २।२२, वि. २।१०.

४. वअस्स संमज्जिदं तए०० पिअसहीए सउंतलाए पच्चक्खं जेव सहीअणस्स।

५. इदो अहं. ६. किं ततः. ७. पिंगलिआदुदिआए देवीए.

८. तुमं कधं विमुक्का।

९. लदाविडवलग्गं देवीए परिचारिआ अंचलं ताव णिण्हुविदो मए अप्पा। (नेपथ्ये) एदु एदु भट्टिणी। विदू०—(कर्णं दत्त्वा) भो, अहिधावंती एसा अंतेउरवग्घी मेधाविणि मइं विअ कवलिदुं उवत्थिदा।

विदू०—अत्ताणं[1] त्ति भणाहि। (चित्रफलकमादायोत्थाय च) जइ भवं [2]अंतेउरवाउरादो मुंचीअदि तदो मं मेहप्पडिच्छंदे[3] प्पासादे सद्दावेहि। (आत्मानमिति भण। (चित्रफलकमादायोत्थाय च) यदि भवानन्तःपुरवागुरातो मोक्ष्यते तदा मां मेघप्रतिच्छन्दे प्रासादे शब्दापय।) (द्रुतपदं निष्क्रान्तः)

सानु०—अण्णसंकंतहिअओ वि पढमसंभावणं [4]अवेक्खदि सिढिलसोहदो दाणिं एसो। (अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनामपेक्षते शिथिल-सौहृद इदानीमेषः।)

(प्रविश्य पत्रहस्ता)

प्रती०—जेदु जेदु देवो। (जयतु जयतु देवः।)

राजा—वेत्रवति! न खल्वन्तरे दृष्टा त्वया देवी।

प्रती०—देव दिट्ठा। पत्तहत्थं मं पेक्खिअ उण पडिणिउत्ता। (देव दृष्टा! पत्रहस्तां मां प्रेक्ष्य पुनः प्रतिनिवृत्ता।)

राजा—कार्यज्ञा कार्योपरोधं मे परिहरति।

प्रती०—देव! अमच्चो विण्णवेदि—[5]अत्थजादस्स गणणाबहुलदाए एक्कं एव्व पोरकज्जं अवेक्खिदं, तं देवो पत्तारूढं पच्चक्खीकरेदु—त्ति। (देव! अमात्यो विज्ञापयति—अर्थजातस्य गणनाबहुलतया एकमेव पौरकार्यमवेक्षितम्, तद् देवः पत्रारूढं प्रत्यक्षीकरोतु—इति।)

राजा—इतः पत्रं दर्शय।

(प्रतीहार्युपनयति)

राजा—(अनुवाच्य) कथम्?। [6]समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः। अनपत्यश्च किल तपस्वी। 'राजगामी

---

१. ०णअं पि किं ति ण भणसि २. अंतेउरकालकूडादो मुच्चिस्सदि

३. मेहच्छण्णप्पासादे सद्दावेसि। एदं च तहिं गोवेमि जहिं पारावदं उज्झिअ ण को वि अण्णो पेक्खदि। ४. रक्खदि थिरसोहिदो दाव एसो।

५. विदितमस्तु देवपादानाम्। ६. धनवृद्धिनामा वणिग् वारिपथोपजीवी नौव्यसनेन०० तस्यानेककोटिसंख्यं वसु। तदिदानीं राजार्थतामापद्यते। इति श्रुत्वा देवः प्रमाणमिति। ०००पत्यता.

तस्यार्थसंचयः' इत्येतदमात्येन लिखितम्। (सविषादं) कष्टं खल्वनपत्यता। बहुधनत्वाद् बहुपत्नीकेन तत्रभवता भवितव्यम्। विचार्यतां यदि काचिदापन्नसत्त्वा तस्य भार्यासु स्यात्।

प्रती०—देव ! दाणिं एव्व साकेदअस्स सेट्ठिणो दुहिआ णिव्वुत्तपुंसवणा जाआ से सुणीअदि। (देव ! इदानीमेव साकेतकस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायाऽस्य श्रूयते।)

राजा—ननु गर्भः पित्र्यं [1]रिक्थमर्हति। गच्छ एवममात्यं ब्रूहि।

प्रती०—जं देवो आणवेदि। (यद्देव आज्ञापयति।) (प्रस्थिता)

राजा—एहि तावत्।

प्रती०—इअम्हि। (इयमस्मि।)

राजा—किमनेन संततिरस्ति नास्तीति।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्यन्त इति घुष्यताम्॥२३॥

प्रती०—एव्वं णाम घोसइदव्वं। (निष्क्रम्य, पुनः प्रविश्य) काले पवुट्ठं विअ अहिणंदिदं देवस्स सासणं महाजणेण। (एवं नाम घोषयितव्यम्। (निष्क्रम्य, पुनः प्रविश्य) काले प्रवृष्टमिव अभिनन्दितं देवस्य शासनं महाजनेन।)

राजा—(दीर्घमुष्णं च निःश्वस्य) एवं भोः, संततिच्छेदनिरवलम्बा[2] मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति। ममाप्यन्ते पुरुवंशश्री-रेवंवृत्ता।

प्रती०—पडिहदं अमंगलं। (प्रतिहतममङ्गलम्।)

राजा—धिङ् माम् उपस्थितश्रेयोवमानिनम्।

सानु०—असंसअं सहिं एव्व हिअए करिअ णिंदिदो णेण अप्पा। (असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा।)

---

१. ऋक्थम्

२. ०निरवलम्बानां कुलानां मूल००न्ति। ००पुरुवंश—श्रीरकाल इवोप्तबीजा भूरेवंवृत्ता नि. मा.। निरवलम्बना००००न्तै००पुरुपवंशश्रिय एप वृत्तान्तः-सा. खि. पि. च.

राजा—

संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तबीजा ॥२४॥

सानु०—अपरिच्छिण्णा दाणिं दे संददी भविस्सदि । (अपरिच्छिन्नेदानीं ते संततिर्भविष्यति ।)

चतु०—(जनान्तिकम्) अए ! इमिणा सत्थवाहवुत्तंतेण दुउणुव्वेओ भट्टा । णं अस्सासिदुं [1]मेहप्पडिच्छंदादो अज्जं माढव्वं गेण्हिअ आअच्छामि । (अयि ! अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दाद् आर्यं माधव्यं गृहीत्वा आगच्छामि ।)

प्रती०—सुट्ठु भणसि । (सुष्ठु भणसि) (निष्क्रान्ता)

राजा—अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः । कुतः

अस्मात् परं वत यथाश्रुति[2] संभृतानि
को नः कुले निवपनानि [3]नियच्छतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुसेकमुदकं[4] पितरः पिबन्ति ॥२५॥

(मोहमुपगतः)

चतु०—(ससंभ्रममवलोक्य) समस्ससदु भट्टा । (समाश्वसितु भर्ता ।)

सानु०—हद्धी हद्धी । सदि खु दीवे ववधाणदोसेण एसो अंधआरदोसं अणहोदि[5] । अहं दाणिं एव्व णिव्वुदं करेमि । अहवा सुदं मए

---

१. मेहच्छण्णावट्ठिदं संतावणिव्वावइत्तअं. २. यथास्मृति.

३. करिष्यतीति. ४. धौताश्रुशेषमुदकं. नि., र. १।६७

५. अणुभवदि राएसी. चेटी—भट्टा, अलं संदाविदेण । वअत्थो ज्जेव पहू अवरासुं देवीसुं अणुरूवपुत्तजम्मेण पुव्वपुरिसाणं अरिणो भविस्सदि (आत्मगतम् ।) ण मे वअणं पडिच्छदि भट्टा । अध वा अणुरूवं जेव ओसधं आदंकं णिअत्तेदि । राजा-(शोकनाटितकेन) सर्वथा-'आमूलशुद्धसन्तति कुलमेतत् पौरवं प्रजावन्ध्ये । मय्यस्तमितमनार्ये देश इव सरस्वतीस्रोतः ॥'-

सउंदलं समस्ससअंतीए महेंदजणणीए मुहादो जण्णभाओस्सुआ देवा एव्व तह अणुचिट्ठिस्संति जह अइरेण धम्मपदिणिं भट्टा अहिणंदिस्सदि त्ति। ता णणु जुत्तं कालं पडिपालिदुं। जाव इमिणा वुत्तंतेण पिअसहिं समस्सासेमि। (हा धिक् हा धिक्। सति खलु दीपे व्यवधानदोषेणैष: अन्धकारदोषमनुभवति। अहमिदानीमेनं निर्वृतं करोमि। अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखाद् यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथा अचिरेण धर्मपत्नीं भर्ता अभिनन्दिष्यतीति। तन्ननु युक्तं कालं प्रतिपालयितुम्। यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि।) (उद्भ्रान्तकेन निष्क्रान्ता)

(नेपथ्ये)

अव्वम्हण्णं। (अब्रह्मण्यम्।)

राजा—(प्रत्यागतचेतनः कर्णं दत्त्वा) अये, माधव्यस्येवार्तस्वरः। कः कोऽत्र भोः?।

---

—(मोहमुपगतः) चेटी–(ससंभ्रमम्) समस्ससदु समस्सदु भट्टा। मिश्र०–किं इदाणिं जेव०० सेमि (नेपथ्ये) भो अव्वम्हण्णं अव्वम्हण्णं। राजा—(प्रत्यागतचेतनः कर्णं दत्त्वा) अये माधव्यस्येवार्त्तनादः। चेटी—भट्टा, मा णाम सो माधव्वतवस्सी पिंगलिआमिस्सिआहिं चित्तफलअहत्थो पाविदो पविस्सदि। राजा—चतुरिके, गच्छ मद्वचनादनिषिद्धपरिजनां देवीमुपालभस्व। चेटी—जं देवो आणवेदि। (निष्क्रान्ता) (नेपथ्ये) अव्वम्हण्णं अव्वम्हण्णं राजा—परमार्थतो भीतिभिन्नस्वरो ब्राह्मणः। कः कोऽत्र भोः (प्रविश्य) कञ्चुकी—आज्ञापयतु देवः। राजा—निरूप्यतां किमेवं माधव्यमाणवकः क्रन्दतीति। कंचु०—यावदालोकयामि। (निष्क्रम्य ससंभ्रमः पुनः प्रविष्टः) राजा—पार्वतायन, न खलु किंचिदत्याहितम्। कंचु०—एवम्। राजा—तत्कुतोऽयं वेपथुः। तथा हि–'प्रागेव जरसा कम्पः स विशेषेण संप्रति। आविष्करोति सर्वाङ्गमश्वत्थमिव मारुतः॥' कंचु०—परित्रायतां सुहृदं महाराजः। राजा—कस्मात् परित्रातव्यः। कंचु०—महतः कृच्छ्रात्। राजा—अयि, भिन्नार्थमभिधीयताम्। कंचु०—योऽसौ दिगवलोकनप्रासादो मेघच्छन्नो नाम। राजा—किं तत्र। कंचु०—'तस्याग्रभागाद् गृहनीलकण्ठैरनेकविश्रामविलङ्घ्यशृङ्गात्। सखा प्रकाशेतरमूर्तिना ते केनापि सत्त्वेन निगृह्य नीतः॥' राजा०० ममापि००.।

(प्रविश्य)

प्रती० —(ससंभ्रमम्) परित्ताअदु देवो संसअगदं वअस्सं। (परित्रायतां देवः संशयगतं वयस्यम्।)

राजा—केनात्तगन्धो माणवकः?।

प्रती०—अदिट्ठरूवेण केण वि सत्तेण अदिक्कमिअ मेहप्पडिच्छंदस्स प्पासादस्स अग्गभूमिं आरोविदो। (अदृष्टरूपेण केनापि सत्त्वेनातिक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः।)

राजा—(उत्थाय) मा तावत्। ममापि सत्त्वैरभिभूयन्ते गृहाः। अथवा,—

अहन्यहन्यात्मन एव ताव-
ज्ज्ञातुं प्रमादस्खलितं न शक्यम्।
प्रजासु कः केन पथा प्रयाती-
[1]त्यशेषतः को नु विदाङ्करोतु ॥२६॥

(नेपथ्ये)

भो वअस्स! अविहा अविहा। (भो वयस्य! अविहा अविहा।)

राजा—(गतिभेदेन परिक्रामन्) सखे! न भेतव्यं न भेतव्यम्।

(नेपथ्ये)

(पुनस्तदेव पठित्वा) कहं ण भाइस्सं?। एस मं को वि [2]पच्चवणदसिरोहरं यिच्छुं विअ तिण्णभंगं करेदि। (कथं न भेष्यामि?। एष मां कोऽपि प्रत्यवनतशिरोधरम् इक्षुमिव त्रिभङ्गं करोति।)

राजा—(सदृष्टिक्षेपम्) धनुस्तावत्।

यव०—भट्टा! एदं [3]हत्थावावसहिदं सरासणं। (भर्तः! एतद् [4]हस्तावापसहितं शरासनम्।)

(राजा सशरं धनुरादत्ते)

---

१. ०त्यशेषतः कस्य पुनः प्रभुत्वम्. पि. वेदितुमस्ति शक्तिः. नि.सा.च.खि.मा.

२. पच्छामोडिअ सिरोधरं इक्खुं विअ भग्गगंठि इच्छदि।.

३. ससरं सरासणं हत्थावाओ अ.

४. द्र. वि. ५।३-४ हस्तावापः

(नेपथ्ये)

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।
आर्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम् ।।२७।।

राजा—(सरोषम्) कथं मामेवोद्दिशति ?। तिष्ठ कुणपाशन ! त्वमिदानीं न भवसि। (शार्ङ्गमारोप्य) [1]वेत्रवति ! सोपानमार्गमादेशय।

प्रती०—इदो इदो देवो। (इत इतो देवः।)

(सर्वे सत्वरमुपसर्पन्ति)

राजा—(समन्ताद् विलोक्य) शून्यं खल्विदम्।

( नेपथ्ये )

[2]अविहा अविहा। अहं अत्तभवंतं पेक्खामि। तुमं मं ण पेक्खसि ?। [3]विडालग्गहीदो मूसओ विअ णिरासो म्हि जीविदे संवुत्तो। (अविहा अविहा। अहमत्रभवन्तं पश्यामि। त्वं मां न पश्यसि ?। विडालगृहीतो मूषक इव निराशोऽस्मि जीविते संवृत्तः।)

राजा—भोस्तिरस्करिणीगर्वित ! मदीयं शस्त्रं त्वां [4]द्रक्ष्यति। एष तमिषुं संदधे,—

यो हनिष्यति वध्यं त्वां रक्ष्यं [5]रक्षिष्यति द्विजम्।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ।।२८।।

(अस्त्रं संधत्ते)

(ततः प्रविशति विदूषकमुत्सृज्य मातलिः)

मात०—राजन् !

---

१. पार्वतायन०० २. परित्ताहि, परित्ताहि.
३. मज्जारगहिदो विअ उंदुरो णिरासो. ४. न पश्यति.
५. रक्षति च नि.

कृताः शरव्यं हरिणा तवासुराः,
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ।।२९।।

राजा—(ससंभ्रममस्त्रमुपसंहरन्) अये, मातलिः । स्वागतं महेन्द्रसारथे[1] ! ।

(प्रविश्य)

विदू०—[2]अहं जेण इट्ठिपसुमारं मारिदो सो इमिणा साअदेण अहिणं-
दीअदि । (अहं येन इष्टिपशुमारं मारितः सोऽनेन स्वागतेनाभिनन्द्यते ।)

मात०—(सस्मितम्) आयुष्मन् ! श्रूयतां यदर्थमस्मि हरिणा भवत्सकाशं
प्रेषितः ।

राजा—अवहितोऽस्मि ।

मात०—अस्ति । कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः ।

राजा—अस्ति । श्रुतपूर्वं मया नारदात् ।

मातलिः—

सख्युस्ते स किल शतक्रतोरवध्यः[3]
तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्तिः
तन् नैशं तिमिरमपाकरोति चन्द्रः ।।३०।।

स भवानात्तशस्त्र एव इदानीम् । [4]तत् ऐन्द्ररथमारुह्य विजयाय
प्रतिष्ठताम् ।

राजा—[5]अनुगृहीतोऽहमनया मघवतः संभावनया । अथ माधव्यं प्रति
भवता किमेवं प्रयुक्तम् ? ।

---

१. देवराजसारथे
२. भो मणं म्हि इमिणा अहं पसुमारणेण मारिदुं ण पारिदो । भवं उण इमं
साअदेण अहिणंददि ।
३. ०रजय्यः.
४. देवरथमारुह्य.
५. गृहीतोऽस्म्यनया

माल०—तदपि कथ्यते। किंचिन्निमित्तादपि मनःसंतापाद् आयुष्मान् मया विक्लवो दृष्टः। पश्चात् कोपयितुमायुष्मन्तं तथा कृतवान्। कुतः—

ज्वलति चलितेन्धनोऽग्निर् विप्रकृतः पन्नगः फणां कुरुते।
प्रायः स्वं महिमानं क्षोभात् प्रतिपद्यते हि जनः[1] ॥३१॥

राजा—(जनान्तिकम्) वयस्य! अनतिक्रमणीया दिवस्पतेराज्ञा। तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि,—

त्वन्मतिः केवला तावत् परिपालयतु प्रजाः।
अधिज्यमिदमन्यस्मिन् कर्मणि व्यापृतं धनुः ॥३२॥

विदू०—जं भवं आणवेदि। (यद् भवानाज्ञापयति।)

माल०—रथमारोहतु आयुष्मान्!

(राजा रथाधिरोहणं नाटयति)

(निष्क्रान्ताः सर्वे)

॥ [2]इति षष्ठोऽङ्कः ॥

---

१. तेजस्वी संक्षोभात् प्रायः प्रतिपद्यते तेजः. २. शकुन्तलाविरहो नाम०० ।

## सप्तमोऽङ्कः

(ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च)

---

1. ॥अथ सप्तमोऽङ्कः॥

(ततः प्रविशति नाकलासिका)

नाक० आणत्तं हि गुरुणा णादएण जहा एदेसु य्येव दिअसेसु मच्चलोआदो उत्तिण्णेण राएसिणा दुस्सन्तेण भअवदो पुरंदरस्स पिअआरिणा दाणववहणिमित्तं गन्तव्वं। जाव अब्भच्चिअ इमं ह्यापुच्छिअमाणं णिक्खिवदि ताव एव्व मए विबुहवच्चक्खं मङ्गलणिमित्तं किंपि पेक्खणअं दरसइदव्वं। ता तुमं कंपि लासिअं अण्णेसिअ संगीदसालासु आअच्छ त्ति। ता जाव लासिअं अण्णेसामि। (परिक्रम्यावलोक्य च) का उण एसा गहीदवरणेवच्छा हरिसिदुक्कण्ठिदाविअ इदो एव्वाअच्छदि। (निपुणमवलोक्य) कहं पिअसही चूदमञ्जरी। ता जाव एताए सह उवज्झाअसमीवं गच्छामि। (प्रतिपालयति) (ततः प्रविशति यथानिर्दिष्टा लासिका) चूतमञ्जरी—(सविस्मयं सहर्षं च) अहो महप्पभाओ राएसी दुस्सन्तो (सासूयम्) अहो महावलो सो हृदो दुज्जओ दाणवबलो (नृत्यति) नाक०—(उपसृत्य) सहि चूदमञ्जरिए! उक्कण्ठिदा विअ लक्खीअसि। चूत०—(विलोक्य) कहं परिजाअमञ्जरि। सहि! सव्वं कधयिस्सं। तुमं दाव कहिं पत्थिदेत्ति पुच्छिस्सं। पारि०—सहि! संखेवेण कधयिस्सं। अहं खु राएसिणो दुस्सन्तस्स दाणवविजअ—ववदेसेण अज्ज मङ्गलणिमित्तं किं पि पेक्खणअं दंसीअदुत्ति उवज्झाअस्स अण्णाए उभे य्येव सआसं..। चूत०—(सोत्कण्ठम्) आसी अवसरो एदस्स। दाणिं पुणो भच्चलोअं पत्थिदे एदस्सिं महाराए कस्स दंसीअदि। पारि०—(साशङ्कम्) सहि! किं महेन्दस्स मणोरहाणि संपादिअ गदो उण अण्णधा। चूत०—सहि सुणु 'अज्ज य्येव गोसग्गसमए णवरं दुज्जअदाणवजीविदसव्वस्ससेसं गिह्णिदुण जावअ तिदसविलासिणीं-सरस-हिअआइं अवणि अहिप्पट्ठिदो। अदोअ मे हरिसोक्कण्ठाणं कारणं। पारि०—सहि! तए पिअं णिवेदिदं। जं एव्व उवज्झाएण पुरुवंसराएसिणो पुरदो कज्जं कादुं अण्णात्तं तं जेव्व गीदं कादुण एत्थ एव्व करेम्ह। चूत०—जं दे रोअसि। पारि०—ता जं य्येव गीदं मए लविदं तए वा सह णच्चेम्म। चूत०---सहि! एव्वं करेम्ह

(उभे गायतः) रविसमअ-गमणं कंचण अण्णं अ सदाअमालि महुसमओ।
अण्णं कुणइ विसण्णं पाडीइमाणि भूमीए ॥१॥

(इत्युभे नर्तित्वा निष्क्रान्ते) ॥प्रवेशकः॥ (ततः प्रविशति००"—सा०

राजा—मातले ! अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये ।

मात०—(सस्मितम्) आयुष्मन् ! [१]उभयत्राप्यपरितोषं समर्थये ।

> [२]प्रथमोपकृतं मरुत्वतः
> [३]प्रतिपत्त्या लघु मन्यते भवान् ।
> गणयत्यवदान[४]विस्मितो
> भवतः सोऽपि न सत्क्रियागुणान् ।।१।।

राजा—मातले ! मा मैवम्; स खलु मनोरथानामप्य[५]भूमिर्विसर्जनावसरसत्कारः । मम हि दिवौकसां समक्षमर्धासनोप[६]वेशितस्य

> अन्तर्गतप्रार्थनमन्तिकस्थं
> जयन्तमुद्वीक्ष्य कृतस्मितेन ।
> [७]आमृष्टवक्षोहरिचन्दनाङ्का
> मन्दारमाला हरिणा पिनद्धा[८] ।।२।।

मात०—किमिव नामायुष्मान[९]मरेश्वरान्नार्हति ? । पश्य,—

> सुखपरस्य हरेरुभयैः कृतं
> त्रिदिवमुद्धृतदानवकण्टकम् ।
> तव शरैरधुना नतपर्वभिः
> पुरुषकेसरिणश्च पुरा नखैः ।।३।।

---

१. उभयत्राप्यसंतोषमवगच्छ । कुतः—उपकृत्य हरेस्तथा भवांल्लघु सत्कारमवेक्ष्य मन्यते । २. प्रथमशब्दार्थाय द्र. ४०९—पृ० पादटि.

३. प्रतिपत्तिः सत्कारातिशयः, गौरवमिति रा.

४. ०संमितां भवतः सोऽपि न सत्क्रियामिमाम्.

५. ०मप्यतिदूरवर्ती विसर्जनावसरे सत्कारः.

६. ०नोपविष्टस्य र. ६.७३, १७।७. ७. प्रमृज्य वक्षो.

८. सैषा शेषा कु० ३।२२, र. १७।७९, अत्रैव ३।१०-११ संवादः

९. सुरेशादायुष्मान्नार्हति.

राजा—अत्र खलु शतक्रतोरेव [1]महिमा । पश्य—

> सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
> संभावनागुणमवेहि तमीश्वराणाम् ।
> किं [2]वाऽभविष्यदरुणस्तमसां विभेत्ता
> तं चेत् सहस्रकिरणो धुरि नाकरिष्यत् ॥४॥

माल०—[3]सदृशमेवैतत् । (स्तोकमन्तरमतीत्य) आयुष्मन् ! इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्य[4]मात्मयशसः ।

> विच्छित्तिशेषैः सुरसुन्दरीणां वर्णैरमी [5]कल्पलतांशुकेषु ।
> विचिन्त्य गीतक्षममर्थवन्धं दिवौकसस्त्वच्चरितं लिखन्ति ॥५॥

राजा—मातले ! असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिव[6]मधिरोहता मया न लक्षितः स्वर्गमार्गः । तत् कतरस्मिन् मरुतां पथि वर्तामहे ? ।

मातलिः—

> त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
> ज्योतींषि[7] वर्तयति च प्रविभक्तरश्मिः ।
> [8]तस्य द्वितीयहरिविक्रमनिस्तमस्कं
> वायोरिमं परिवहस्य वदन्ति मार्गम्[9] ॥६॥

राजा०—मातले ! अतः खलु सबाह्य[10]करणो ममान्तरात्मा प्रसीदति (रथाङ्गमवलोक्य)मेघपदवी[11]मवतीर्णौ स्वः ।

मात०—[12]कथमवगम्यते ? ।

---

१. महिमा स्तुत्यः नि.    २. किं प्राभविष्यदरुणस्तमसां वधाय.
३. सदृशं तवैतत्.    ४. लिपिसौन्दर्यम् इति, यशसो यशोलेखस्येति च भावः ।
५. कल्पलतान्तरेषु । संचिन्त्य गीतिक्षम, ०अर्थजातम् नि.
६. ०रधिरोहता न लक्षितोऽयं प्रदेशो मया । तत्कतमस्मिन्पथि वर्तामहे मरुताम्.
७. चक्रविभक्तरश्मिः.
८. तस्य व्यपेतरजसः प्रवहस्य वायोर्मार्गो द्वितीयहरिविक्रमपूत एष.
९. र. १३।१९ लो. (१०९ पृ. चौ. सं.)    १०. ०करणान्तरात्मा.
११. ०मवतीर्णाः स्मः.    १२. आयुष्मन्, कथ०.

राजा—

अयमर[1]-विवरेभ्यश्चातकैर्निष्पतद्भिर्,
हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते [2]सीकरक्लिन्ननेमिः ॥७॥

माल०—[3]क्षणादायुष्मान् स्वाधिकारभूमौ वर्तिष्यते ।

राजा—(अधोऽवलोक्य) वेगावतरणादाश्चर्यदर्शनः [4]संलक्ष्यते मनुष्य-लोकः । तथा हि,—

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
[5]पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः ।
संधानं तनुभागनष्टसलिलव्यक्त्या व्रजन्त्यापगाः[6]
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥८॥

मात०—साधु दृष्टम् (सबहुमानमवलोक्य) अहो ! [7]उदाररमणीया पृथिवी ।

राजा—मातले ! कतमोऽयं पूर्वापरसमुद्रावगाढः[8] कनक[9]रसनिष्यन्दः सांध्य इव [10]मेघः सानुमानालोक्यते ? ।

मात०—आयुष्मन् ! एष खलु हेमकूटो [11]नाम किंपुरुषपर्वतः तपः-संसिद्धिक्षेत्रम् । पश्य,—

स्वायंभुवान् मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽत्र सपत्नीकस्तपस्यति ॥९॥

राजा—तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

मात०—[12]प्रथमः कल्पः ।[13]

---

१. अयमगविवरेभ्य०. २. शीकर०.
३. अथ किम् । अन्यच्च क्षणादूर्ध्वमायुष्मानात्माधिकार०. ४. संपद्यते.
५. पर्णस्वन्तरलीनतां नि. ६. संतानैस्तनुभावनष्टसलिला व्यक्ति व्रजन्त्यापगाः नि.
७. उदग्ररमणीया पृथ्वी. ८. कु. १।१ ९. ०रसनिष्यन्दी
१०. मेघपरिघः सानुमानवलोक्यते । ११. परं तपस्विनां सिद्धिक्षेत्रम्.
१२. आयुष्मन्, प्रथमः. द्र. ४०९ पृ. पा. टि. –४.
१३. (रथावतरणं नाटयित्वा) एतावदवतीर्णौ स्वः । राजा—मातले, उपोढ०.

(नाट्येनावतीर्णौ)

राजा—(सविस्मयम्)

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः।
अभूतलस्पर्शतया निरुद्धतिस्[1]
तवावतीर्णोऽपि रथो न लक्ष्यते ॥१०॥

मात०—[2]एतावानेव शतक्रतोरायुष्मतश्च विशेषः।

राजा—मातले ! कतमस्मिन् प्रदेशे मारीचाश्रमः।

मात०—(हस्तेन दर्शयन्)[3]

वल्मीकाग्रनिमग्नमूर्तिरुरसा[4] संदष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेना[5]त्यर्थसंपीडितः।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥११॥

राजा—[6]नमोऽस्मै कष्टतपसे।

मात०—(संयतप्रग्रहं रथं कृत्वा) महाराज ! एतौ अदितिपरिवर्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः।

राजा—[7]स्वर्गादधिकतरं निर्वृतिस्थानम्। अमृतह्रदमिवावगाढोऽस्मि।

मात०—(रथं स्थापयित्वा) अवतरत्वायुष्मान्।

राजा—(अवतीर्य) मातले ! भवान् कथमिदानीम् ?।

मात०—[8]संयन्त्रितो मया रथः वयमप्यवतरामः। (तथा कृत्वा) [9]इत आयुष्मन् ! (परिक्रम्य) दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः।

---

१. निरुन्धतः मा. खि. अनिरुन्धतः च. विरुद्धतिः सा. पि.
२. एतावानेवायुष्मतः शतक्रतोश्च रथस्य विशेषः र. २।५०
३. पश्य—वल्मीकार्धनिमग्न०
४. ०रुरगत्वग्ब्रह्मसूत्रान्तरः
५. ०नात्यन्तसंपीडितः
६. नमस्ये कष्ट नि.
७. अहो, स्वर्गा०.
८. समययन्त्रित एवायमास्ते रथः.
९. इतो दृश्यन्तां सिद्धमुनीनां तपो०.

राजा—ननु [1]विस्मयादवलोकयामि ।

> प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
> तोये काञ्चनपद्मरेणुकपिशे [2]पुण्याभिषेकक्रिया ।
> ध्यानं रत्नशिलागृहेषु[3] विबुधस्त्रीसंनिधौ संयमो
> [4]यत् काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥१२॥

मात०—[5]उत्सर्पिणी खलु महतां प्रार्थना । (परिक्रम्य आकाशे) अये वृद्धशाकल्य ! किमनुतिष्ठति भगवान् मारीचः ? । (आकर्ण्य) किं ब्रवीषि ? । दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तस्यै महर्षिपत्नीसहितायै कथयतीति ।

राजा—(कर्णं दत्त्वा) अये ! प्रतिपाल्यावसरः खलु प्रस्तावः[6] ।

मात०—(राजानमवलोक्य) अस्मिन्नशोकवृक्षमूले तावदास्तामायुष्मान्, यावत् त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि[7] ।

राजा—यथा भवान् मन्यते । (स्थितः)

मात०—आयुष्मन् ! साधयाम्यहम् । (निष्क्रान्तः)

राजा—(निमित्तं सूचयित्वा)

> मनोरथाय नाशंसे किं बाहो ! स्पन्दसे [8]मुधा ? ।
> पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते[9] ॥१३॥

(नेपथ्ये)

मा खु चावलं करेहि । [10]कहं गदो जेव अत्तणो पकिदिं ? ।
(मा खलु चापलं कुरु । कथं गत एवात्मनः प्रकृतिम् ? ।)

---

१. विस्मयादुभयमध्य०.

२. धर्माभिषेक०० तोये हैमसहस्रपत्रसुभगे नक्तं दिवं सद् व्रतम्—सा.

३. ०तलेषु वि०. ४. यद्वाञ्छन्ति.

५. उत्कर्मिणी—सा., उत्सर्पिणी उपर्युपरि धावन्ती रा. ऊर्ध्वगमनशीला अनेन तेषां मोक्षार्थित्वं गम्यते. का. मा. ६. प्रतिपाल्यावसराः खलु मुनयः मा.का.

७. ०महमिन्द्रगुरवे निवेदयामि । राजा—यथा. ८. वृथा.

९. परिवर्धते. च. खि. १०. जहिं जहिं जेव्व अत्तणो पइदिं दंसेसि ।

राजा—(कर्णं दत्त्वा) अभूमिरियमविनयस्य । को नु खल्वेष निषिध्यते । (शब्दानुसारेणावलोक्य, सविस्मयम्) अये, ! को नु खल्वयमनुवध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः ? ।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति[1] ॥१४॥

(ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां सह बालः)

बालः—[2]यिंभ ले शिंहशावका यिंभ । दंताईं दे गणइश्शं । (जृम्भस्व, रे सिंहशावक ! जृम्भस्व, दन्तांस्ते गणयिष्ये ।)

प्रथ०—अविणीद ! किं णो अपच्चणिव्विसेसाणि सत्ताणि विप्पअरेसि ? । हंत, वड्ढइ दे संरंभो[3] । ठाणे खु इसिजणेण सव्वदमणो त्ति किदणामहेओ सि । (अविनीत ! किं नः अपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि ? । हन्त, वर्धते तव संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।)

राजा—किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे हृदयम् । नूनमनपत्यता मां वत्सलयति ।

द्वती०—एसा खु केसरिणी तुमं लंघेदि जइ से पुत्तअं ण मुंचेसि । (एषा खलु केसरिणी त्वां लङ्घयिष्यति यदि तस्याः पुत्रकं न मुञ्चसि ।)

बालः—(सस्मितम्) अम्मो बलिअं ख भीदे स्मि[4] । (अहो, बलीयः खलु भीतोऽस्मि ।) (अधरं दर्शयति)

राजा—(सविस्मयम्)

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधापेक्ष[5] इव स्थितः ॥१५॥

प्रथ०—वच्छ ! एदं बालमिइंदअं मुंच । अवरं दे कीलणअं दाइस्सं । (वत्स ! एनं बालमृगेन्द्रं मुञ्च । अपरं ते क्रीडनकं दास्यामि ।)

बालः—कहिं शे, देहि णं । (कुत्र तत् ? देहि ननु ।) (हस्तं प्रसारयति)

---

१. विलम्बिनं सिंहशिशुं करेणाहृत्य कर्षति पि. प्रक्रीडितुम् = आक्रीडितुं—सा.
२. जिंभ सिंघ दंताइं दे गणइस्सं ३. संपहरदि विअ दे संरंभो ।
४. भीदो म्हि ५. वह्निरेधःक्षय एधशब्दाय द्र. र. ९।८१, १३।४१

राजा—(बालस्य हस्तमवलोक्य) कथं चक्रवर्तिलक्षण[1]मप्यनेन धार्यते ? तथा ह्यस्य,—

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥१६॥

द्विती०—सुव्वदे ! ण सक्को एसो वाआमेत्तेण [2]विरमइदुं । गच्छ तुमं । मम केरए उडए मक्कंडेअस्स इसिकुमारअस्स वण्णचित्तिदो मित्तिआमोरओ चिट्ठदि । तं से उवहर । (सुव्रते ! न शक्य एषो वाचामात्रेण विरमयितुम् । गच्छ त्वम् । मदीये उटजे मार्कण्डेयस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति । तमस्योपहर ।)

प्रथ०—तह । (तथा ।) (निष्क्रान्ता)

बालः—इमिणा येव याव कीलिश्शं (अनेनैव तावत् क्रीडिष्यामि ।) (तापसीं विलोक्य हसति)

राजा—स्पृहयामि खलु दुर्ललितायास्मै—

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा [3]मलिनीभवन्ति ॥१७॥

ताप०—होदु; [4]ण मं अअं गणेदि । (पार्श्वमवलोकयति) को एत्थ इसिकुमाराणं[5] ? । (राजानमवलोक्य) भद्दमुह ! एहि दाव । मोए[6]हि इमिणा दुम्मोअहत्थग्गहेण डिंभलीलाए बाहीअमाणं [7]बालमिइंदअं । (भवतु; न मामयं गणयति (पार्श्वमवलोकयति) । कोऽत्र ऋषिकुमाराणाम् ? (राजानमवलोक्य) भद्रमुख ! एहि तावत् । मोचयानेन दुर्मोकहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् ।)

---

१. समइदुं. २. एव्व दाव कीलिस्सं नि.

३. तापसी-(विलोक्य हसन्ती) मुंच णं । राजा—(निःश्वस्य)००० रजसा परुषीभवन्ति ।

राजा—(उपगम्य सस्मितम्) अयि भो महर्षिपुत्र !

एवमाश्रमविरुद्धवृत्तिना
[1]संयमः किमिति जन्मतस्त्वया ।
सत्त्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनः[2] ॥१८॥

ताप०—भद्दमुह ! ण खु अअं इसिकुमारओ । (भद्रमुख ! न खल्वयं ऋषिकुमारः) ।

राजा—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात् तु [3]वयमेवंतर्किणः । (यथाभ्यर्थितमनुतिष्ठन् बालस्पर्शमुपलभ्य, आत्मगतम्)

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य[4] गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्याद्
यस्यायमङ्कात् कृतिनः प्ररूढः[5] ॥१९॥

ताप०—(उभौ निर्वर्ण्य) अच्छरिअं अच्छरिअं । (आश्चर्यमाश्चर्यम् ।)

राजा—आर्ये ! किमिव ? ।

ताप०—इमस्स [6]बालअस्स दे वि अ संवादिणी आकिदी त्ति विम्हा-[7]विदम्हि । अपरिइदस्स वि दे अप्पडिलोमो संवुत्तो त्ति अ । (अस्य बालकस्य, तेऽपि च संवादिन्याकृतिरिति विस्मापितास्मि । अपरिचितस्यापि ते अप्रतिलोमः संवृत्त इति च ।)

राजा—(बालकमुपलालयन्) न चेन्मुनिकुमारोऽयम्, अथ कोऽस्य व्यपदेशः ? ।

ताप०—पुरुवंसो[8] । (पुरुवंशः ।)

---

१. 'संयमी किमिति जन्मदः', तदिदं दृष्टान्तविरुद्धम्, चन्दने सर्पजन्मदत्वानन्वयात् । जन्मनः मा. का.

२. चन्दनम्—नि., 'चन्दनोऽस्त्रियाम्'—अमरः ।

३. वयमतर्किणः । प्रत्ययः कारणम्, द्र. र. १०।३, कु. ३।१८. विश्वास इति रा.

४. स्पृष्टेषु. ५. प्रसूतः र. ३।२६.

६. असंबद्धे वि भद्दमुहे संवादिणी.

७. विम्हिद म्हि । अवि अ वामसीलो वि भविय अवरिचिदस्स ण दे पडिलोमो संवुत्तो. ८. पोरवोत्ति.

राजा—(आत्मगतम्) कथमेकान्वयो[1] मम । अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत् पौरवाणामन्त्यं कुलव्रतम् ।

भवनेषु [2] रसाधिकेषु पूर्वं
क्षितिरक्षार्थमुशन्ति[3] ये निवासम् ।
नियतैकपतिव्रतानि[4] पश्चात्
तरुमूलानि गृहीभवन्ति तेषाम् ॥२०॥

(प्रकाशम्) न पुनरात्मगत्या मानुषाणामेष विषयः ।

ताप०—जइ भद्दमुहो भणादि । अच्छरासंवंधेण [5]इमस्स जणणी एत्थ देवगुरुणो तवोवणे प्पसूदा । (यथा भद्रमुखो भणति । अप्सरःसंवन्धेनास्य जननी अत्र देवगुरोस्तपोवने प्रसूता ।)

राजा—(अपवार्य) हन्त, द्वितीयमिदमाशाजननम्[6] । (प्रकाशम्) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ? ।

ताप०—को तस्स धम्मदारपरिच्चाइणो [7]णाम संकीतिदुं चिंतिस्सदि ? (कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयितुं चिन्तयिष्यति ? ।)

राजा—(आत्मगतम्) कथम्, [8]इयं खलु कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि[9] । अथवा अनार्यः परदारपृच्छाव्यवहारः ।

(प्रविश्य मृण्मयूरहस्ता)

ताप०—सव्वदमण ! सउंदलावण्णं पेक्ख । (सर्वदमन ! शकुन्तलावण्यं पश्य)

बालः—(सदृष्टिक्षेपम्) केहिं शा मे अय्युए ? । (कुत्र सा मम माता ?)

उभे—णामसारिस्सेण वंचिदो माउवच्छलो । (नामसादृश्येन वञ्चितो मातृवत्सलः ।)

---

१. ०न्वयोऽयमस्माकम् । अतः खलु संभाव्यते । (प्रकाशम्) अस्त्येतत्.
२. सुधासितेषु पि. सा,
३. वश कान्तौ, कान्तिरिच्छा.
४. विहितैकयतिव्रतानि द्र. र. ३।७०, ७।७१.
५. इमस्स बालअस्स
६. वि. ३।९, ०माश्वासजननम्
७. णामं कित्तइस्सदि.
८. कथमियं कथा मामेव लक्षीकरोति.
९. शिशोर्नामतो मातरं पृच्छेयम्.

द्विती०—वच्छ ! इमस्स [१]मित्तिआमोरअस्स रम्मत्तणं पेक्ख त्ति भणिदो सि । (वत्स ! अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि ।)

राजा—(आत्मगतम्) किं वा शकुन्तलेत्यस्य मातुराख्या । सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पेत[२] ।

वालः—अज्जुए ! लोअदि मे एशे चडुलके मऊलके[३] । (मातः ! रोचते म एष चटुलो मयूरः ।) (क्रीडनकमादत्ते)

प्रथ०—(विलोक्य सोद्वेगम्) अम्हहे, रक्खाकरंडग्रं[४] से मणिवंधे ण दीसदि ? (अहो रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते ।)

राजा—ग्रलमलमावेगेन । [५]नन्विदमस्य सिंहशावविमर्दात् परिभ्रष्टम्[६] । (आदातुमिच्छति)

उभे— मा खु [७]एदं अवलंबिअ । (विलोक्य) कहं गहीदं णेण ? । (मा खल्विदमवलम्ब्य । (विलोक्य) कथं गृहीतमनेन ? ।)

(विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः)

राजा—किमर्थं प्रतिपिद्धाः स्मः ? ।

प्रथ०—सुणादु [८]महाभाओ । एसा अवराजिदा णाम [९]ओसही इमस्स जातकम्मसमए भअवदा मारीएण दिण्णा । एदं किल [१०]मादापिदरो अप्पाणं च वज्जिअ अवरो भूमिपडिदं ण गेण्हादि । (शृणोतु महाराजः । एषा अपराजिता नाम ओषधिः अस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरौ, आत्मानं च वर्जयित्वा अपरो भूमिपतितां न गृह्णाति ।)

राजा—अथ गृह्णाति ? ।

---

१. मोरस्स रमणीअत्तणं पेक्ख. २. नायमन्ते प्रस्तावो विषादाय कल्पेत.
३. रोअदि मे एसो भद्दमोरओ. ४. ०गंडओ.
५. नन्वयमस्य. ६. परिभ्रष्टः.
७. मा खु (विलोक्य) कधं गहीदं जेव. ८. महाभाओ नि.
९. सुरमहोसही १०. मादपिदरे अत्ताणअं ५

प्रथ०—तदो तं सप्पो भविअ दंसइ[1] । (ततस्तं सर्पो भूत्वा दशति)

राजा—[2]भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ? ।

उभे—अणेअसो । (अनेकशः ।)

राजा—(सहर्षम्, आत्मगतम्) [3]कथमिव संपूर्णमपि मे मनोरथं नाभिनन्दामि ? (बालं परिष्वजते)

द्विती०—सुव्वदे ! एहि, इमं वुत्तंतं णिअमव्वावुडाए सउंदलाए णिवेदेम्ह । (सुव्रते ! एहि, इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः ।) (निष्क्रान्ते)

बालः— मुंच मं । जाव [4]अय्युएसआसं गमिश्शं । (मुञ्च माम् । यावन्मातुः सकाशं गमिष्यामि ।)

राजा—पुत्रक ! मया सहैव मातरमभिनन्दिष्यसि ।

बालः—ण क्खु तुमं, दुश्शन्ते मम तादे । (न खलु त्वम्, दुष्यन्तो मम तातः)

राजा—(सस्मितम्) [5]एष विवाद एव प्रत्याययति ।

(ततः प्रविशत्येकवेणीधरा शकुन्तला)

शकु०—विआरकाले वि पकिदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसा[7] अत्तणो भाअहेएसु । अहवा जह [6]साणुमदीए आचक्खिदं तह संभावीअदि एदं । (विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न मे आशा आत्मनो भागधेयेषु । अथवा यथा सानुमत्या आख्यातं तथा संभाव्यत एतत् ।) (परिक्रामति)

राजा—(शकुन्तलां विलोक्य) अये ! (सहर्षखेदम्) सेयम् अत्रभवती शकुन्तला, यैषा—

> वसने[8] परिधूसरे वसाना
> नियमक्षाममुखी धृतैकवेणिः ।
> अतिनिष्करुणस्य शुद्धशीला
> मम दीर्घं विरहव्रतं बिभर्ति[9] ॥२१॥

---

१. तदा संप्पो भविअ तं दंसदि २. अथात्रभवतीभ्यां कदाचिदन्यत्र प्रत्यक्षीकृतमिदम् ३. तत्किं खल्विदानीं पूर्णमात्मनो मनोरथं
४. अय्युआशआशं ५. एष विवाद एव मां
६. मिस्सकेसीए मे ७. आसा आसी = आशा आसीत्—मा.नि. सा. च. खि.
८. वसने अन्तरोपसंवानीये—रा. ९. वहन्ती

शकु०—(पश्चात्तापविवर्णं राजानं दृष्ट्वा सवितर्कं) ण खु अज्जउत्तो विअ। तदो को एसो दाणिं किदरक्खामंगलं दारअं मे गत्तसंसग्गेण दूसेदि। (न खल्वार्यपुत्र इव। ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ?)

बालः—(मातरमुपेत्य) अय्यए[1] एश के वि पलकेलए मं पुत्तके त्ति आलिंगदि। (मातः ! एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति।)

राजा—प्रिये ! क्रौर्यमपि मे त्वयि प्रयुक्तम् अनुकूलपरिणामं संवृत्तम्। तदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानम् इच्छामि।[2]

शकु०—(आत्मगतम्) हिअअ ! अस्सस। परिच्चत्तमच्छरेण अणुअम्पिअम्हि देव्वेण। अज्जउत्तो खु एसो। (हृदय ! आश्वसिहि आश्वसिहि। परित्यक्तमत्सरेण अनुकम्पितास्मि दैवेन। आर्यपुत्रः खल्वेषः।)

राजा—प्रिये !

स्मृतिभिन्नमोहतमसो[3]दिष्ट्या प्रमुखे स्थितासि मे सुमुखि !।
उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥२२॥

शकु०—जेदु अज्जउत्तो जे। (जयतु आर्यपुत्रो ज।)

(अर्धोक्ते वाष्पकण्ठी विरमति)

राजा—सुन्दरि !

वाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया।
यत् ते दृष्टसंस्कारपाटलोष्ठपुटं मुखम् ॥२३॥

बालः—अय्युए ! के एशे ? (मातः क एषः ?।)

शकु०—वच्छ ! दे [4]भाअधेआइं पुच्छ। (वत्स ! ते भागधेयानि पृच्छ।) (रोदिति)

---

१. अज्जुए ! एसो को वि पुरिसो मं पुत्त त्ति आलि० नि., आलिंगदि = आलवदि-पि.

२. इच्छामि पश्यामि नि. मा., अप्रत्यभिज्ञात०० पश्यामि. खि. च.

३. तमो राहुः रा०, र ८।३७.

४. अज्जुए को एसो. नि. (इति रोदिति) राजा—सुतनु०.

राजा—(शकुन्तलायाः पादयोः प्रणिपत्य)

> सुतनु ! हृदयात् प्रत्यादेशव्यलीकमपैतु ते
> किमपि मनसः संमोहो मे तदा वलवानभूत् ।
> प्रवलतमसामेवंप्रायाः [1]शुभेषु हि वृत्तयः
> स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ।।२४।।

शकुं०—उट्ठेदु अज्जउत्तो । णणं मे [2]सुअरिअप्पडिवंधअं पुराकिदं तेसु दिअहेसु परिणाममुहं आसि जेण साणुक्कोसो वि अज्जउत्तो [3]मइ तधा संवुत्तो । (उत्तिष्ठत्वार्यपुत्रः । नूनं मे सुचरितप्रतिवन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीत्, येन सानुक्रोशोऽप्यार्यपुत्रो मयि तथा संवृत्तः ।)

(राजोत्तिष्ठति)

शकुं०—अह कहं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो ? । (अथ कथमार्यपुत्रेण स्मृतो दुःखभागी अयं जनः ? ।)

राजा—उद्धृतविषादशल्यः कथयिष्यामि ।

> मोहान्मया सुतनु ! पूर्वमुपेक्षितस्ते
> यो वाष्पविन्दुरधरं परिवाधमानः ।
> तं तावदाकुटिलपक्ष्मविलग्नमद्य
> कान्ते[4] प्रमृज्य विगतानुशयो [5]भवेयम् ।।२५।।

(यथोक्तमनुतिष्ठति)

शकुं०—(नाममुद्रां दृष्ट्वा) अज्जउत्त ! एदं तं अंगुलीअअं । (आर्यपुत्र ! [6]इदं तत् अङ्गुलीयकम् ।)

राजा—[7]अस्मादङ्गुलीयकात् खलु स्मृतिरुपलव्धा ।

शकुं०—विसमं किदं णेण जं तदा अज्जउत्तस्स [8]पच्चअकाले दुल्लहं आसि । (विषमं कृतमनेन यत् तदार्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत् ।)

---

१. शुभेष्वपि वृत्तयः पि., शुभेषु हि वृत्तयः मा. सा. खि. च., शुभेषु प्रवृत्तयः—नि.
२. सुहप्पडिवंधअं. ३. विरसोसंवुत्तो.
४. बाष्पं नि.म.सा.च.खि. । पौनरुक्त्यमत्र दोषः । ५. भवामि.
६. तं इदं ७. अस्मादद्भुतोपलम्भादङ्गु०.
८. विसंवादिदं खु अणेण जं तधा पच्चअकारणं दुल्लहं मे.

राजा—तेन हि ऋतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम् ।

शकु०—ण से विस्ससामि । अज्जउत्तो एव्व णं धारेदु । (नास्य विश्वसिमि । आर्यपुत्र एवैतद् धारयतु ।)

(ततः प्रविशति मातलिः)

मात०—दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान् वर्धते ।

राजा—सुहृत्संपादित इति स्वादुतरफलो मे मनोरथः[1] । मातले ! न खलु विदितोऽयमाखण्डलेन[2] वृत्तान्तः ? ।

मात०—(सस्मितम्) किमीश्वराणां परोक्षम् । एत्वायुष्मान्; भगवान् मारीचस्ते [3]दर्शनं वितरति ।

राजा—अवलम्ब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

शकु०—हिरिआमि अज्जउत्तेण सह गुरुसमीवं गंतुं । (जिह्रेम्यार्यपुत्रेण सह गुरुसमीपे गन्तुम् ।)

राजा—अयि आचरितव्यमेतदभ्युदयकालेषु[4] । [5]एह्येहि ।

(सर्वे परिक्रामन्ति)

(ततः प्रविशत्यदित्या सार्धमासनस्थो मारीचः)

मारी०—(राजानमवलोक्य) दाक्षायणि !

पुत्रस्य ते रणशिरस्ययमग्रयायी<br>
दुष्यन्त इत्यभिहितो भुवनस्य भर्ता ।<br>
चापेन यस्य विनिवर्तितकर्म जातं<br>
तत् कोटिमत् कुलिशमाभरणं मघोनः ॥२६॥

अदि०—संभावणीआणुभावा[6] से आकिदी । (संभावनीयानुभावा अस्याकृतिः ।)

---

१. अभूत् संपादितस्वादुफलो मे मनोरथः नि. खि. च. मा., सुहृत्संपादितात् साधुतरफलो०—पा. २. ०माखण्डलस्यार्थः स्यात् नि.खि.च.मा.
३. दर्शनमिच्छति. ४. आचरितमेतदभ्युदय० अप्या० नि.
५. तदेहि तावत्. ६. ०अप्पहावा खु से.

मात०—आयुष्मन् ! एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावा· युष्मद्गतमवलोकयतः । तदुपसर्प ।

राजा—[1]मातले !

प्राहुर्द्वादशधा स्थितस्य मुनयो यत् तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद् यज्ञभागेश्वरम् ।
यस्मिन्नात्मभवः[2] परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम्[3] ।।२७।।

मात०—अथ किम् ? ।

राजा०—(उपगम्य) उभाभ्यामपि [4]वासवनियोज्यो दुष्यन्तः प्रणमति ।

मारी०—वत्स ! [5]चिरं जीव; पृथिवीं पालय ।

अदि०—वच्छ ! अप्पडिरहो होहि । (वत्स ! अप्रतिरथो भव । )

शकु०—दारअसहिदा वो पादवंदणं करेमि ।[6] (दारकसहिता वां पादवन्दनं करोमि । ) (पुत्रसहिता प्रणिपतति)

मारी०—वत्से !

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते [7]योग्या [8]पौलोमीसदृशी भव ।।२८।।

अदि०—जादे ! भत्तुणो [9]अभिमदा होहि । [10]अवस्सं दीहाऊ वच्छओ उहअकुलणंदणो होदु । उवविसह । (जाते ! भर्तुरभिमता भव । अवश्यं दीर्घायुर्वत्सकः उभयकुलनन्दनो भवतु । उपविशत ।)

(सर्वे प्रजापतिमभित उपविशन्ति)

मारी०—(एकैकं निर्दिशन्)

दिष्टया शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति[11] त्रितयं तत् समागतम् ।।२९।।

---

१. मातले—एतौ. नि. २. यस्मिन्नात्मभुवः

३. दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः ।
जज्ञे दक्षो महाभागो यः पूर्वं ब्रह्मणोऽभवत् ।। रा.

४. वासवानुयोज्यो दुःषन्तः. ५. चिरं पृथिवीं.

६. (शकुन्तला पुत्रसहिता पादयोः पतति). ७. योज्या.

८. पौलोमीमङ्गला भव. ९. बहुमदा होहि. १०. अअं च दीहाऊ उहअपक्खं अलंकरेदु । ता एध उवविसध. ११. र. २।१६.

राजा—भगवन् ! प्रागभिप्रेतसिद्धिः, पश्चाद्दर्शनम् ! अपूर्वः खलु वोऽनुग्रहः ।

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रमः[1],
तव प्रसादस्य पुरस्तु सिद्धयः[2] ॥३०॥

मात०—एवं विधातारः प्रसीदन्ति ।

राजा—भगवन् ! इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिना उपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य । पश्चादङ्गुलीयकदर्शनादूढपूर्वामिमां तद्दुहितरमवगतोऽहम् । तत्, चित्रमिव मे प्रतिभाति ।

यथा गजो [3]नेति समक्षरूपे
तस्मिन्नपक्रामति संशयः स्यात् ।
पदानि दृष्ट्वा[4] तु भवेत् प्रतीति-
स्तथाविधो मे मनसो विकारः ॥३१॥

मारी०—वत्स ! अलमात्मापराधशङ्कया । संमोहोऽपि त्वय्यनुपपन्नः । श्रूयताम् ।

राजा—अवहितोऽस्मि ।

मारी०—यदैवाप्सरस्तीर्थावतरणात् प्रत्याख्यान[5]-वैक्लव्यां शकुन्तलामादाय मेनका दाक्षायणीमुपगता तदैव ध्यानादवगतोऽस्मि दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा, नान्यथेति । स चायमङ्गुलीयकदर्शनावसानः ।

राजा—(सोच्छ्वासम्) एष वचनीयान्मुक्तोऽस्मि[6] ।

शकु०—(आत्मगतम्) दिट्ठिआ अकारणपच्चादेसी ण अज्जउत्तो । ण हु सत्तं अत्ताणं सुमरेमि । अहवा पत्तो मए स हि सावो विरहसुण्णहिअआए ण विदिदो । अदो सहीहिं संदिट्ठम्हि भत्तुणो

१. विधिः २. संपदः
३ गजः साधुसमक्षरूपे कस्मिन्नपि. ४. दृष्ट्वाथ.
५. प्रत्यक्ष० ६. कविरप्येष वचनीयान्मुक्त इति तस्याप्ययमाश्वासनिश्वासः ।

अंगुलीअअं दंसइदव्वं त्ति। (दिष्ट्या अकारणप्रत्यादेशी नार्यपुत्रः। न खलु शप्तमात्मानं स्मरामि। अथवा प्राप्तो मया स हि शापो विरह-शून्यहृदयया न विदितः। अतः सखीभ्यां संदिष्टास्मि भर्तुः अङ्गुलीयकं दर्शयितव्यमिति।)

मारी०—वत्से ! विदितार्थासि[1]। तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः। पश्य,—

> शापादसि प्रतिहता स्मृतिरोध[2]रूक्षे
> भर्तर्यपेततमसि प्रभुता तवैव।
> छाया न मूर्च्छति मलोपहतप्रसादे
> शुद्धे तु दर्पणतले सुलभावकाशा ॥३२॥

राजा—यथाह भगवान्।

मारी०—वत्स ! कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजात-कर्मादिक्रियः पुत्र एष शाकुन्तलेयः ?[3]।

राजा—भगवन् ! अत्र खलु मे वंशप्रतिष्ठा[4]।

मारी०—तथा भाविनमेनं चक्रवर्तिनमवगच्छतु भवान्। पश्य,—

> रथेनानुद्घातस्तिमितगतिना[5] तीर्णजलधिः
> पुरा सप्तद्वीपामवति[6] वसुधामप्रतिरथः।
> इहायं सत्त्वानां प्रसभदमनात् सर्वदमनः
> पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥३३॥

राजा—भगवता कृतसंस्कारे सर्वमस्मिन्नाशास्महे।

---

१. चरितार्थासि सह०—इति पाठे दिव्याश्रमयोर्गर्भाधान प्रसवजातकर्म-संशुद्धां पुंसन्तर्ति पतिं चावाप्येत्याकूतिः २. ०लोप०

३. शाकुन्तल इति तु युज्येत तत्र भवः तत्र जातः इत्यण्व्युत्पत्त्या। तथा सति प्रत्यभिज्ञानत्रयमत्रोपपद्येत दुष्यन्तकर्तृके शकुन्तला—शाकुन्तलेय—प्रत्यभिज्ञाने तत्कर्तृकं स्वप्रत्यभिज्ञानं चेति। द्र. ४२७ पृ० पादटिप्पणी—८.

४. शा ३।१७, ६।२४ पद्यार्थसंवादायायमेव पाठः श्रेयान्। '०सुलभावकाशा। राजा—भगवन्नत्र०' मा. ५. ०गतिनोत्तीर्ण०

६. जयति नि. भा. खि. च. सा.

अदि०—भअवं ! इमाए दुहिदुमणोरहसंपत्तीए कण्णो वि दाव सुद-वित्थारो करीअदु । दुहिदुवच्छला मेणआ'इह'एव्व उपचरंती चिट्ठदि । (भगवन् ! अनया दुहितृमनोरथसंपत्त्या कण्वोऽपि तावच्छ्रुत-विस्तरः क्रियताम् । दुहितृवत्सला मेनका इहैवोपचरन्ती तिष्ठति ।)'

शकु०—(आत्मगतम्) मणोरहो खु मे भणिदो भअवदीए । (मनोरथः खलु मे भणितो भगवत्या ।)

मारी०—तपःप्रभावात् प्रत्यक्षं सर्वमेव तत्रभवतः ।

राजा—अतः खलु मम नातिक्रुद्धो मुनिः ।

मारी०—तथाप्यसौ प्रियमस्माभिः श्रावयितव्यः । कः कोऽत्र भोः ? ।

(प्रविश्य)

शिष्यः—भगवन् ! अयमस्मि ।

मारी०—गालव ! इदानीमेव विहायसा गत्वा मम वचनात् तत्रभवते कण्वाय प्रियमावेदय यथा—'पुत्रवती शकुन्तला दुर्वाससः शापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीता'—इति ।

शिष्यः—यदाज्ञापयति भगवान् । (निष्क्रान्तः)

मारी०—वत्स ! त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथ-मारुह्य ते राजधानीं प्रतिष्ठस्व ।

राजा—यदाज्ञापयति भगवान् ।

मारी०—[१]संप्रति हि—

भवतु तव विडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञो वज्रिणं प्रीणयालम् ।
युगशतपरिवर्तैरेवमन्योन्यकृत्यैर्
भवतमुभयलोकानुग्रहश्लाघनीयौः ॥३४॥

राजा—भगवन् ! यथाशक्ति श्रेयसि प्रयतिष्ये ।

मारी०—वत्स ! किं ते भूयः प्रियमुपकरोमि ? ।

१. संप्रति०० प्रयतिष्ये च. नि. खि. न । सा. प्रतौ पुनरसौ श्लोकोऽधिकः—

राजा—अतः परमपि प्रियमस्ति। यदि ह भगवान् प्रियं कर्तुमिच्छति[1] तर्हि इदमस्तु—

(भरतवाक्यम्)

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहतो महीयताम्[2]।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगत[3]शक्तिरात्मभूः ॥३५॥

(निष्क्रान्ताः सर्वे)

॥ इति सप्तमोऽङ्कः ॥

॥ समाप्तमिदमभिज्ञानशाकुन्तलं नाम नाटकम् ॥

॥ संपूर्णा चेयं सनातनकवि-श्रीरेवाप्रसादद्विवेदि-संपादिता कालिदासग्रन्थावली ॥

॥ श्रीः ॥

---

—मारी० क्रतुभिरुचितभागांस्त्वं सुरान् भावयालं
सुरपतिरपि वृष्टीस्त्वत्प्रजायै विधत्ताम्।
इति सममुपकारव्यञ्जितश्रीमहिम्नो-
र्व्रजतु बहुतिथो वां सौहृदेनैव कालः ॥

१. तथाप्येतदस्तु.

२. श्रुतिमहती सरस्वती नगापौरुषेयवाङ्मयपूज्या संस्कृतभाषा। यतः सा श्रुतिमहती ततो महीयतामितीतर-व्यतिरेकि हेतुगर्भं विशेषणम्। द्र. कु. ७।९०, र. १५।७६। अत्र पाठः ०तां महीयताम्—मा. सा. पि. खि, ०तां महीयसाम्—नि.।

३. परिगत-भक्तिरात्मभूः। आत्मभूः कामोऽपि। सोऽप्यत्र कृष्णशार-भ्रमराभ्यां नीलभूमिकागतो लोहित इति नीललोहितः शिव एव। सोऽयं गार्हस्थ्य-वर्त्मना मोक्षः॥

## ऋतुसंहारे

ईषत् तुषारैः कृतशीतहर्म्यं सुवासितं चारु शिरः सचम्पकैः ।
कुर्वन्ति नार्योऽपि वसन्तकाले स्तनं सहारं कुसुमैर्मनोहरैः ॥

## मेघदूते

१।२ प्रथम०—प्रशम० १।३ कौतुका० = केतका० कालिदासप्रयुक्तायां ब्राह्मी-
लिपौ शीघ्रलेखे कौतुक-केतकयोरभिन्नप्रायत्वादयं भ्रमः ।

१।१७ पृ० २९ अध्वक्लान्तं प्रतिमुखगतं सानुमांश्चित्रकूट-
स्तुङ्गेन त्वां जलद शिरसा वक्ष्यति श्लाघमानः ।
आसारेण त्वमपि शमयेस्तस्य नैदाघमग्नि
सत्काराद्रः फलति न चिरेणोपकारो महत्सु ॥

१।२१ दग्धा० = जग्ध्वा० 'अम्भोविन्दुग्रहणचतुरांश्चातकान् वीक्षमाणाः
श्रेणीभूताः परिगणनया निर्दिशन्तो बलाकाः ।
त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कम्पानि प्रियसहचरीसंभ्रमालिङ्गितानि ॥

१।३१ प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे
हैमं तालद्रुमवनमभूदत्र तस्यैव राज्ञः ।
अत्रोद्भ्रान्तः किल नलगिरिः स्तम्भमुत्पाट्य दर्पा-
दित्यागन्तून् रमयति जनो यत्र बन्धूनभिज्ञः ॥
हारांस्तारांस्तरलगुटिकान् कोटिशः शङ्खशुक्तीः
शस्पश्यामान् मरकतमणीनु न्मयूखप्ररोहान् ।
दृष्ट्वा यस्यां विपणिरचितान् विद्रुमाणां च भङ्गान्
संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेषाः ॥

२।२ यत्रोन्मत्तभ्रमरमुखराः पादपा नित्यपुष्पा
हंसश्रेणीरचितरशना नित्यपद्मा नलिन्यः ।
केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापा
नित्यज्योत्स्नाः प्रतिहततमोवृत्तिरम्याः प्रदोषाः ॥

२।९ पत्रश्यामा दिनकरहयस्पर्धिनो यत्र वाहाः
शैलोदग्रास्त्वमिव करिणो वृष्टिमन्तः प्रभेदात् ।
योधाग्रण्यः प्रतिदिशमुखं संयुगे तस्थिवांसः
प्रत्यादिष्टाभरणरुचयश्चन्द्रहासव्रणाङ्कैः ॥

२।२० वा—शब्दः = र. ४।४२, मा. ५।१२

२।२७ स्निग्धाः सख्यः कथमपि दिवा तां न मोक्ष्यन्ति तन्वी-
मेकप्रख्या भवति हि जगत्यङ्गनानां प्रवृत्तिः ।
स त्वं रात्रौ जलद शयनासन्नवातायनस्थः
कान्तां सुप्ते सति परिजने वीतनिद्रामुपेयाः ॥
अन्वेष्टव्यामवनिशयने संनिकीर्णैकपार्श्वां
तत्पर्यन्त (र्क) प्रगलितलवैश्छिन्नहारैरिवास्रैः ।
भूयो भूयः कठिनविषमां सारयन्तीं कपोला-
दामोक्तव्यामयमितनखेनैकवेणीं करेण ॥

२।४१ धारासिक्तस्थलसुरभिणस्त्वन्मुखस्यास्य बाले
दूरीभूतं प्रतनुमपि मां पञ्चबाणः क्षिणोति ।
घर्मान्तेऽस्मिन् विगणय कथं वासराणि व्रजेयु-
र्दिक्संसक्तप्रविततघनव्यक्तसूर्यातपानि ॥

२।५१ तं संदेशं जलधरवरो दिव्यवाचाऽऽचचक्षे
प्राणांस्तस्या जनहितरतो रक्षितुं यक्षवध्वाः ।
प्राप्योदन्तं प्रमुदितमनाः सापि तस्थौ स्वभर्तुः
केषां न स्यादभिमतफला प्रार्थना ह्युत्तमेषु ॥
श्रुत्वा वार्त्तां जलदकथितां तां जनेशोऽपि सद्यः
शापस्यान्तं सदयहृदयः संविधायास्तकोपः ।
संयोज्यैतौ विगलितशुचौ दम्पती हृष्टचित्तौ
भोगानिष्टानविरतसुखं भोजयामास शश्वत् ॥
इत्याख्याते सुरपतिसखः शैलकुल्यापुरीषु
स्थित्वा स्थित्वा धनपतिपुरीं वासरैः कैश्चिदाप ।
मत्वागारं कनकरुचिरं लक्षणैः पूर्वमुक्तै-
स्तस्योत्सङ्गे क्षितितलगतां तां च दीनां ददर्श ॥
तस्मादद्रेर्निगदितपथः शीघ्रमेत्यालकायां
यक्षागारं विगलितनिभं दृष्टचिह्नैर्विदित्वा ।
यत् संदिष्टं प्रणयमधुरं गुह्यकेन प्रयत्नात्
तद्गेहिन्याः सकलमवदत् कामरूपी पयोदः ॥

इत्थंभूते सुरचितपदं मेघदूताभिधानं
कामक्रीडाविरहितजने विप्रयोगे विनोदः ।
मेघस्यास्मिन्नतिनिपुणता बुद्धिभावः कवीनां
नत्वार्यायाश्चरणकमलं कालिदासश्चकार ॥

## कुमारसंभवे

१।५ छायामिषे सा. १।३४ विक्रमेषु = विभ्रमेषु

१।३८ गम्भीरनाभी(भि)ह्रदसन्निधाने रराज नीला नवलोमराजिः ।
मुखेन्दुभीरु(त)स्तनचक्रवाकचञ्चुच्युता शैवलमञ्जरीव ॥

१।४१ निर्भर्त्सिताऽशोकदलप्रसूति, पाणिद्वयं चारुनखं तदीयम् ।
नवोदितेन्दुप्रतिमस्य शोभां व्योम्नः प्रदोषे विफलीचकार ॥

१।४५ कर्णद्वयस्थं नगराजपुत्र्यास्ताटङ्कयुग्मं सु(नि)तरां रराज (वभास) ।
मत्वा(ज्ञात्वा)भवित्रीं त्रिपुरारिपत्नीं तां सेवमाना(सेवासमेता) विव पुष्पवन्तौ ॥

ताटङ्कपत्रं(युग्मं) विरराज तस्याः शैलात्मजायाः श्रवणद्वयस्थम् ।
मत्वा भवित्रीं मदनारिपत्नीं सेवासमेताविव पुष्पवन्तौ ॥

१।५३ तदाप्रभृत्येव = ततः प्रभृत्येव

१।५५ दधानाः = वसानाः । अत्र स्पर्शः वर्णभक्तिविन्यासः । तथा च वत्सभट्टिरपि स्वलेखे । 'ठप्पा' इति च तद्भाषा ।

२।७ ०भागौ = ०भावौ ।

२।८ ०परिमाणेन = परिणामेन, यौ स्वप्नबोधौ तावेव, स्वप्नावोधौ भूतानां तावेव ।

२।९ जगदन्तः निरन्तकः = अनन्तो जगदन्तकः । जगदन्तोऽप्यनन्तकः ।

२।६४ ०भृङ्गं = ०शार्ङ्गं पुष्पधन्वा = पुष्पकेतुः ३।१८ प्रत्ययसङ्गलब्धौ ।

३।२२ ऐरावत० = दिग्वारणा० ३।३० प्रकाश्य = निवेश्य

३।४४ त्रियम्बकं = त्रिलोचनम्, ते साहसिका इति म.

३।४६ कर्णविसक्त = कर्णावतंस० ।

३।५० क्षेत्र० = वेद० ।

३।५४ पर्याप्त० = सुजात० भोजोऽपि सरस्वतीकण्ठाभरणे = 'सुजात'० ।

३।५५ केसरदाम० = केसरपुष्प० । मौर्वीं द्वितीयाम् पाठान्तरमिदमिति महिमभट्ट-दण्डाभीरवः सर्वे ।

३।५८ उपासितुं सा च पिनाकपाणिम् ।
३।६७ ०परिलुप्त० = ०परिवृत्त० ३।७४ परिहर्तुंकामः सोऽन्तर्दधे ।
३।७६ संपदि = अथच, ०कृताङ्गः = कृतात्मा ४।१६ कोकिलान् ०पण्डितान् ।
४।२५ ०शरै० = फलै० ।
४।३१ अनपायिनि = अनघापि हि । संश्रयद्रुमे = संश्रिता द्रुमे. अनवद्यापि हि. सा. पा०. ४।३३ प्रली० = विली० ।
४।४२ नियो० = स यो० ४।४३ स्मरशापान्तगवाम् ।
४।४६ परिपा० = प्रतिपा० । ५।२ गिरीशं प्रति सक्त०, त्रिनेत्रं प्रति सक्त० ।
५।५ गृहेषु = गृहेऽपि, ध्रुवेच्छां = व्रतेच्छां मनीषितामर्चं गृहेषु देवतां ।
५।११ कन्दुकात् = कञ्चुकात् ५।१३ द्वयेऽपि = द्वयीषु ५।१६ ०मधीतिनीम्
५।१८ 'पूर्वं० ना' = सर्वसमाधिसाधनम्. ५।१९ मृदु प्रकृत्यापि संसारमेव तत् ।
५।२९ ०पेलव० = कोमल०

सुरास्तदुद्वीक्ष्य नगेन्द्रकन्यया कृतं तपः शम्भुवशक्रियाक्षमम् ।
ययाचिरे तं प्रणिपत्य दुःखिताः पतिः पशूनां सुतमाजिहेतवे ॥ व.

५।३२ वक्तुमनुक्रमज्ञा.
५।४७ उपेक्षते = अपेक्षते, लम्बिनीः = ०वन्धनाः, ०नीरिमा जटाः कपोले० सा.
५।४९ रविमस्य = चिरमस्य. ५।५६ उपात्तवर्णैश्चरितैः.
५।५८ स्वहस्तालिखि०. ५।६१ अस्त्राकुलम्. ५।६८ विकीर्णकेशास्थिपरेत०.
५।७१ पिनाकिनः = कपालिनः कुन्तकः । महिमभट्टः, मम्मटः टीकितारश्च.,
५।७४. भ्रूलतया०. ५।७७ स लोकनाथः, ५।७९ विलि० = विलु०.
५।८४ वाला स्त० = साग्रस्त० ५।८५ निक्षेपणाय = निक्षेप एव.
६।५ ०मोत्कर० = ०मोत्किर०, व्यो००षु = आकाशगङ्गास्रोतस्सु.
६।७ साक्षात् = शश्वत्
६।१५ अथ ते = प्रथमे । प्रथम इत्येव मूलः पाठः (द्र. ४०९ पृष्ठे टि.—४). सा. पाठमिमं न वेत्ति.
६।३६ मनसा सह मानसाः—सा. ६।४२ नक्तं सोपानपंक्तिषु—सा.
६।४४ कुसुमायुधः. दर्शकः = देशकः. ६।५२ कृतासन० = नीचासन०.
६।९३ चेरुः = चेलुः. ७।३ महापथं = चतुष्पथं, स्थानान्तरस्वर्ग
७।१४ आसन्न० = उपोढ०. ७।३० पुरशासनस्य = स्मरशासनस्य
७।३३ शङ्खान्तर० = नेत्रान्तर०.
७।४१ पतद्ग००ङ्गे = वहन् गाङ्गमिव प्रवाहम् ।
७।५१ स्ववाणचिह्नात् = स्ववाहवाहात्. ७।५७ रुद्धोऽपि न = रुद्धोऽपि च, वन्ध्यं = बद्ध्युं

७।६१ स्तनन्धयन्तं००गवाक्षम्' श्लोकः. ७।७५ ह्रीयन्त्रणामानशिरे मुहूर्तम्, ह्रीयन्त्रणाभिनशिरे मनोज्ञाम्.

७।८९ मुक्ताफलभक्ति०. ७।९३ कार्यं काल०.

७।९५ प्रमथ० = प्रथम० ८।१९ पूर्वोत्तरार्द्धविपर्यासोऽत्र क्वापि.

८।३२ विपरिवृत्तकण्ठयोः = विरहदीनकण्ठयोः, निघ्नयोः = भिन्नयोः ।

८।३३ आविभाति शरणाय गच्छतः सान्ध्यकर्मविषयेऽनुगृह्यते. ८।३६ ०मण्डलः

८।३८ ०दग्र = ०दग्नि०. ८।४० दूरलग्न०, ०जीवकुसुमेन.

८।४१ स्यन्दनस्य०० स्वरैः ८।४२ शिरोरुहैः०.

८।४५ वर्त्तिका० = वर्णिका०.

८।४६ भूभृता, ०रेषु चात्मनः, चास्तशिखरं विवस्वता.

८।४७ अद्रिराजतनये = पार्ष्णिमुक्तसुधा० शुद्धये = सिद्धये.

८।५२ सेवते = सेव्यते.

८।५३ शैल००स्थिताम् = भूमिलग्नमिव संप्रति स्थिताम्, भूमिलग्नमिव संप्रतिष्ठताम्

८।५७ शुद्धमाविल० = निम्नमुन्नत० महिमभट्टः

८।६४ सामिभिन्नतिमिरं, सप्रसादमिव = संप्रसीददिव

८।६८ प्रस्फुरद्भिरविकल्पसुन्दरि ! रचना० = ०गणना०

८।६९ ०भाव = ०भाग०. ८।७० सोढु०.

८।७२ तवालकाः ८।७३ योग्यतारया, पश्य तारया

८।७४ पाकपाण्डु०, प्रतिकृतिप्रसन्नयोः प्रतिकृतिप्रदीप्तयोः, निहिताक्षिण ।

८।७६ मुखं प्रान्तरक्त०, मुखं रक्तमेव मुखं मत्तमेव, मदः = मधुः,

८।७९ नेप्यतोः = वाञ्छतोः ८।८५ ०कैशिकैः = ०वंशिकैः.

८।८८ आकुलालकमपास्तचित्रकम्.

८।९१ तज्जलेभ्यः, तज्जलेषु । अत्र सा. प्रतौ पद्यम्—

अथो शिवश्चन्द्रसुचारुमौलिः सस्मार तत्रामरशिल्पिराजम् ।
चिकीर्षयागारवरस्य विष्णुर्मायां नु संसारसिसृक्षयेव ॥

## रघुवंशे

१।३४ गङ्गां भगीरथेनेव पूर्वेषां पावनक्षमाम् ।
ईप्सिता संततिं न्यस्ता तेन मन्त्रिषु कोशलाः ॥

१।५० आकीर्यमाणमासन्नविधिभिः समिधाहरैः ।
वैखानसैरदृश्याग्निप्रत्युद्गमनवृत्तिभिः ॥

१।७६ इमां देवीमृतुस्नानां स्मृत्वा सपदि सत्वरः ।
प्रदक्षिणक्रियातीतस्तस्याः कोपमजीजनः ॥

१।७९ पूर्वार्द्धे अवैमि तदवज्ञानाद् यत्नापेक्षो मनोरथः (व्यक्तिविवेके ४८५ पृष्ठे)

१।८१ स त्वमेकान्तरां तस्या मदीयां वत्स मातरम् ।
आराधय सपत्नीकः सा वां कामान्प्रदास्यति ॥

१।८३ ताम्रां ललाटजां रेखां बिभ्रती सा सितेतराम् ।
सन्ध्या प्राचीपदेनेव प्रतिभिन्ना हिमांशुना ॥

३।१ ततो विशांपत्युरनन्यसन्ततेर्मनोरथं किञ्चिदिवोदयोन्मुखम् ।
अनन्यसौहार्दरसस्य दोहदं प्रिया प्रपेदे प्रकृतिप्रियम्वदा ॥

३।२ शरीरसादादसमग्रभूषणा मुखेन साऽऽलक्ष्यत लोध्रपाण्डुना ।
स्थिताल्पतारां करुणेन्दुमण्डलां विभातकल्पां रजनीं व्यडम्बयत् ॥
मुखेन सा केतकपत्रपाण्डुना कृशाङ्गयष्टिः परिमेयभूषणा ।
स्थिताल्पतारां करुणेन्दुमण्डलां विभातकल्पां रजनीं व्यडम्बयत् ॥

३।८ दिनेषु गच्छत्सु मधूकपाण्डुरं तदीयमाश्याममुखं स्तनद्वयम् ।
समुद्गयोर्वारणदन्तकोशयोः बभार कान्तिं गवलापिधानयोः ॥

३।१७ समीक्ष्य पुत्रस्य चिरान्मुखं पिता निधानकुम्भस्य युवेव दुर्गतिः ।
मुदा शरीरे प्रबभूव नात्मनः पयोधिरिन्दूदयमूर्च्छितो यथा ॥

३।४० स्वेदाम्बुना मार्जय पुत्र लोचने ममैव येनेह तुरङ्गमीक्षसे ।
धेन्वा निशम्येति वचः समीरितं मुदं परामाप दिलीपनन्दनः ॥

४।२ न्यस्तशस्त्रं दिलीपं च तं च शश्रुवुषां पतिम् ।
राज्ञामुद्धृतनाराचे हृदि शल्यमिवार्पितम् ॥

४।१५ निर्वृष्टलघुभिर्मेघैः सवितुस्तस्य चोभयोः ।
वर्धिष्णवो दिशां भागान् प्रतापा यत्र रचितोः ॥?॥

४।२० तस्य गोप्तुर्द्विरेफाणां कर्णोत्पलनिपातिनाम् ।
स्वरसंवादिभिः कण्ठैः शालिगोप्यो जगुर्गुणान् ॥

४।२९ पुरोगैः कलुषास्तस्य सहप्रस्थायिभिः कृशाः ।
पश्चात् प्रयायिभिः पङ्काश्चक्रिरे मार्गनिम्नगाः ॥

४।४१ वायव्यास्त्रविनिर्धूतात्पक्षविद्वान्मदोदधेः ।
गजानीकात् स कालिङ्गं तार्क्ष्यः सर्पमिवाददे ॥

४।४२ च = व, वा, मा. ५१.२, मे. २.२०.

४।४७ आजानेयखुरक्षुण्णपक्कैलाक्षेत्रसंभवम् ।
व्यानशे सपदि व्योम कीटकोशाविलं रजः ॥

४।७० उ० विविशुस्तं विशांनाथमुदन्वन्तमिवापगाः ।

४।८८ यज्ञान्ते तमवभृथाभिषेकपूतं सत्कारैः शमितपराजयव्यलीकाः ।
आमन्त्र्योत्सुकवनितानिरुद्धचित्ताः स्वानि स्वान्यवनिभुजः पुरा व्यलीकान् ॥

५।४६ स भोगिभोगाधिकपीवरेण संवेष्टितार्धप्रसृतेन दीर्घान् ।
प्रतिक्षिपंस्तीरमुखः सशब्दं हस्तेन वारीपरिघानिवोर्मीन् ॥

५।५७ गान्धर्वमस्त्रं तदिदः प्रतीच्छ प्रयोगसंहारविभक्तमन्त्रम् ।
प्रस्वापनं नाम यतः प्रहर्तुर्न चारिहिंसा विजयः स्वहस्ते ॥

५।६७ निद्रावशं त्वयि गते शशिना कथञ्चि-
दात्मानमाननरुचा भवती वियुज्य ।
लक्ष्मीर्विभातसमयेऽपि हि दर्शनेन
पर्युत्सुका प्रणयिनी निशि खण्डितेव ॥

५।६९ मन्दं विवाति हिमसंभृतशीतभावः
संसृज्यते सरसिजैररुणांशुभिन्नैः ।
सौरभ्यमीप्सुरिव ते मुखमारुतस्य
यन्नो गुणान् प्रतिनिशापरिणामवायुः ॥

५।७० उ० संलक्ष्यते दशनचन्द्रिकयानुविद्धं
बिम्बोष्ठलब्धपरभागमिव स्मितं ते ॥

५७५ इति स विहितनिद्रस्तल्पमल्पेतरांशः
सुरगज इव गंगासैकतं सुप्रतीकः ।
परिजनवनितानां पादयोर्व्यापृतानां
वलयमणिवदिष्टं प्रच्छदान्तं मुमोच ॥

६।१ स तत्र मञ्चेषु विमानकल्पेष्वाकल्पसंमूर्च्छितरूपशोभाम् ।
सिंहासनस्थान् नृपतीनपश्यत् यूपान् प्रशस्तानिव हैमवेदीन् ॥

६।३४ उ० दिवापि जालान्तरचन्द्रिकायां नारीसखः स्पर्शसुखानि भुङ्क्ते ॥

६।५४ रणेष्वमित्रीणतया प्रकाशः शरासनज्यानिकषौ भुजाभ्यां ।
विस्पष्टरेखौ रिपुविक्रमाग्नेर्निर्वाणमार्गाविव यो बिभर्ति ॥

६।५९ अथाधिगम्योरगराजकल्पं पतिं पुरस्योरगपूर्वनाम्नः ।
आचारपूतोभयवंशदीपं शुद्धान्तरक्ष्या जगदे कुमारी ॥

६।७५ वाणिनीनां = पाणिनीनाम् इति पाठे पणन्ते व्यवहरन्ते तच्छीलाः ।

७।८ स्तनन्धयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती ।
संप्रस्नुताभ्यां पदवीं स्तनाभ्यां सिषेच काचित् पयसागवाक्षात् ॥

७।२३ पू० तयोः समापत्तिषु कातराणि किञ्चिद् व्यवस्थापितसंहृतानि ।

७।३८ नेत्र क्रमेणेति पाठे रेणोरंशुकतुल्यतोत्प्रेक्षागम्या, सा च सुभगापि स्वतः सुभगेऽनुक्रमवाक्यार्थेऽन्तर्गङ्गूयति । अत एव 'स्थिताः क्षणम्' इत्यादिषु नास्त्यलङ्कारनिवेशराभसी महाकवेः ।

७।४८ ललाटबद्धभ्रुकुटीतरङ्गैस्तनुत्यजां दन्तनिपीडितोष्ठैः ।
आतस्तरे भल्लनिकृन्तकण्ठैर्हुङ्कारगर्भैर्द्विपतां शिरोभिः ॥

८।१० अथ वीक्ष्य गुणैः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया वशिनः ।
पदवीं परिणामदेशिनीं रघुरादत्त वनान्तगामिनीम् ॥

८।१८ नयचक्षुरजो दिदृक्षया पररन्ध्रस्य ततान मण्डले ।
हृदये समरोपयन्मनः परमं ज्योतिरवेक्षितुं रघुः ॥

८।२५ पू० (i) विदधे विधिरस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित् ।
(ii) वितान समं पुरोधसा क्रतुमन्त्यं पृथिवीशतक्रतोः ॥ व० च०

८।५१ सुरतश्रमवारिबिन्दवो न तु तावद्विरमन्ति ते मुखे ।
स्वयमस्तमितास्यहो बत क्षयिणां देहभृतामसारता ॥

८।५९ विभ्रमाः = विभ्रमः, चेष्टितम् ।

८।६२ चरणानुग्रहदुर्लभं तव ।

८।८५ रुदितेन न सा निवर्तते नृप तत्तावदनर्थकं तव ।
न भवाननुसंस्थितोऽपि तां लभते कर्मवशा हि देहिनः ॥

९।११ जघननिर्विषयीकृतमेखलाननुचिताश्रुविलुप्तविशेषकान् ।
स रिपुदारगणानकरोद् बलादनलकानलकाधिपविक्रमः ॥३२॥[1]

९।१२ स्फुरितकोटिसहस्रमरीचिना समचिनोत् कुलिशेन हरिर्यशः ।
स धनुषा युधि सायकवर्षिणा स्वनवता नवतामरसाननः ॥

९।२४ हिमविवर्णितचन्दनपल्लवं विरहयन् मलयाद्रिमुदङ्मुखः ।
विहगयोः कृपयेव शनैर्ययौ रविरहर्विरहध्रुवभेदयोः ॥२५॥

९।३० दशनचन्द्रिकया व्यवभासितं हसितमाधवगन्धि मधोरिव ।
बकुलपुष्पमसेव्यत षट्पदैः शुचिरसं चिरसंचितमीप्सुभिः ॥३०॥

९।३१ अत्र यत्र पाठान्तरपद्यम् 'उपहित'मि'-त्यादि तदपि र ७।६३-१३।९-समानार्थकमिति मूलमेव ।

९।३३ गमयितुं प्रभुरेप सुखेन मां न महतीं बत पान्थवधूजनः ।
इति दयात इवाभवदायता न रजनी रजनीशवती मधौ ॥३८॥

---

१. अत्र श्लोकान्ते दत्तया संख्यया सहात्र मुद्रितेन नवमसर्गीयेण पद्येन पद्यमिदं संवादमञ्चतीत्यर्थः ।

९।३६ तिलकमस्तकहर्म्यकृतास्पदैः कुसुममध्वनुषङ्गसुगन्धिभिः ।
कलमगीयत भृङ्गविलासिनां स्मरयुतैरयुतैरबलासखैः ॥४१॥

९।३७ लघयति स्म न पत्यपराधजं न सहकारतरुस्तरुणीधृतम् ।
कुसुमितो नमितोऽलिभिरुन्मदैः स्मरसमाधिसमाधिकरोपितम् ॥३३॥

९।३८ गमयितुं प्रियसंजनितां व्यथामसहया सह यामवती स्त्रिया ॥३८॥

९।४२ अनलसान्यभृतानलसान्मनः कमलधूलिभृता मरुतेरिता ।
कुसुमभारनताध्वगयोषितामसमशोकमशोकलताऽकरोत् ॥२८॥

९।६६ द्रुतमन्वयत क्वचिच्च यूथं चमराणां शरलग्नवालधीनाम् ।
नृपतीनिव तान्निनाय शान्ति सितवालव्यजनैर्वियोज्य च ॥

९।८२ तदर्थमर्थज्ञ गते गतत्रपः किमेष ते वध्यजनोऽनुतिष्ठतु ।
स वह्निसंस्कारमयाचतात्मनः सदारसूनोर्विदधे च तन्नृपः ॥
समेयिवान् रघुवृषभः स्वसैनिकैः स्वमन्दिरं शिथिलधृतिर्निवर्तितः ।
मनोगतं गुरुमृषिशापमुद्वहन् क्षयानलं जलधिरिवान्तकास्पदम् ॥

१०।२ मनोवंशश्चिरं तस्मिन्ननभिव्यक्तसंततिः ।
निमज्य पुनरुत्थास्यन्नदः शोण इवाभवत् ॥

१०।१७ एकः कारणतस्तां तामवस्थां प्रतिपद्यसे ।
नानात्वं रागसंयोगात् स्फाटिकस्येव दृश्यते ॥

१०।२२ 'वैकुण्ठ'-संज्ञकेऽर्चावतारे विष्णुरपि चतुर्मुखः । तत्र पुरुषः, सिंहः, वराहः, अश्ववृषयोरन्यतरच्चेति चतुर्णां चत्वारि मुखानि । खर्जूरवाह्यादिषु धङ्गदेवादिभिर्मूर्त्तिरेषा प्रत्यस्थापीति तदभिलेखस्य 'दधानामेकामि'—ति मङ्गलपद्येन प्रतीतचरम् । अत्र तत् प्रायेणासङ्गतमेव ।

११।१ सोऽभिगम्य किल गाधिसूनुना राममध्वरविघातशान्तये ।
याचितः शिशुमपि प्रजेश्वरस्तेजसां हि न वयः समीक्ष्यते ॥

११।७ रेजतुश्च सुतरां महौजसः कौशिकस्य पदवीमनुद्रुतौ ।
उत्तरां प्रति दिशं विवस्वतः प्रस्थितस्य मधुमाधवाविव ॥

११।४३ तेऽपि तूर्णमवगम्य शाम्भवमासमाहरणकर्मतत्पराः ।
स्वां सक्षिप्ततिकर्कमं(?)हि तच्चिक्षिपुर्दशरथात्मजाग्रतः ॥

११।७७ तन्मदीयमिदमाततज्यतां नीयतां विजयसाधनं धनुः ।

११।९१ स्वं निवेश्य किल धाम राघवे वैष्णवं विदितविष्णुतेजसि ।
स्वस्तिदानमधिकृत्य चाक्षयं भार्गवोऽथ निजमाश्रमं ययौ ॥

१२।२२ मृगमांसं ततः सीतां रक्षन्तीमातये धृतम् ।
पक्षतुण्डनखाघातैर्ववाधे वायसो बलात् ॥

१२।८० क्लेशेन महता निद्रां त्याजितं रणदुर्जयम् ।
राघणः प्रेपयामास युद्धायानुजमात्मनः ॥
स जघान तदादेशात् कपीनुग्राननेकशः ।
विवेश च पुरीं लङ्कां समादाय हरीश्वरम् ॥

१३।१५ निस्त्रिंशकल्पस्य निधेर्जलानामेपा तमालद्रुमराजिनीला ।
दूरादरालभ्रु विभाति वेला कलङ्कलेखामलिनेव धारा ॥

१३।४९ प्रियं सुरूढोऽनुगिरं तमालस्तव प्रवालोपचयेन यस्य ।
कर्णार्पितेनाकरवं कपोलमप्रार्थ्यकालागुरुपत्रलेखम् ॥

१३।५७ तमिस्रया शुक्लनिशेव भिन्ना कुन्दस्रगिन्दीवरमालयेव ।
कृत्तिर्हरेः कृष्णमृगत्वचेव भूतिः स्मरारेरिव कण्ठभासा ॥
दृश्यार्धया शारदमेघलेखा निर्धौतनिस्त्रिंशरुचा दिवेव ।
गवाक्षकालागुरुधूमराज्या हर्म्यस्थलीलेपसुधा नवेव ॥
तुषारसंघातशिला हिमाद्रेर्जात्यञ्जनप्रस्तरशोभयेव ।
पतत्त्रिणां मानसगोचराणां श्रेणीव कादम्बविहङ्गपङ्क्त्या ॥
नितान्तशुद्धस्फटिकाक्षयोगाद् वैदूर्यकान्त्या रसनावलीव ।
गङ्गा रवेरात्मजया समेता पुष्यत्युदारं परभागमेपा ॥ चा.

१४।१ प्रत्यागतौ तत्र चिरप्रवासादपश्यतां दाशरथी जनन्यौ ।
कुमुद्वती शीतमरीचिलेखे दिवेव रूपान्तरदुर्विभाव्ये ॥

१४।७१ केयं वने लक्ष्मण लक्ष्मणेति दीनाक्षरं रोदिति योपिदुच्चैः ।
आं ज्ञातमेपा जनकात्मजेति कविर्विचिन्त्यान्तिकमाजगाम ॥
कविः = मुनिः कुन्तकः

१५।६९ तदाकर्ण्य मुनेर्वाक्यं रामो राजीवलोचनः ।
समं हर्पविपादाभ्यां युयुजे नीतिकोविदः ॥

१५।९४ गच्छ लक्ष्मण शीघ्रं त्वं मा भूद् धर्मविपर्ययः ।
त्यागो वापि वधो वापि साधूनामुभयं समम् ॥

१६।१२ ज्वलन्मुखो०

१७।४६ प्रमदाक्षादिविमुखे चपलापि स्वभावतः ।
निकपे हेमलेखेव श्रीरस्मिन्ननपायिनी ॥

१८।१६ तस्माद् बभूवाथ दलाभिधानो दमान्वितः पद्मदलाभदृष्टिः ।
कुन्दान्तदन्तो रिपुवर्तिसिंहः पतिः पृथिव्याः कुलकैरवेन्दुः ॥

१८।१९ हित्वोपभोगांस्तपसोत्तमेन त्रिविष्टपं प्राप्तवति क्षितीशे ।
तदात्मजः सागरधीरचेताः शशास पृथ्वीं सकलां नृसोमः ॥

१९।५ ऋद्धिमन्तमधिकर्द्धिरुत्सवः पूर्वमुत्सवमपोहदुत्तरः ।

१९।१४ लोलमाल्य = लोलमान० वामनः

---

# श्लोक-सूची

परिशेषपद्याः श्लोका अत्र न गृहीताः ।